शास्त्रविशारद-जैनाचार्य-श्रीमद्-विजयधर्मसूरिभ्यो नमः ।

श्रीमद्–गुणविजयगणिविरचितम्–

# गद्यबद्ध-श्रीनेमिनाथचरित्रम् ।

इदं पुस्तकं श्रेष्ठि-अमरचन्द्रस्यात्मजेन अमृतलालेन संशोधितम् ।

तच्च मुम्बय्याम् ए. एम्. एन्ड कम्पनी, इत्यनया निर्णयसागरमुद्रणालये मुद्रयित्वा प्रकाशितम् ।

वीरसंवत् २४४६, विक्रमसं० १९७६, क्राइष्ट १९२०.

मूल्यम् ६-०-० रूप्यका.

Printed by Ramchandra Yesu Shedge, Nirnaya Sagar Press, 23, Kolbhat Lane, Bombay

Published by Manchand Velchand, Gopipura—SURAT

# विषयानुक्रमणिका ।

| विषयाः | पत्राङ्काः |
| --- | --- |



## पञ्चम-षष्ठभवौ ।

## षष्ठः परिच्छेदः ।

## नवमः परिच्छेदः ।



## दशमः परिच्छेदः ।

## द्वादशः परिच्छेदः ।



## त्रयोदशः परिच्छेदः ।

Gyan Shri ji

॥ ॐ नमोऽर्हद्भ्यः ॥ Maharaj

॥ ऐं नमः ॥

श्रीमद्-गुणविजयगणिविरचितम्-

# गद्यबद्ध—श्रीनेमिनाथचरित्रम् ।

## ॥ अथ प्रथमः परिच्छेदः ॥

जयति नाभिभवो जिननायको, य इह नाभिभवेन नमस्कृतः ।
सितवृषाङ्कविराजितसत्पदो, भुवि वृषाङ्ककृतप्रणतिः प्रभुः ॥ १ ॥
भुवनभानुनिभस्त्रिशलाङ्गजो, भविकजैकविकाशनकारणम् ।
वसुसुतोऽपि हि येन वशीकृतो, जयतु यः प्रथितः क्षितिमण्डले ॥ २ ॥
चिरतर जयतात् सुगुरुर्मम, प्रवचनाम्बुजभासनभास्करः ।

गुरुमुखाग्रहसन्ततिरद्भुता, मतिमिवोन्नमति प्रतिभेच्छया ॥ ३ ॥
पुण्डरीकादयः पृथ्वीनन्दनान्ता गणाधिपाः ।
ये पुनन्ति जगद् जाग्रत्केवलज्ञानभानवः ॥ ४ ॥
कनकनिर्मलकुण्डलधारिणी, कनकगर्भभवा भुवनेश्वरी ।
सुकविकामितपूरणतत्परा, जनयति प्रकटं सुखसञ्चयम् ॥ ५ ॥
तेषां पदाम्बुजद्वन्द्वं, प्रीतिदं परभक्तितः ।
प्रणम्य श्रीसरस्वत्या, मुहुर्मानसशर्मकृत् ॥ ६ ॥
नेमी रामश्च कृष्णश्च, जरासन्धो नराधिपः ।
चरितं गद्यबन्धेनैतेषां कुर्वे न दुर्घटम् ॥ ७ ॥ युग्मम् ।

इह हि राजर्षिश्रीकुमारपालभूपालप्रतिबोधककलिकालसर्वज्ञश्रीहेमचन्द्रसूरिविरचितचरिताऽनुसारेण एषा सम्बन्धरचना विधीयते, न तु स्वमतिकल्पनाकौशलेन । तत्र श्रीनेमिपूर्वभववर्णनम् । तथाहि—

## प्रथम–द्वितीयभवौ । १–२

जम्बूद्वीपे भरतक्षेत्रे महीमानिनीतिलकम् अचलपुरं नाम नगरमभूत् । तत्र राजा विक्रमधनाऽभिधानः सङ्ग्रामाऽङ्गणसुरतः । तस्य राज्ञो धारिणीनाम्नी प्रिया बभूवाऽतीव वल्लभा । सा राज्ञी अन्यदा

निशाशेषे भ्रमर-कोकिलसंसेवितं सहकारम् उत्पन्नमञ्जरीसमूहं स्वप्नेऽपश्यत्। तं च हस्ते लात्वा कोऽपि रूपवान् पुमानेवमवदद् यद्—'असौ सहकारोऽद्य तवाङ्गणे रोप्यते, कियत्यपि समये गते च नववारमुत्कृष्टोत्कृष्टफलदायी अन्यत्रान्यत्र निधास्यते'। एवं स्वप्नं लब्ध्वा सा वल्लभस्याऽकथयत्। तं स्वप्नं राजा स्वप्नपाठकैर्व्यचारयत्। तैस्तत्फलं प्रोक्तम्—'तव सुन्दरः सुतो भावी, परम् अन्यत्रान्यत्र रोपणेन नववारमुत्कृष्टोत्कृष्टफलदो भविष्यति तत्तु न जानीमः, एतत् केवलिगम्यम्'। तद्वचनं श्रुत्वा हृष्टा राज्ञी तत्प्रभृति विशेषतो गर्भं बभार, यथा पृथ्वी निधिमधरत्। अथ समये पवित्ररूपसम्पन्नं सा सुतं सुषुवे, यथा प्राची भुवनहर्षकारणं सूर्यं जनयति। महामहःपुरस्सरं राज्ञा सुतजन्मोत्सवं कृत्वा 'धन' इति नाम दत्तम्। माता-पित्रोर्मनोरथेन सार्धं स बालः प्रववृधे। धात्रीभिरिव पार्थिवैरुत्सङ्गादुत्सङ्गं नीयमानः कल्पद्रुम इव प्रवर्धमानः सोऽष्टवार्षिको जातः। ततः पाठकसमीपे सकलकलां स शिक्षितवान्। क्रमेण कन्दर्पक्रीडावनं यौवनं प्राप।

---

१ धण-धणवई १ सोहम्मे २, चित्तगई खयरो य रयणवई ३। माहिंदे ४ अपराजिय-पीइमई ५ आरणे तत्तो ६ ॥ १ ॥
संखो जसमई भज्जा ७ तत्तो अपराजिए विमाणम्मि ८। नेमि-राईमई ९ चिय, नवमभवे दोवि वंदामि॥ २॥

---

* धन-धनवत्यौ १ सौधर्मे २, चित्रगति खचरश्च रतवती ३। माहेन्द्रे ४ अपराजित-प्रीतिमत्यौ ५ आरणे ततः ६ ॥ १ ॥
शङ्खो यशोमती भार्या ७ ततोऽपराजिते विमाने ८। नेमि-राजीमत्यावेव ९ नवमभवे द्वे अपि वन्दे ॥ २ ॥

इतश्च कुसुमपुरनगरे सिंहनामा पृथ्वीपतिर्वर्तते समरकर्मयशस्वी महौजस्वी। तस्य चन्द्रलेखासदृशी विमला विमलानाम्नी पट्टराज्ञी। तत्कुक्षिसमुत्पन्ना धनवती कन्याऽस्ति, सा रति-प्रीति-रम्भादिरूपजैत्री कलाकलापपेटी। अन्यदा वसन्ते समागते सखीभिः परिवृता उद्यानं ययौ। तदुद्यानम् अनेकसहकार-राजादन-चम्पका-ऽशोक-पारिजातादिसद्वृक्षराजिविराजितं कलहंस-भ्रमर-सारसयुगलसंसेवितं गायद्वन-मालिनीमनोहरम् इक्षुवाटैर्व्यासम्। एवंविधे कानने विविधविनोदान् विलोकयन्ती अशोकतरोस्तले चित्रपट्टीव्यग्रहस्तमेकं चित्रकरं ददर्श। तां चित्रपट्टिकां तस्माद् धनवत्याः सखी कमलिनी बलादग्रहीत्। तस्यां पट्टिकायां तयैकं चित्ताह्लादकरं नररूपं दृष्टम्। तेन रूपेणाऽतीव सा विस्मिता सती चित्रकर-मूचे—'भो भद्र! कस्येदं रूपम्?, ईदृशं तु सुरा-ऽसुर-नरेषु न संभाव्यते!। अथवा स्वनिपुणत्वं दर्शयितुं स्वबुद्ध्या खलु त्वमलिखः, यतो बहुजनघटनश्रान्तस्य जराजर्जरीभूतस्य विधातुरीदृशरूपकरणशक्तिः कुतो भविष्यति?'। अथ चित्रकरो हसित्वाऽवदत्—'भो मृगलोचने! यथादृष्टलिखनीयेऽत्र चित्रकर्मणि लव-मात्रमपि मम कौशलं नास्ति। अयं हि चित्रपट्टिकासंस्थितो नरो यो मयाऽलेखि सोऽचलपुरस्वामिविक्रम-धनपुत्रो धननामाऽस्ति। मया तु मन्दबुद्ध्या चित्रितः, परं साक्षाद् यस्तं प्रेक्ष्य पुनरिदं प्रतिबिम्बं पश्यति स मां चित्रकरं वारंवारं निन्दति। त्वया तु स न दृष्टः, अतो मया लिखितं दृष्ट्वा कूपमण्डूकवद् अहो! विस्मयसे। भो भद्रे! सुराङ्गना अपि तस्य रूपं दृष्ट्वा मुह्यन्ति तदा मानुषीणां का कथा?। मया तु

स्वलोचनविनोदार्थं चित्रितः'। एवं सर्वव्यतिकरं तत्रस्था धनवती शुश्राव, पुनर्यावद् ददर्श तावत् कन्दर्पबाणैः शिथिलीकृता। तच्चित्रं कमलिन्याऽतीव प्रशस्य लोचनविनोदाय मार्गयित्वा गृहीतम्। ततः कमलिनी गृहं गन्तुं प्रारेभे, तया समं धनवत्यपि स्वगृहं गता; परं तत्कालं शून्यहृदया समजनि। तत्प्रभृति रतिं क्वापि न प्राप, यथा राजहंसी मरुमण्डलं गता। किं बहुना ?, वनादानीता हस्तिनीव क्षुधां तृषां च न जानाति, निशायामपि न शेते। धनरूपं लिखितं कीर्तितं च स्मारं स्मारं सा गल्लहस्तं चिन्तया न मुमोच। धनकुमारध्यानवशतः सा यद्यत् किञ्चिदचेष्टत तत्तत् तदापि जन्मान्तरकृतमिव नाऽस्मरत्। यथा योगिनीष्टदेवतां निर्धनश्च यथा द्रव्यं ध्यायति तथा सा एकं धनमेव दध्यौ।

एवंविधां तां धनवतीं विलोक्य अन्यदा कमलिनी पप्रच्छ—'हे कमललोचने! त्वं कया पीडया बाध्यसे यद् ईदृशी दुर्बलाऽसि ?'। तदा धनवती प्राह—'भोः कमलिनि! बाह्यो जन इव त्वं मां किं पृच्छसि ?, न जानासि स्वरूपम् ?। त्वं तु मम द्वितीयं हृदयं वर्तसे, मम जीवितव्यमसि, अनेन प्रश्नेनाऽहं लज्जिताऽस्मि'। कमलिनी जजल्प—"भो मानिनि! त्वयाऽहमुपालब्धा तद् युक्तम्, तव मनःशल्यं जानामि यद् धनवाञ्छासत्क उत्तुङ्गो मनोरथस्तव हृदयेऽस्ति, आलेख्यदर्शनादेव धनमिच्छसीति मया निर्णीतम्। यद् अज्ञयेव मया त्वं पृष्टा तद् हास्यमात्रम्। मया तु स्थाने तवानुरागं ज्ञात्वा एको ज्ञानी पृष्टो यद्—'किं मम सख्याश्चिन्तितो वरो भावी ?'। तेन प्रोक्तम्—'भावी'। ततस्त्वं धीरा भव, शीघ्रं ते मनोरथः

सेत्स्यति" । तयां इत्याश्वासिता धनवती धैर्यं भेजे । ततः पितरं वन्दितुं दिव्यवस्त्रालङ्कारधारिणी धनवत्यगात् । तां दृष्ट्वा नन्दितः पिता विसृज्य मनसि दध्यौ—'इयं मम सुता वरार्हा जाता, कोऽमुष्या अनुरूपः पतिर्भविता ?' । नृपतिरेवं यावच्चिन्तयति तावत् पुरा प्रेषितः स्वदूतो विक्रमधननृपसमीपात् समागात् । राजकार्यं सर्वमाख्याय स्थितः सन् सिंहराजेन स दूतः प्रोक्तः—'त्वया तत्र किमाश्चर्यं दृष्टम् ?' । तदा सोऽवदत्—'मया विक्रमधननृपसुतरूपं दृष्टम्, तत्सदृशं रूपं सुर-नर-विद्याधरेषु नास्ति। तदैव मया चिन्तितम्—धनवत्या योग्योऽयं वरः, सृष्टिकर्तुः प्रयासोऽनयोः सङ्गमेन सफलो भवतु'। इति श्रुत्वा राजा प्रीतोऽब्रवीत्—'अहो ! त्वं स्वयं मत्कार्यचिन्तकोऽसि, पुत्रीवरचिन्तासागरे निमग्नोऽहं त्वया अद्योद्धृतः। पुनस्तत्र त्वं धनस्य धनवतीसम्प्रदानाय गच्छ, ममाज्ञया च विक्रमधनं प्रार्थयस्व'। तदा धनवत्या लघुभगिनी चन्द्रवती पितरं वन्दितुं समागताऽऽसीत्, तया सर्वः समाचारो ज्ञातः। दूतः स्वगृहमगमत्। चन्द्रवत्यपि मुदिता एत्य धनवत्यै दूतालापपूर्वकं सर्वमकथयत्। धनवती कथयितुं लग्ना—'भो भगिनि ! त्वद्वचनेनाऽहं न प्रत्येमि, अज्ञानेन त्वं वदसि, परमार्थं न जानासि। स दूतः केनचिदपरेण कार्येण प्रेषितो भविष्यति, त्वं तु मुग्धे ! मत्कार्यं ज्ञातवती !'। तदा कमलिनी जगाद—'सखि ! स दूतोऽद्याप्यत्र तिष्ठति, तन्मुखाद् जानीहि, यतो हस्ते कङ्कणे सति आदर्शप्रयोजनं किम् ?'। इत्युक्त्वा तस्या भावं विज्ञाय कमलिनी तं दूतमानयत्। धनवती यथार्थं तन्मुखात् सकलं श्रुत्वा मनसि गाढं हृष्टा। तया धननामा-

क्षितो लेखो लिखित्वा तस्य दूतस्य समर्पितः । ततः स दूतोऽचलपुरेऽगात् । विक्रमधनस्तं शीघ्रं पुनरागतं दृष्ट्वा विस्मितः सखेदश्चोचे—'सिंहभूपतेः कुशलमस्ति ?, त्वं गत्वा पुनः शीघ्रमेव कथं समागतोऽसि ?, अस्मन्मनो विकल्पैः परिपीड्यते'। दूतः प्राह—'हे राजन्! सिंहनृपस्य कुशलमस्ति, परं शीघ्रप्रेषणकारणं शृणु—तस्य सुता धनवती तव पुत्राय धनाय दातुमहं सलेखः प्रेपितः । यथा धनकुमारो रूपवान् तथैव सा रूपवती, अनयोर्योगः शीघ्रं घटमानतरो भवतु । पुराऽपि युवयोर्मिथः स्नेहो वर्तते, अनेन सम्बन्धेन पुनर्विशिष्टो भविष्यति; यथा मेघेन तरवो विस्तीर्णा भवन्ति'। 'आम्' इति राज्ञोदित्वा स दूतः सत्कृत्य विसृष्टः । दूतेन कुमारो वनखण्डे श्रुतः, तत्र द्वारपालनिवेदितः स गतः । नत्वोपविश्य च स्वकीयागमनकारणं कथयित्वा लेखोऽर्पितः । धनेन वाचितः । तन्मध्ये चैकः श्लोकः । स चाऽयम्—

"विशेपितश्रीः[1] शरदा, यौवनेनेव पद्मिनी । परिम्लानमुखी वाञ्छत्यादित्यकरपीडनम्" ॥ १ ॥

इमं श्लोकं स मनसि विभाव्य, 'ममोपरि एपा रागिण्यस्ति' इति मत्वा, तेन स्वयं लेखो लिखित्वा हारेण समं समर्प्य स दूतो विसृष्टः सन् स्वपुरमागतः । दूतेन स्वकीयनृपस्य सर्वं कथितम् । राजा हृष्टः । ततो दूतो धनवतीसमीपे गत्वा नत्वा च लेखं हारं च ददौ । सा मुद्रितं लेखं प्रस्फोट्य यावद् वाचयति तावद् एकं श्लोकं ददर्श । स चाऽयम्—

---

१ विशेपिता श्रीः—शोभा यस्याः सा ।

"यत् प्रमोदयते सूर्यः, पद्मिनीं करपीडनात्। सोऽर्थः स्वभावसंसिद्धो, न हि याच्ञामपेक्षते" ॥१॥

तं वाचयित्वा सा हृष्टा। दध्यौ च–'ममार्थोऽनेन श्लोकार्थेन खलु धनेन विभावितः,अयं च कण्ठन्यासाय स्वभुजलताश्लेषसत्यङ्कारो हारस्तेन मम समर्पितः' । एवं विचिन्त्य सा हारं निजकण्ठे निदधे, दूतं च पारितोषिकदानं दत्त्वा विससर्ज ।

अथ राजा तां पवित्रदिने वृद्धप्रधानैः सहितां परमर्द्धिसंयुक्ताम् अचलपुरे प्राहिणोत् । पाणिग्रहणाय यान्तीं धनवतीं माता विमला शिक्षां ददौ–'हे पुत्रि ! त्वं श्वशुरयोर्भर्तरि च देववद् भक्ता भूयाः । किं बहुना ?, सपत्नीषु सदाऽनुकूलत्वेन स्थेयम् । पत्युः प्रसादेऽनुद्धताऽपमाने च अविकारभाग् भूयाः' । इत्यादिस्वमातृशिक्षां शिरसि निधाय, विरहवेदनाऽश्रुमुखीं पुनः पुनः परिरम्भं वितन्वतीं तां प्रणम्य, शिविकामध्यारुह्य, च्छत्र-चामरसमन्विताऽचलपुरं प्रति चचाल । क्रमेण तत्र नगरे नागरिकैः साश्चर्यमीक्षिता धनकुमारस्य मूर्ता श्रीरिव स्वयंवरा समागात् । महामहःपूर्वकं महत्या सम्पदाऽनयोर्विवाहः संजातः । तस्य विवाहस्य विलोकनाय सुरेन्द्रा अपि समाययुः । तया नवोढया धनकुमारोऽधिकतरं रेजे; यथा क्रमुको नागवल्लया, यथा जलधरो विद्युता, यथा च मदनो रत्या शोभते । अथ धनस्तया सह रममाणः कमपि कालमेकमुहूर्तवद् अनयत् ।

अन्यदा सर्वालङ्कारविभूषितो रेवन्त इव तुरङ्गममारुह्य कुमारो वनं ययौ। तत्र चतुर्ज्ञानधरं वसुन्धरं नाम

मुनिं देशनां ददतं सोऽपश्यत् । तं भावतः प्रणम्य यथास्थाने चोपविश्य कर्णाऽमृतपारणसमां देशनां शुश्राव । विक्रमधन-धारिणी-धनवतीप्रमुखं कुटुम्बमप्यागत्य मुनिं च नत्वा देशनां श्रोतुं लग्नम् । देशनाप्रान्ते राजा विक्रमधनस्तं साधुं व्यजिज्ञपत्–'भोः क्षमाश्रमण ! धने गर्भस्थिते तस्य जनन्या स्वप्ने सहकारः प्रेक्षितः । तस्य चोत्कृष्टोत्कृष्टफलस्य नववारमन्यत्रान्यत्र रोपणं भविष्यति, एवं केनापि पुरुषेण कथितम् , एतदर्थं कथय । कुमारजन्मनाऽपि मयाऽन्यत् स्वप्नफलं तु ज्ञातम्' । इति राज्ञो वचनं निशम्य सम्यग्ज्ञानाय मनसोपयुज्य स साधुर्दूरे स्थितं केवलज्ञानिनं पृच्छति स्म। केवलिनाऽपि ज्ञानेन नवभवात्मकं श्रीनेमिचरित्रं तत्रस्थेनाऽऽख्यातम्। मनःपर्यवा-ऽवधिज्ञानाभ्यां स मुनिरपि ज्ञात्वा राजानमवादीत्—'भो नृप ! तव सुतो धनोऽनेन भवेन उत्कृष्टोत्कृष्टान् नव भवान् प्राप्स्यति । एतस्माद् भवाद् नवमे भवेऽरिष्टनेमिनामा इह भरतक्षेत्रे द्वाविंशस्तीर्थङ्करो यदुवंशे भावी' । इति मुनिवचः श्रुत्वा सर्वेऽपि हृष्टाः, जिनधर्मे च सर्वेषां तीव्रतरो भावोऽभूत् । ततो विक्रमधनस्तं मुनिं नत्वा धनादिभिः सह स्वमन्दिरं ययौ, मुनिश्चाऽन्यत्र विहारमकरोत्। विविधविनोदेन अनेकक्रीडाभिर्धनवत्या समं धनो विषयसुखं दोगुन्दुकदेव इव बुभुजे ।

सोऽन्यदा धनवत्या सह मज्जनक्रीडां कर्तुं क्रीडासरोवरेऽगात् । तत्राऽशोकवृक्षमूले तृषाक्रान्तो मूर्च्छितस्तापेन पीडितः कोऽपि पतन् मुनिर्धनवत्या पत्युः प्रदर्शितः। स मुनिस्ताभ्यां दम्पतिभ्यामुपचारान् कृत्वा

पटूकृतः । पश्चात् स्वस्थं मुनिं नत्वा धन ऊचे–'अहो! मम भाग्यं फलितं यद् मरुभूमौ कल्पद्रुम इव मया त्वं प्राप्तः । अन्यच्च, हे साधुपुङ्गव ! तवेदृशी कुतोऽवस्था संजाता ?, यदि खेदो न जायेत तदा कथय' । साधुरब्रवीत्–'भो राजन् ! परमार्थतस्तु खेदः संसारवासेन, अयं तु विहारसम्भवः खेदः शुभाय । अहं मुनिचन्द्रनामा गुरुणा बहुसाधुभिश्च सह पुरा विहारं कर्तुं चलितः सन् सार्थाद् भ्रष्टो दिग्मूढोऽभवम् । ततो भ्रमन् इहागतो मूर्च्छया पतितो भवद्भिः सज्जीकृतः । तव धर्मलाभोऽस्तु । हे नृप ! यथा क्षणान्नष्टसंज्ञोऽहं जातस्तथा सर्वेषामियमेव गतिरिति मत्वा शुभं वाञ्छता नरेण धर्मः कर्तव्यः' । ततस्तदुचितं सम्यक्त्वप्रधानं गृहिधर्मं मुनिराख्यत्। तच्छ्रुत्वा धनवत्या सार्धं सम्यक्त्वमूलं गृहस्थधर्मं धनोऽङ्गीचकार । स्वगृहे च नीत्वा धनेन स साधुरन्न-पानैः प्रत्यलाभि, धर्मश्रवणार्थं च साधुः कियत्कालं तत्रैव रक्षितः । पश्चाद् धनाज्ञां मार्गयित्वा मुनिः स्वगच्छेनाऽमिलत् । धनवती-धनौ एकधर्मरतत्वेन विशेषेण प्रीतिभाजौ जातौ । पित्राऽन्तसमये स्वराज्ये धनोऽभिषिक्तः सन् पृथ्वीं पालयामास ।

अन्यदा उद्यानपालकेन विज्ञप्तम्—'हे स्वामिन्! आयातपूर्वी[1] वसुन्धरमुनिः समागतोऽस्ति' । राजापि हृष्टो धनवत्या सह गत्वा तं ववन्दे, देशनां च श्रुत्वा भवविरक्तः संजातः । ततो निजराज्ये धनवतीकुक्षिसम्भवं जयन्तकुमारं स्थापयामास, स्वयं तु धनवतीयुक्तो दीक्षामाददे । द्वौ धनवान्धवावपि धन-

१ पूर्वमायात आयातपूर्वी ।

दत्त-धनदेवनामानौ तेन साकं चारित्रं जगृहतुः । धनर्षिर्गुरुसमीपे तपस्तेपे, शास्त्राभ्यासं च कुर्वन् गीतार्थो जातः । गुरुणा सूरिपदे स्थापितः । बहून् राज्ञः प्रतिबोध्य दीक्षां च दत्त्वा, धनवत्या सह पर्यन्तेऽनशनमग्रहीत् । मासान्ते विपद्योभौ सौधर्मे शक्रसामानिकौ सुरौ संजातौ। धनवान्धवाव्रपि धनदत्त-धनदेवौ सौधर्मे सुरावभूताम्। अपरेऽपि धनेन प्रतिबोधिता नृपादयोऽखण्डितव्रताः सौधर्मे देवा जाताः।

## तृतीय–चतुर्थभवौ । ३–४

इतश्चात्रैव भरतक्षेत्रे वैताढ्यपर्वते उत्तरश्रेण्यां सूरतेजःपुरे सूरनामा खेचरचक्री अभूत् । तस्य विद्युन्मतीनाम्नी राज्ञी । तस्याः कुक्षौ स्वायुः प्रपूर्य धनजीवः समुत्पन्नः । पूर्णे च समये सम्पूर्णलक्षणं सुतं विद्युन्मती अजीजनत् । पवित्रदिने महाडम्बरपूर्वकं पिता स्वपुत्रस्य चित्रगतिरिति नाम ददौ । क्रमेण वर्धमानः सकलकलाज्ञाता जातः । अथ धनवतीसम्बन्धः—तत्रैव वैताढ्ये दक्षिणश्रेण्यां शिवमन्दिरपुरेऽनङ्गसिंहो राजाऽभवत् । तस्य प्रिया शशिप्रभा । तस्याः कुक्षौ धनवतीजीवः समुत्पन्नः । समये सा राज्ञी पुत्रीं सुषुवे; सा च बहूनां पुत्राणामुपरि संजाता तेनाऽतीव वल्लभा जाता । शुभेऽह्नि तस्या रत्नवतीति नामस्थापना कृता । सा च जलेन सिक्ता वल्लीव ववृधे । स्तोककालेन स्त्रीजनोचिताः सकलाः कला जग्राह । क्रमेण यौवनं प्राप । राज्ञा वरचिन्तयैको नैमित्तिकः पृष्टः । सोऽवदत्–'हे राजन् ! यस्ते खड्गरत्नमाच्छेत्ता, यस्य च सिद्धायतनं वन्दमानस्योपरि सुरैः कृता पुष्पवृष्टिर्भविष्यति स तव दुहितुः पाणिग्रहणं

करिष्यति'। राजा चिन्तयति—'ममाऽपि खड्गमाच्छेत्ता भविष्यति स तु बलवान् सम्भाव्यते, अहो! मम पुत्र्या भाग्यम्!'। इति प्रीतो मनसि विचिन्त्य तं नैमित्तिकं सन्तुष्टीकृत्य व्यसृजत्।

इतश्चात्रैव भरतक्षेत्रे चक्रपुरनगरे सुग्रीवो राजा। तस्य पत्न्यौ यशस्वती-भद्रे वर्तेते। उभयोः सुमित्र-पद्मनामानौ नन्दनौ जातौ। सुमित्रो गुणवान्, पद्मस्तु निर्गुणः। भद्रया चिन्तितम्—'एतस्मिन् जीवति सति मम पुत्रस्य राज्यं न भावि'। इति विचार्य सा दुष्टधीर्भद्रा सुमित्रस्योत्कटं विषं ददौ। तेन विषेण स मूर्च्छितः सन् भूमौ न्यपतत्। सुग्रीवः प्रधानसहितस्तत्रागतः। मन्त्र-तन्त्राद्यनेकश उपायाः कृताः, परं विषवेगशान्तिर्नाऽभूत्। लोके 'भद्रा विषमदात्' इति प्रसिद्धं जातम्। भीत्या भद्रा नंष्ट्वा काऽप्यगात्। राजा पुत्रजीवितार्थं जिनार्चां शान्तिकादिकं चाऽकरोत्। पुत्रगुणान् स्मारं स्मारं राजा व्यलपत्, सामन्ता मन्त्रिणोऽपि च सर्वे निरुपायाः समभवन्। अत्रान्तरे क्रीडया गगने विचरन् तत्र चित्रगतिरागात्। दृष्टं शोकातुरं नगरम्। विषव्यतिकरं च ज्ञात्वा विमानादुत्तीर्य तं कुमारं विद्यामन्त्रितजलेन सोऽभ्यषिञ्चत्। तत्कालं 'किमेतद्?' इति पृच्छन् कुमारो गतविषवेग उत्थितः। राजा जगाद—'भोः कुमार! तव विमात्रा विषं दत्तमभूत्, परम् अकारणबन्धुनाऽनेन महापुरुषेण त्वं विगतविषो विहितः'। एवं श्रुत्वा कृताञ्जलिः सुमित्रश्चित्रगतिं प्रोचे—'भो महापुरुष! परोपकारकरणेन तव कुलं मया ज्ञातं, तथापि स्वकुलख्यापनेन ममोत्कण्ठां पूरयस्व; यतो महतां कुलं श्रोतुं कस्य न स्पृहा?'। अथ समीपस्थायी चित्रगतेः

प्रधानस्य पुत्रः सर्वं वंशादिकमकथयत् । तच्छ्रुत्वा सुमित्रो हृष्टः सन् कथयितुं लग्नः—'भो अकारणबन्धो ! ममाऽद्य विपदायिन्या विषेण चोपकारः कृतः, अन्यथा तव दर्शनं मम कुतोऽभविष्यत् ? । त्वं केवलं मम जीवितमात्रं नाऽदाः, किन्तु प्रत्याख्यान-नमस्कारहीनोऽहं दुर्गतौ पतन् रक्षितः । तव जीवितोपकारकारिणोऽद्य किं प्रत्युपकारं करोमि ?' । इति प्रोच्य स्थितवन्तं सुमित्रं चित्रगतिराह—'सुमित्र ! निजपुरीं प्रति गन्तुमिच्छाऽस्ति' । तदा सुमित्रोऽवदत्—'भ्रातः ! सुयशा नाम केवलज्ञानी सम्प्रति आसन्नप्रदेशेषु विहरन्नस्ति, क्रमेण तमिहागतं वन्दित्वा तव गन्तुमुचितम्' । चित्रगतिः 'आम्' इति कथयित्वा तेन समं क्रीडन् कियतोऽपि हि दिवसान् युगलजात इवाऽनैषीत् । अन्येद्युरागतं केवलिनं ज्ञात्वा वन्दनाय तौ द्वौ गतौ । केवली वन्दितः । सुग्रीवेणाऽप्यागत्य प्रणतः । सर्वेऽपि देशनां शुश्रुवुः । देशनान्ते च चित्रगतिर्मुनिमब्रवीत्—'कृपापरैर्भगवद्भिरर्हद्धर्मज्ञाताऽहं साधु कृतः । श्रावकधर्मं कुलक्रमागतमपि भूमिगतं निधिमिवाऽहं नाऽज्ञासिषम्, भाग्ययोगेन सुमित्रो मम मिलितो येन युष्मत्पादा दर्शिताः' । इत्युक्त्वा तस्य केवलिनः समीपे सम्यक्त्वमूलो गृहिधर्मस्तेन प्रत्यपादि । ततो राजा सुग्रीवः केवलिनं नत्वा पप्रच्छ—'भो भगवन् ! मत्पुत्रस्य विषं दत्त्वा सा दुष्टा भद्रा क्व गता ?' । मुनिरूचे—"यावत् सा पलाय्य अटव्यां गता तावद् भिल्लैर्भूषणादिकं गृहीत्वा पल्लीपतेरर्पिता । पल्लीपतिनाऽपि वणिक्पार्श्वे विक्रीता । तस्य पार्श्वादपि नष्टा, गच्छन्ती महादवाग्निना ज्वलिता सती रौद्रध्यानेन मृत्वा प्रथमे नरके ययौ । तत-

श्रुत्वा चण्डालगृहिणी भविष्यति। तत्रापि गर्भे संजाते सपत्न्या सह क्लेशो भविता, तया कर्त्तिकया हता तृतीयं नरकं गत्वा तिर्यग्योनौ गमिष्यति। इत्याद्यनन्तभवेषु स जीवो दुःखमनुभविष्यति, कारणं तु सम्यग्दृष्टेर्भवत्सुतस्य विषदानम्"। इति केवलिवचनानि निशम्य सुग्रीवराजो भवोद्विग्नो दीक्षाऽभिमुखो जातः। अथ सुमित्रो राजानं प्रणम्येदमभ्यधात्—'मां धिग् धिग् यन्मातुरीदृक्कर्मनिमित्तमहमभवम्। हे सद्गुरो! तत् त्वं मां कृपां कृत्वा भवसागरात् समुद्धर'। इति वदन्तं तमाज्ञया प्रतिषिध्य राज्ये निवेश्य राजा स्वयं दीक्षां जग्राह। केवलिना समं सुग्रीवर्षिरचलत्, सुमित्रस्तु जनकमभिवन्द्य चित्रगतिना सह स्वपुरमागमत्। भद्रापुत्राय पद्माय सुमित्रः कतिचिद् ग्रामान् ददौ, परं तैस्त्वसन्तुष्टो दुर्विनीतो निःसृत्य स कुत्रचिद् अगात्। चित्रगतिः सुमित्रं कथञ्चिदपि आपृच्छय स्वपुरं प्रति चलितवान्। क्रमेण पित्रोर्मिलितः। हर्षप्रकर्षः संजातः, विशेषेण देवपूजादिपुण्यकार्यरतत्वेन पित्रोर्वल्लभोऽभूत्।

इतश्च सुमित्रभगिनीं कलिङ्गदेशभूपालगेहिनीम् अनङ्गसिंहनृपपुत्रो रत्नवतीभ्राता कमलो हृतवान्। भगिनीहरणेन सुमित्रं शोकातुरं खेचरमुखात् चित्रगतिः सुहृदज्ञासीत्। ततः सुमित्रसमीपे स्वखेचरान् प्रैषीत्। तैर्गत्वा 'युष्मद्भगिनीम् अस्मत्स्वामी समानेष्यति' इति वचनेनाश्वासितः। चित्रगतिः शीघ्रमेव सुमित्र स्वसृशुद्धिहेतवे समुत्तस्थे। परम्परया कमलेन हृतां तां ज्ञात्वा सर्वबलेन शिवमन्दिरनगरे ययौ। तत्र कमलं कमलखण्डं गजेन्द्रवद् उन्मूलयामास। सुतपराभवं ज्ञात्वाऽनङ्गसिंहः सिंहनादं कुर्वन् सेनया समं दधावे।

विद्या-सैन्य-भुजबलैः कृत्वा महान् सङ्ग्रामस्तयोरभूत् । अनङ्गसिंहो वैरिणं दुर्जेयं मत्वा देवतादत्तं कुलक्रमागतं खड्गरत्नमस्मार्षीत्, तत्कालं च ज्वालाशताकीर्णं दुष्प्रेक्ष्यं खड्गरत्नं हस्ते आपतत् । तेन सबलो भूत्वा चित्रगतिं प्रोचे—'रे रे बालक ! दूरमपसर, अन्यथा तु तव शिरः कमलनालमिव च्छेत्स्ये' । तदा चित्रगतिः प्राह—'रे रे मूढ ! लोहखण्डेन कथं गर्वं वहसि ?, त्वां धिग् यो निजभुजबलवर्जितः' । इति प्रोच्य चित्रगतिर्विद्ययाऽन्धकारं चक्रे, सर्वेऽपि वैरिणश्चित्रलिखिता इवाऽस्थुः, किमपि न पश्यन्ति । अथ तस्यांऽनङ्गसिंहस्य खड्गं चित्रगतिः शीघ्रमाच्छिदत्, सुमित्रभगिनीं च गृहीत्वा जगाम । क्षणान्तरेऽन्धकारे गतेऽनङ्गसिंहः स्वकरे खड्गं नाऽपश्यत्, रिपुं च तथैव नाऽवालोकयत् । ततः क्षणं विषादं प्राप, परं पश्चान्नैमित्तिकवचनं स्मृत्वा 'खड्गहर्ता मम जामाता भावी' इति हेतुना हृष्टो मनस्येवं चिन्तयति—'स मया कथं ज्ञास्यते ?' । पुनः स्मृतिंगोचरीभूतं यत्—तस्य शिरसि सिद्धायतनवन्दने कुसुमवृष्टिर्भविष्यति । इति विचार्याऽनङ्गसिंहः स्वगृहं ययौ । चित्रगतिस्तामखण्डशीलां सुमित्रभूमिपतेर्भगिनीं नीत्वा समर्पयामास । सुमित्रस्यानन्दः प्रादुर्बभूव । चित्रगतेर्गुणान् वारं वारं वर्णयामास । सुमित्रः पुरापि भवाद्विरक्तोऽभूत्, अथ च भगिन्यपहारेण मदनविषमस्वरूपं ज्ञात्वा तस्य महद्वैराग्यं समभवत् । ततः स्वसुतं राज्ये न्यस्य सुयशःकेवलिसमीपे दीक्षामग्रहीत् । चित्रगतिस्तं सुमित्रं प्रणम्य स्वपुरेऽगात् । बुद्धिमान् सुमित्रो गुरोः पार्श्वे किञ्चिदूनानि नव पूर्वाण्यधीते स्म, ततो गुर्वाज्ञां गृहीत्वा चैकाकी विहरन् मग-

धेषु ग्रामाद् बहिः कायोत्सर्गेण स्थितवान् । तत्र वैमात्रेयः पद्मो भ्रमन्नागात् । तं ध्यानस्थितं गिरिमिव स्थिरं ददर्श । ततः पापिष्ठः पद्म आकर्णाकृष्टबाणेन तं मुनिं हृदये जघान, किं मातुर्मिलनाय नरकाभिमुखः कुधीः शम्बलमग्रहीत् ? । साधुर्मनसि दध्यौ—'एष स्वं नरके क्षिप्त्वा मां स्वर्गे प्राहिणोत्, ततो हितकर्ताऽस्मात् कोऽन्योऽस्ति ? । अस्मै च मया राज्यं न दत्तं, ततोऽस्यापकारः कृतः, तदेष क्षाम्यतु' । एवं धर्मध्यानं ध्यायन् नमस्कारस्मरणपूर्वकं तया वेदनया मृत्वा ब्रह्मलोके सामानिकः सुरः संजातः । पद्मः प्रणश्य गच्छन् कृष्णसर्पेण दष्टः सन् विपद्य सप्तमनरके गतः ।

अथ सुमित्रमरणेन बहुतरं शोकं कृत्वा महामतिश्चित्रगतिः सिद्धायतने यात्रां कर्तुं जगाम । तत्र बहवो विद्याधरा अमिलन् । अनङ्गसिंहोऽपि रत्नवत्या समं समाययौ । चित्रगतिर्भक्त्या शाश्वतार्हतां विचित्रां पूजां चक्रे । अथाऽवधिना ज्ञात्वा सुमित्रदेवस्तत्र समागात्, आगत्य च चित्रगतेरुपरि अमरैः सह पुष्पवृष्टिं व्यधात् । सर्वेऽपि खेचरा एवं चित्रगतेश्चमत्कारि स्वरूपं दृष्ट्वाऽतीवाश्चर्यं प्रापुः । अनङ्गसिंहोऽपि तं पुत्र्या वरमज्ञासीत् । सुमित्रदेवः प्रत्यक्षीभूय प्रोचे—'भोश्चित्रगते ! त्वं किं मामुपलक्षयसे नवा ?' । तदा चित्रगतिः प्राह—'त्वं महान् सुरः' । इति श्रुत्वा देवः स्वस्वरूपज्ञापनाय सुमित्ररूपं चक्रे । तं चित्रगतिः प्रीत्याऽऽलिङ्ग्य इति जगाद—'भो मित्र ! त्वत्प्रसादाद् मया धर्मः प्राप्तः' । सुमित्रोऽप्यभाषिष्ट—'भोश्चि-

---

विमातुर्भद्रायाः पुत्रः ।

त्रगते ! त्वन्माहात्म्यत इयम् ऋद्धिर्मया जीवितदानतः समासेदे, अन्यथा प्रत्याख्यान-नमस्कारहीनोऽहं मनुष्योऽपि नाऽभविष्यम्'। एवं तयोः परस्परं सुकृतशंसिनोः श्रीसूरचक्रिप्रमुखाः खेचराधिपाः प्रशशंसुः। तत्र चित्रगतिं रूप-गुणैरनुत्तरं प्रेक्षमाणा रत्नवती मदनबाणैर्विविधे। पुत्रीं तथाभूतां विलोक्य राजाऽनङ्गसिंहो व्यचिन्तयत्—'अहो! नैमित्तिकवचो मिलितम्, यतोऽनेन मम खड्गो हृतः, अस्योपरि पुष्पवृष्टिरप्यभवत्; अस्मिन् मत्पुत्र्या अनुरागश्चाऽभवत्, तस्माद् मत्पुत्र्या ज्ञानिप्रोक्तोऽयमेव वरो भवतु। अत्र देवस्थाने सम्बन्धादिकं वक्तुं न युक्तम्'। इति चिन्तयित्वाऽनङ्गसिंहः सपरिवारः स्वगृहमगमत्। सुमित्रसुरं खेचरांश्च सत्कृत्य चित्रगतिरपि पित्रा सार्द्धं स्वगृहं ययौ।

अथाऽनङ्गसिंहेन सूरचक्रिणं प्रति एकः प्रधानः प्रेषितः। स गत्वा तं प्रणम्य विज्ञपयामास—'हे स्वामिन्! तव सुतश्चित्रगतिर्मत्स्वामिपुत्री च रत्नवती उभे अपि रत्ने, ततो भवदाज्ञयाऽनयोर्योगः पाणिग्रहणेन मिलतु'। सूरचक्र्यपि तद्वचो हर्षभाक् प्रत्यपद्यत। ततस्तयोर्विवाहं महामहःपूर्वकमकार्षीत्। तया सह वैषयिकं सुखं चित्रगतिर्भेजे।

अथ धनदेव-धनदत्तजीवौ च्युत्वा मनोगति-चपलगतिनामानौ तस्याऽनुजौ बभूवतुः। ताभ्यां रत्नवत्या च सार्द्धं चित्रगतिर्नन्दीश्वरादिषु महातीर्थेषु यात्रां चक्रे। अन्यदा सूरचक्री चित्रगतिं राज्ये न्यस्य, दीक्षां गृहीत्वा परमपदं प्रपेदे। चित्रगतिरपि बहुविद्यानिधिरनेकशः खेचरपतीन् पत्तीकुर्वन् स्वां प्रजां

पालयामास। अन्यदा मणिचूडनामा तस्य सामन्तो मृतः, तस्य शशि-शूरौ पुत्रौ राज्याय युद्धं कर्तुं लग्नौ। तयोरुभयोस्तद्राज्यं विभज्य चित्रगतिचक्री ददौ, सुयुक्तिभिश्च धर्मवाग्भिः सन्मार्गे स्थापयामास, तथापि तावन्यदा मिथो युद्ध्वा मृतौ। तच्छ्रुत्वा चित्रगतिर्वैराग्यवान् संजातः। मनसि च ध्यातुं लग्नः—'अहो! संसारकान्तारं महाविषमं यत्र प्राणिनो दुःखमनुभवन्ति'। इति ध्यात्वा रत्नवतीकुक्षिसम्भवं ज्येष्ठसुतं पुरन्दरनामानं राज्ये संस्थाप्य, कनिष्ठभ्रातृभ्यां रत्नवत्या च समं चित्रगतिर्दमधराचार्यसमीपे दीक्षां जग्राह। चिरं चारित्रं प्रपाल्य पादपोपगमनमनशनं विधाय चित्रगतिर्माहेन्द्रे महान् सुरो जातः, तौ लघुबान्धवौ रत्नवत्यपि च तत्रैव परस्परं प्रीतिभाजः सुराः संजाताः।

## पञ्चम–षष्ठभवौ। ५–६

इतश्च, पश्चिमविदेहे पद्मनाङ्कि विजये सिंहपुरनगरमस्ति। तत्र राजा हरिणन्दी। तस्य राज्ञी प्रियदर्शना। तस्याः कुक्षौ महास्वप्नोपसूचितश्चित्रगतेर्जीवोऽवातरत्। पूर्णे च काले सा देवी सुतं सुषुवे, यथा पाण्डुकवनभूमिः कल्पद्रुमुत्पादयति। महीपतिस्तस्य 'अपराजित' इति नाम चक्रे। धात्रीभिर्लाल्यमानः स क्रमेण व्यवर्धत। क्रमात् कला अपि सकला जग्राह, यौवनं च प्राप। तस्य विमलवोधाऽभिधः प्रधानपुत्रो मित्रमभूत्। तौ कुमारावन्यदा क्रीडार्थं तुरगावारुह्य बहिर्जग्मतुः, परं कुशिक्षितवाहहृतौ महा-

रण्ये पतितौ । तत्राऽश्रयोः श्रान्तयोः सतोस्तौ वृक्षमूलेऽवतेरतुः । राजपुत्रो विमलबोधमूचे—'मित्र ! आवां यदि नाऽपहृतावभविष्याव तदैषा आश्चर्यमयी वसुन्धरा कुतो द्रष्टव्याऽभविष्यत् ?। विनोदाय गन्तुं पितरौ आपृच्छ्यमानौ विरहाऽसहत्वेन आवां जातु न विसृजेताम्, तत आत्मनोर्वरं जातम्' । इति कुमारवचनं सचिवपुत्रेणाऽप्यमन्यत ।

एतस्मिन् समये तत्र कोऽपि पुरुषो 'रक्ष रक्ष' इति जल्पन् भयकम्पमानः कुमारसमीपे आगात् । सम्भ्रमात् तं शरणागतं दृष्ट्वा 'मा भैषीः' इति कुमारः प्रोचे । तदा मन्त्रिपुत्रो जगाद—'भो मित्र ! एनं विमृश्य रक्ष, चेद् अन्यायकारी भावी तदा रक्षितो न शोभनः' । अपराजित ऊचे—'अन्यायी न्यायी वा भवतु, परं शरणागतस्त्रातव्य एष क्षत्रियधर्मः' । एवं कुमारे वदति सति 'हत हत' इति वादिन आरक्षपुरुषास्तीक्ष्णखड्गपाणय एयुः । ऊचुश्च—'युवां पान्थौ अपयातम्, अमुं तस्करं हनिष्यामः, अस्माकं सर्वं नगरमनेन मुषितम्' । इति श्रुत्वा कुमारो हसित्वा प्राह स्म—'मां शरणमुपागतोऽसौ शक्रेणापि हन्तुं न शक्यस्तदाऽन्येषां का वार्ता ?' । अथ च आरक्षकाः क्रुद्धा हननाय यावदुद्यतास्तावत् करवालं गृहीत्वा सिंहो मृगानिव निघ्नन् तानधावत । तत्कालं ते आरक्षका नंष्ट्वा स्वस्वामिने कोसलराजाय आचख्युः । राजापि चौररक्षकस्य वधाय बहुतरं सैन्यं प्रैषीत्, तदपि सर्वम् अपराजितः पराजिग्ये । तदाकर्ण्य राजा सेनासंयुक्तस्तत्रागात् । तं समायातं दृष्ट्वा कुमारस्तस्करं मन्त्रिपुत्राय समर्प्य युद्धाय सम्मु-

खश्चचाल । तत एकस्य हस्तिनो दन्ते सिंहवत् पादं न्यस्य कुम्भस्थलमारुह्य स्कन्धारूढं निषादिनमवधीत्, तमेव गजमारुह्याऽपराजितः सङ्ग्रामं कर्तुं लग्नः । तावदेकेन मन्त्रिणा तमुपलक्ष्य भूपालायाख्यातम्—'हे स्वामिन् ! अयं कुमारो हरिणन्दिनृपस्य पुत्रः, नान्यः'। इति ज्ञात्वा राजा स्वाज्ञया सैनिकान् युद्धाद् निषिध्य तमूचे—'भोः कुमार ! त्वं मन्मित्रस्य हरिणन्दिनः सुतोऽसि, तव बलेनाऽहं रञ्जितः, सिंहकिशोरेण विना हस्तिने खलु कः समर्थः ?। महाभुज ! अथ त्वं मम गृहे समागच्छ'। इत्युक्त्वा राजा तं समालिङ्ग्य स्वकीयगजेऽधिरोह्य गृहे वत्सलः पुत्रमिव निनाय। मन्त्रिपुत्रोऽपि तस्करं विसृज्य अपराजितेन समं ययौ । उभावपि तौ कोसलराजमन्दिरे सुखं तस्थतुः । अन्यदा जातानन्दः कोसलराजः कनकमालाभिधां स्वकीयकन्यामपराजिताय ददौ। कत्यपि दिनानि तत्र स्थित्वा, 'गतेर्विघ्नो मा भूद्' इति विचार्य, राजानमनाख्याय, मित्रसहितः कुमारो रात्रौ निर्ययौ। मार्गे व्रजन् कुमारः कालिकादेवीप्रासादाद् अदूरतो 'हा हा ! निष्पुरुषा पृथ्वी' इति निशि रुदितं शुश्राव। ज्ञातवांश्च मनसि—'काऽप्येषा स्त्री रोदिति'। इति निश्चित्य शब्दाऽनुसारेण ययौ। तत्र ज्वलितज्वालाऽभ्यर्णे निषादिनीमेकां स्त्रियम् आकृष्टतीक्ष्णशस्त्रं पुरुषं च ददर्श। पुनरपि 'अस्मादधमाद् विद्याधरात् कोऽपि यः पुरुषो भवेत् स मां पातु' इति आखेटकिगृहीतायाः शकुन्त्या इव तस्या आक्रन्दं स कुमारोऽश्रृणोत्। ततस्तं खेचराऽधमं कुमार आचिक्षेप—'रे ! पुरुषाधम ! रणाय सज्जो भव, अबलायामेतत्पौरुषं कथं करोषि ?'।

'त्वय्यपि जस्यामिव मम पौरुषं नाऽभैषीत्' इति ब्रुवन् खेचरः कुमारेण समं युद्धं कर्तुं लग्नः । उभावपि युद्धकुशलौ परस्परं घातान् वञ्चयमानौ खड्गाखड्गि चिरं कृत्वा भुजायुद्धे प्रवृत्तौ। तस्मिन्नपि युद्धेऽपराजय्यं कुमारं मन्यमानो विद्याधरोऽपराजितं नागपाशेन बबन्ध । कुमारोऽपि तं पाशं जीर्णरज्जुमिव त्रोटयामास । पुनरपि विद्याधरो विद्याप्रभावतो विविधशस्त्रैः कुमारायाऽसुरकुमारवत् प्रजहार, परं पूर्वपुण्यप्रभावाद् देहसामर्थ्याच्च कुमारे लवमात्रमपि प्रहारा न प्राभवन् । अत्रान्तरे सूर्य उदयाचलमागमत्, तदा राजपुत्रस्तं खेचरं खड्गेन मूर्ध्नि ताडयामास, तेन प्रहारेण मूर्च्छितः सन् खेचरः पृथ्व्यां पपात । तदा च कुमारस्पर्द्धयेव तां स्त्रीं कन्दर्पः शरैरविध्यत् । पुनरपि कुमार उपचारैर्विद्याधरं चेतनां प्रापय्य प्रोचे—'सम्प्रति यदि त्वं बलवान् तदा युध्यस्व'। विद्याधरो जगाद—'भोः कुमार! त्वयाऽहं सुष्ठु निर्जितः, रक्षितश्च स्त्रीवधान्नरकगतेः। अथ शृणु—मम वस्त्राञ्चलग्रन्थिकायां मणि-मूलिके विद्येते, तस्य मणेः पानीयेन मूलिकां घृष्ट्वा मद्व्रणे देहि'। कुमारेण तथा कृते स खेचरः सज्जीभूतः। कुमारपृष्टश्च स्वव्यतिकरमेवमाचख्यौ—"अहं श्रीषेणविद्याधरस्य पुत्रः सूरकान्तनामा। एषा स्त्री तु रथनूपुरनगरस्वामिनोऽमृतसेनस्य पुत्री नाम्ना रत्नमाला। अस्या वरो ज्ञानिना हरिणन्दिनृपपुत्रोऽपराजित आख्यायि, ततस्तस्योपरि एषाऽप्यनुरक्ताऽभूत्, अन्यत्र मनो नाऽकरोत्। साऽन्यदा मया वीक्षिता, विवाहाय च याचिता सत्युवाच—'मम पाणिग्रहणमपराजितः करिष्यति, अथवा वह्निर्ममाऽङ्गं दहेत्, अपरा गतिर्नास्ति'। इत्यसा वचनेन

कुपितोऽहं नगरान्निर्गत्य दुःसाध्या अपि विद्या असाधयम् । पुनरपि विविधोपायैरिमां याचितवान्, परं केनाप्युपायेनैषा यदा मां नाऽवाञ्छत् तदा मया हृत्वाऽत्रानीता, यतः कामान्धाः किं न कुर्वन्ति ?। अद्याऽहमिमां खण्डयित्वा वह्नौ प्रक्षेप्तुमुद्यतोऽभूवं, परं त्वया मत्त इयं रक्षिता, अहं च दुर्गते रक्षितः, द्वयोरपि त्वयोपकारः कृतः । अथ त्वं महाभुज ! कथय, कोऽसि ?"। तेनेति पृष्टे कुमारस्य कुलादिकं मन्त्रिसुतेन कथितम् । रत्नमालाऽपि इष्टसमागमाद् हृष्टा । पृष्ठतो रत्नमालापितरौ कीर्तिमत्यमृतसेननामानौ तत्र समायातौ । पृष्टश्च मन्त्रिसुतस्तयोर्यथावृत्तमाख्यत् । स्वसुतायास्त्रातारमेव परिणेतारं ज्ञात्वा पितरौ हृष्टौ । ततोऽपराजिताय स्वसुता उद्वाहिता, तयोरेव च वचनाद् अपराजितेन सूरकान्ताय अभयं दत्तम् । अथ सूरकान्तः कुमारे निःस्पृहे सति मणि-मूलिके वेषपरावर्तहेतवो गुटिकाश्च मन्त्रिपुत्रस्य ददौ । ततोऽपराजितः स्वश्वशुरं प्रति प्रोचे—'भवद्भिः स्वपुत्री मयि निजस्थाने गते आनेतव्या'; इति प्रोच्य प्राचलत् । ततः पुत्र्या समम् अमृतसेनः सूरकान्तश्च विद्याधरोऽपराजितं स्मरन्तौ स्वं स्वं स्थानं प्रययतुः । कुमारोऽपि मन्त्रिपुत्रेण सहाऽग्रतो गच्छन् महाटव्यां तृषाक्रान्तः प्राप्तः, तत्रैकस्य सहकारस्य तले उपाविशत् । मन्त्रिपुत्रस्तु पानीयाऽऽनयनाय जगाम । दूरे गत्वा जलं गृहीत्वा यावन्मन्त्रिपुत्र आगात् तावत्तत्र सहकारतले कुमारं नापश्यत् । ततो मनसि दध्यौ—'किं तदिदं स्थानकं न ?, भ्रान्त्या किमहमन्यत्रागतः ?, अथवा कुमारस्तृषाक्रान्तः स्वयं जलाय ययौ ?'। इति विमृश्य कुमारस्य विलोकनाय वृक्षं

वृक्षं प्रति बभ्राम, परं कुत्रापि तम् अप्रेक्षमाणो मूर्च्छितः पृथ्व्यां पतितः। वातेन लब्धसंज्ञः पुनः समुत्थाय स करुणस्वरमरोदीत्—'हे कुमार! स्वात्मानं दर्शय, मां विरहेण कथं खेदयसि?। त्वाम् अपकर्तुं प्रहर्तुं वा कोऽपि पुरुषो न समर्थः, सखे! तवाऽदर्शनेऽमङ्गलमयं कारणं न, यत्र त्वं गतो भविष्यसि तत्र महासुखभाजनमेव भविष्यसि'। एवं बहुधा विलप्य पुनर्गवेषयितुं ग्रामादिषु परिभ्राम्यन् नन्दिपुरं नगरमगात्। बहिरुद्याने यावदस्थात् तावद् द्वौ विद्याधरौ तत्रागत्य तमेवमूचतुः—"भो मन्त्रिपुत्र! भुवनभानुनामा विद्याधरेन्द्रः प्रासादं निकृत्य महावने आस्ते। तस्य कमलिनी-कुमुदिनीनाम्न्यौ उभे सुते स्तः। तयोश्च वरस्तव सुहृद् अपराजितो ज्ञानिना कथितः। तस्याऽऽनयनार्थं स्वस्वामिनाऽऽवां नियोजितौ। ततस्तस्मिन् वने आगताभ्यामावाभ्यां युवां वीक्षितौ। त्वं जलानयनायाऽगास्तदा कुमारो हृत्वा स्वस्वामिनः समीपे मुक्तः। भुवनभानुस्तमुदितं भानुमिव दृष्ट्वा संभ्रमाद् उत्थितः, स्नेहाच्च रत्नभद्रासनेऽध्यासयामास। ततोऽस्मत्स्वामी स विद्याधराधिपः कुमारस्य गुणस्तुतिं विधाय पुत्र्योर्विवाहार्थे कुमारं ययाचे, परं त्वद्वियोगार्त्तः किमपि प्रत्युत्तरं नाऽदात्; त्वामेव च चिन्तयन् मुनिरिव मौनी एवाऽस्थात्। ततश्च स्वामिना त्वामानेतुम् आवामादिष्टौ, इतस्ततः प्रेक्षमाणौ सम्प्रति इहायातौ, अधुनैव च त्वं भाग्येन दृष्टः। तद् महाभाग! उत्तिष्ठ, तत्र शीघ्रं चल, कुमारस्य विवाहस्तव विरहेण स्थितोऽस्ति"। इति श्रुत्वा मुदितो मन्त्रिसुतस्ताभ्यां सह ययौ, कुमारस्य मूर्तिमान् हर्ष इव मिलितः। पश्चात् कुमारेण तयोः पाणिग्रहणं

कृतम्। किञ्चित्कालं तत्र स्थित्वा पूर्ववत् समित्रः कुमारोऽन्यत्र निर्जगाम। क्रमेण तौ श्रीमन्दिरे पुरे प्रापतुः, तत्र च सूरकान्तदत्तमणिना पूर्यमाणवाञ्छितौ तस्थतुः।

अन्यदा तस्मिन् पुरे महान् हाहारवः समजनि, सन्नद्धशस्त्राश्च सुभटा अदृश्यन्त। 'किमेतद्' इति कुमारेण मन्त्रिपुत्रः पृष्टः, स च लोकमुखाद् ज्ञात्वाऽकथयत्—'हे मित्र! अत्र राजा सुप्रभः, स एकेन पुंसा छलात् छुरिकया हतः। तस्य राज्ञो राज्यधरः पुत्रादिः कोऽपि नास्ति। तेन हेतुना आत्मरक्षणाय व्याकुलो लोकः समस्तोऽपि पुरे भ्राम्यति, तेन तुमुलो हाहारवः संजायते'। इति श्रुत्वा कुमारस्य महान् विषादोऽभवत्। अथ संरोहणौषध्याऽपि राज्ञः प्रहारे वर्धमाने सति कामलताख्या प्रधानगणिका मुख्यमन्त्रिणमाख्यत्—'भो मन्त्रिन्! अत्र पुरे कोऽपि वैदेशिकः पुरुषो मूर्त्या देव इव समायातोऽस्ति। स च निर्व्यापारोऽपि सर्वसम्पद्यमानार्थोऽस्ति,अतो महाप्रभाववान् संभाव्यते। ततस्तत्पार्श्वे किञ्चिदौषधं भावि'। तन्निशम्य मन्त्रिणः कुमारमभ्यर्थ्य राजसमीपं निन्युः। कृपावान् कुमारो घातं विलोक्य, मित्राद् मणिमूलिके आदाय, मणिजलेन तां मूलिकां घृष्ट्वा नृपघाते न्यधत्त। तत्कालं भूपः सज्जोऽभूत्। ततः कुमारमुवाच—'हे अकारणबान्धव! त्वमत्र कुत आयासीः ?'। ततस्तस्मै राज्ञे सर्वं व्यतिकरं मन्त्रिपुत्रोऽकथयत्। तच्छ्रुत्वा राजोचे—'भो मन्त्रिणः! अयं मन्मित्रस्य हरिणन्दिनः पुत्रः, अहो! मया प्रमादेन न ज्ञातः' इति प्रोच्य उपरोध्य गुणक्रीतो नृपस्तस्मै स्वकन्यां रम्भानाम्नीं ददौ। तया सह रममाणः किञ्चि-

त्कालं स्थित्वा पूर्ववद् मन्त्रिपुत्रयुक्तः कुमारो निर्ययौ। क्रमेण कुण्डपुरनगरेऽगात्। तत्रोद्याने केवलिनमैक्षत। तं वन्दित्वा देशनां शुश्राव। देशनान्ते कुमारः केवलिनं पप्रच्छ–'भगवन्! अहं किं भव्योऽथवाऽभव्यः?'। केवलिना कथितम्–'त्वं भव्योऽसि, पञ्चमे च भवे द्वाविंशस्तीर्थङ्करो भविता। अयं च त्वन्मित्रं तव गणधरो भावी'। इति श्रुत्वा हृष्टौ तौ तं मुनिं सेवमानौ कत्यपि वासरान् तत्र तस्थतुः। अथाऽन्यत्र विहर्तुं मुनौ गते सति तावपि स्थाने स्थाने चैत्यानि वन्दमानौ विचेरतुः।

इतश्च, जनानन्दपुरे जितशत्रू राजा, तस्य प्रिया धारिणी, तस्याः कुक्षौ रत्नवतीजीवोऽवातरत्। पूर्णे च काले सा राज्ञी पुत्रीं प्रासूत। शुभे दिवसे तस्याः प्रीतिमतीनाम पिता ददौ। सा क्रमेण ववृधे, ततः सकलाः कला जग्राह, यौवनं च प्राप। अथ पिता दध्यौ–'यद्येतां येन केनचिद् वरेणाऽहमुद्वाहयिष्यामि तदाऽसौ मरिष्यति'। एवं ध्यात्वा एकान्ते तां राजाऽपृच्छत्–'हे पुत्रि! तव वरः को मतः?'। साऽप्यूचे–'यो मां कलासु विजेता स मम वरः'। तद्वचनं राजाऽप्यमन्यत। तस्याः सा प्रतिज्ञा सर्वत्र पप्रथे। तदनन्तरं राजानो राजसुताश्च भृशं कलाभ्यासं चक्रुः। अन्यदा जितशत्रू राजा बहिर्मञ्चान् अकारयत्, ततश्च स्वयंवरे राज्ञो राजपुत्रांश्च आजूहवत्। तदा भूचराः खेचराश्च राजानः स्वस्वकुमारसंयुता एयुः, एको हरिणन्दी पुत्रवियोगार्त्तो नागतः। इतश्च पर्यटन् दैवयोगात् तत्राऽपराजितः समित्रः समागात्। मञ्चानुमञ्चान् दृष्ट्वा स विमलबोधमवोचत्–'हे मित्र! समये समागताः स्मः, अत्र कलाज्ञातॄणां कलाविचारं तां कन्यां च

द्रक्ष्यामः'। ततः स्वस्याऽऽज्ञापनाय कुमारो गुटिकाप्रयोगेण समित्रः सामान्यरूपं कृत्वा स्वयंवरमण्डपे आगतः। सर्वैरपि तौ विकृताकारधारिणौ दृष्टौ। अथ प्रीतिमती दिव्यवस्त्रालङ्कारधरा चामराभ्यां वीज्यमाना सखी-दासीजनसमन्विता तत्र स्वयंवरमण्डपे समागता। ततो मालतीनाम्नी सखी स्वाङ्गुल्या नामानि निर्दिशन्ती ऊचे—"अमी भूचराः खेचराश्च गुणिमन्या इहाययुः। असौ कदम्बदेशस्य राजा भुवनचन्द्रः पूर्वदिग्विभूषणम्। असौ समरकेतू राजा दक्षिणदिग्मुखमण्डनम्। अयं कुबेरराज उत्तरदिशि कुबेरसमानः। असौ वैरिनारीजनाऽश्रान्तः वर्धितकीर्तिलतावनः सोमप्रभो राजा। अन्येऽपि धवल-शूर-भीमाद्या राजानोऽमी समागताः सन्ति। अयं च विद्याधराधीशो मणिचूडाभिधानो नृपः। अयं रत्नचूडो रत्नवत्कायकान्तिः। असौ मणिप्रभो महाभुजः। एते च सुमनः—सूर-सोमादयः खेचराधिपाः; सखि! सर्वानपि कलाविद ईक्षस्व, पुनः परीक्षस्व"। एवमुक्तवत्या तया स्वयंवरमण्डपमासीना राजानो दर्शिताः। प्रीतिमती यं यं लोचनैरैक्षिष्ट तं तं तयाऽऽदिष्ट इव कन्दर्पो बाणैरवेधयत्। ततो मधुमासमत्तकोकिलास्वरसन्निभस्वरेण वाग्देवीव पूर्वपक्षस्था विवादिनी सा पूर्वपक्षमकरोत्; तदा सर्वेऽपि भूचराः खेचराश्च हतबुद्धयोऽभवन्, गले गृहीता इवोत्तरं दातुं नाऽशकन्। 'स्त्रीसम्बन्धाद् अस्याः पक्षं सरस्वती चक्रे, तेन कारणेन ये वयं केनापि न जितास्तेऽधुनाऽनया जिताः!' इत्यादि विलक्षाः श्यामवदना विविधं प्रोचुः। अथ जितशत्रू राजा दध्यौ—'किं सर्वप्रयासाद् इमां विधाय विधिः खिन्नोऽभूद् यदेतस्या अनुरूपं पतिं न व्यधात्?। इयन्त

एव नृपाः, एषु मत्पुत्र्या उचितो वरो नाऽभूत्!, यदि वा हीनो भावी तदा का गतिः?'। तदानीं भावज्ञो मन्त्री जगाद—"हे प्रभो! विषादं मा कुरु, सबलेभ्यः सबलाः स्युर्यतो बहुरत्ना वसुधेयम्। 'राजा राजनन्दनः परो वा य इमां जयेत् स एव एतस्या वर' इति घोषणा कार्यताम्"। राजाऽपि साधु साध्विति जल्पन् तथैवाऽकारयत्। तां घोषणां श्रुत्वाऽपराजितो दध्यौ—'स्त्रिया सार्द्धं विवादे पुरुषस्य विजयेऽपि नोत्कर्षो जायते'। पुनरेवं चिन्तयितुं लग्नः—'उत्कर्षोऽस्तु वा माऽस्तु, परम् एषा मया जेतव्या'। इति विचार्य शीघ्रं कुमारः प्रीतिमत्या अग्रे समायातः। दुर्वेषमपि तं वीक्ष्य पूर्वजन्मस्नेहानुभावेन प्रीतिमती प्रीतिं दधौ। अथ च पूर्वपक्षं प्रीतिमत्यकरोत्, तदैव हि तां त्वरितं निरुत्तरीकृत्याऽपराजितः पराजिग्ये। साऽपि हर्षेण वरमालां कुमारकण्ठे चिक्षेप। तद्दृष्ट्वा भूचराः खेचराश्च कोपं प्रापुः। 'क एष कार्पटिको[1]ऽस्मासु सत्सु परिणेता' इति जल्पन्तः सर्वेऽपि राजानः सादि[2]-निषादिभिः समम् उदायुधाः संग्रामम् आरभन्त। कुमारोऽपि समुत्पत्य कञ्चिन्निषादिनं हत्वा तद्गजस्थः शारिवर्तिभि[3]स्तदस्त्रैर्युयुधे, क्षणाच्च रथिनं हत्वा रथस्थितः प्राहरत्, क्षणाद् भूमौ, क्षणात् पुनरपि गजस्थः स सङ्ग्रामं व्यधात्; एवमेकोऽपि कुमारोऽनेकधाभूत इव विद्युदिव स्फुरन् वैरिसैन्यमभाङ्क्षीत्। तदा ते राजानो मनस्येवं विचारं चक्रुः—'प्रथमं स्त्रिया शास्त्रैर्वयं जिताः, साम्प्रतमेकाकिनाऽप्यनेन शस्त्रैर्जिताः!' इति लज्जिताः पुनरपि योद्धुमुत्थिताः। अथ कुमारः सोम-

१ कर्पटेन—जीर्णवस्त्रखण्डेन चरतीति कार्पटिकः। २ अश्वारोह—हस्त्यारोहै। ३ हस्तिकवचवर्तमानैः।

प्रभनृपस्य गजमारुरोह, तं च स नृपो लक्षणैस्तिलकैश्चोपालक्षयत् । ततोऽत्यन्तस्नेहेन परिरेभे । 'हे अमेयबल ! दिष्ट्या त्वं जामेयो ज्ञात' इति चोच्चैरुच्चरन् सर्वेषां राज्ञामाख्यत् । ततस्ते सर्वेऽपि संग्रामाद् व्यरमन् । ततस्तैरेव स्वजनीभूतैर्विवाहमण्डपोऽध्यासि । अथाऽपराजित-प्रीतिमत्योः पवित्रदिने जितशत्रुभूभुजा विवाहश्चक्रे, कुमारः स्वाभाविकरूपं कृतवान् । तदनन्तरं सर्वान् राज्ञः सत्कृत्य जितशत्रुर्व्यसृजत् । अथ प्रीतिमत्या समं रममाणोऽपराजितः स्थितवान् । जितशत्रुनृपमन्त्रिणापि स्वपुत्री विमलबोधाय दत्ता, सोऽपि तया सह रेमे ।

अन्यदा हरिणन्दिनृपस्य दूतः समायातः । कुमारेण दृष्टो, हर्षो जातः । स्वकीयतातस्य मातुश्च सस्नेहं कुशलं पृष्टः सन् अश्रुपूर्णलोचनो जगाद–'भोः कुमार ! शरीरधारणामात्रं तयोः केवलं कुशलं वर्तते; त्वद्वियोगेनाऽतीव दुःखितौ, तव चरितं च नवं नवं श्रुत्वा प्रमोदेते। त्वद्विरहेण तयोः समीपं मूर्च्छा न मुञ्चति। अहं तु तवाऽऽकारणाय प्रेषितोऽस्मि, अतो हे प्रभो ! अद्यापि पितरौ खेदयितुं नाऽर्हसि' । कुमारस्तद्वचनं निशम्य सगद्गदमभाषत–'मां पुत्रं पित्रोर्दुःखदायिनं धिगस्तु' । अथ जितशत्रुनृपमापृच्छ्य अपराजितः स्वनगरं प्रति चचाल, तदा भुवनभानुविद्याधरः सुताद्वयसंयुक्त आगात्, अन्याश्च तेन पूर्वपरिणीताः स्वस्वपुत्रीस्तत्र राजान आनिन्युः, सूरकान्तोऽपि कुमारेणाऽभयदायिना सममागात् । एवं प्रीतिमत्यादिपत्नीभिर्भूचर-खेचराधीशैश्च परिवारितः सोऽपराजितकुमारो सैन्यदलैराकाशमाच्छादयन् स्तोकैरेव दिवसैः सिंहपुरं

प्राप । हरिणन्दिभूपस्तं भूपीठे विनयेन लुठन्तं समभ्येत्य उत्सङ्गमारोप्य मस्तके पुनः पुनरचुम्बत् । माताऽपि स्नेहवाष्पायितलोचना तं प्रणमन्तं कराभ्यां पृष्ठे पस्पर्श, शिरसि च चुचुम्ब । ताः प्रीतिमत्यादयोऽपि श्वशुरयोः पादान् नेमुः, विमलबोधेन स्नुषा नामग्राहं दर्शिताः। ततः कुमारः सर्वान् भूचर-खेचरान् संमानं दत्त्वा विससर्ज, पित्रोर्नेत्रानन्दं विदधानो यथासुखमस्थात् ।

अथ मनोगति-चपलगती माहेन्द्रतश्च्युतौ तस्याऽनुजौ सूर-सोमनामानावभूताम् । अन्यदा हरिणन्दी राजाऽपराजितं राज्ये निवेश्य दीक्षां जग्राह, तपश्च तप्त्वा परमपदं प्रपेदे । अपराजितनृपस्य पट्टराज्ञी प्रीतिमत्यभूत्, विमलबोधो मन्त्री, द्वौ च बन्धू माण्डलिकावभूताम् । ततोऽपराजितभूपतिः स्वपुत्रीमिव प्रजां पालयामास । भोगान् अभुक्त । विचित्रचैत्यानि लक्षशो यात्राश्च कुर्वाणोऽपराजितराजः पुरुषार्थैरवञ्चितो बहुकालमगमयत्। अन्यदा स नृप उद्याने गतः। तत्रैकं महर्द्धिकं, मित्रैरावृतं, स्वस्त्रीभिः क्रीडन्तम्, अर्थिनाम् अर्थं ददानं, वन्दिभिश्च स्तूयमानं सार्थपतिसुतं प्रेक्ष्य स्वसेवकमपृच्छत्–'कोऽसौ ?' । तदा स प्राह–'असौ समुद्रपालसार्थपतेः सुतोऽनङ्गदेवाख्यः' । तन्निशम्य 'धन्योऽस्मि यस्य वणिजोऽप्येवंविधा उदारा महर्द्धयः' एवं प्रशंसन् स राजा स्वगृहमागात् । अथ द्वितीये दिवसे स बहिर्गच्छन् मृतकं चतुर्भिः पुरुषैरुत्पाटितम्, उरःस्थलमाघ्नानाभिर्मुक्तकेशं रुदतीभिः स्त्रीभिरन्वीयमानम् अपश्यत्। तदा 'कोऽयं मृतः?'

१ श्वश्रू-श्वशुरयोः । २ पुत्रपत्न्य. ।

इति राज्ञा पृष्टे सेवका अकथयन्—'हे स्वामिन्! स एवाऽनङ्गदेवो विसूचिकया मृतो यः स्वामिना गतवासरे वने दृष्टः'। तन्निशम्य राजा भवोद्विग्नो महद्वैराग्यं धारयन् संसारात् खिन्नः सन् स्वगृहं ययौ, तत्र च कत्यपि दिनानि तस्थौ। अन्यदा प्राग् यः कुण्डपुरे केवली वन्दितः स तं ज्ञानेन योग्यं ज्ञात्वा उपकाराय तत्राऽऽगात्। तत्पार्श्वे धर्मं श्रुत्वा प्रीतिमतीसम्भवं पद्माभिधं पुत्रं स्वराज्ये निधायाऽपराजितनृपः प्राव्राजीत्। तदा च सा प्रीतिमती, सूर-सोमवान्धवौ, विमलवोधमन्त्री च, ते सर्वेऽपि अनुप्राव्रजन्। तपस्तप्त्वा मृत्वा च आरणदेवलोके इन्द्रसामानिकाः सुराः परस्परं प्रीतिभाजः समभवन्।

## ॥ अथ सप्तमा-ऽष्टमभवौ ॥ ७—८

इतश्च जम्बूद्वीपे भरतक्षेत्रे कुरुदेशे हस्तिनापुरे श्रीषेणो राजा, तस्य श्रीमती राज्ञी। साऽन्यदा निशाशेषे पूर्णचन्द्रं मुखे प्रविशन्तमपश्यत्, दिवामुखे च पत्युराख्यत्। ततः स राजा स्वप्नपाठकैर्निर्णीतवान्—'स्वप्नप्रभावेण ध्वस्तसमस्तद्विपक्षान्तो देव्याः सुतो भविष्यति'। इतोऽपराजितश्च्युत्वा तत्कुक्षौ समुत्पन्नः, काले च सा सर्वलक्षणसम्पूर्णं पुत्रमसूत। तस्य 'शङ्ख' इति नाम पिता ददौ। क्रमेण वर्धमानः सर्वकलापारगामी जातः। यौवनं प्राप। अथ विमलवोधजीवः श्रीषेणनृपमन्त्रिणः पुत्रो मतिप्रभनामा जातः, स च बाल्यकालतः शङ्खकुमारस्य प्रेमपात्रमभूत्।

अन्येद्युर्जानपदाः पूत्कारकारिण एत्य श्रीषेणनृपतिं विज्ञपयामासुः–'हे स्वामिन्! त्वद्देशसीमायाम् अत्यन्तविषमो विशालशृङ्गपर्वतोऽस्ति, स चन्द्रशिशिरानद्या[1] संयुक्तः। तत्राऽद्रिदुर्गे समरकेतुनामा पल्ली-पतिर्वर्तते, सोऽस्मान् निःशङ्कतया लुण्टति, तस्मात् त्रायस्व'। इति श्रुत्वा कोपाक्रान्तो राजा तद्वधाय प्रयाणभम्भामदापयत्। तदा शङ्खकुमारः प्रणम्य राजानमुवाच–'हे तात! तत्पल्लीपतिमात्रे एष स्वयमाक्षेपः कः?, यतः शृगाले सिंहपराक्रमो न भ्राजते; भवदाज्ञया तं बद्ध्वाऽहमानेष्यामि'। राज्ञाऽपि तद्वचनं श्रुत्वा हृष्टेन सेनया समं शङ्खकुमारः पल्लीपतिनिग्रहाय विसृष्टः। स्वनगरात् पल्लीपतिः कुमारमा-यान्तं श्रुत्वा दुर्गं शून्यं मुक्त्वाऽन्यत्र गह्वरे स मायिनां प्रधानः प्राविशत्। कुशाग्रमतिः कुमारस्तत्र दुर्ग-पत्तने एकं सारसैनिकं सामन्तं प्रवेशयामास, स्वयं तु ससैनिक एव एकत्र गह्वरेऽस्थात्। अथ पल्लीपतिश्छलेन दुर्गं रुरोध, ततो 'भोः कुमार! त्वं क्व यास्यसि?' इति यावत्तत्र जगर्ज तावत्तं पल्लीपतिं सोऽनेकशः सैन्यैरवेष्टयत्। इतश्च दुर्गप्रस्थै राजसैन्यैः स प्राहारि, कुमारसैन्यैश्च मध्यस्थितो विह्वलीकृतो दीनो जातः। ततः स्वकण्ठे कुठारं क्षिप्त्वा स कुमारशरणं ययौ। ऊचे च–'हे स्वामिन्! मम मायामन्त्रा-णां त्वमेव हर्ता, अथ तव दासीभविष्यामि, इदं सर्वं गृहाण, ममोपरि च प्रसीद'। ततः शङ्खकुमार-स्तेनाऽऽत्तं यद् यस्य तत् तस्य सर्वं लोप्त्रमार्पयत्[2], स्वयं तु तस्माद्दण्डं गृहीत्वा तं पल्लीपतिमादाय न्यवर्तत।

---

१ चन्द्रसमाना शिशिरानाम्नी नदी, तया संयुक्तः। २ चौर्येणानीतं द्रव्यं लोप्त्रम्।

सायं स्कन्धावारं निवेश्य पथि अवात्सीत् । अथ तल्पस्थः सोऽर्धरात्रे करुणस्वरं शुश्राव, तदा खड्गं करे कृत्वा स्वरानुसारतो ययौ । अग्रेऽर्धवार्धकां स्त्रीं ददर्श । कुमार ऊचे–'भो भद्रे ! त्वं स्वदुःखस्य कारणं कथय' । तदा तद्वचनेन लब्धाश्वासना सा जगाद–"अङ्गदेशे चम्पानगर्यां जितारी राजा, तस्य प्रीतिमती पत्नी, तस्या बहुपुत्राणामुपरि यशोमतीनाम्नी पुत्री वर्तते । तस्याः स्वानुरूपं वरमपश्यन्त्याः कुत्रापि पुरुषे दृष्टिर्नाऽरमत । अथ कदापि श्रीषेणसुतः शङ्खो गुणपात्रं तया श्रुतः, तत्प्रभृति 'मां शङ्खः परिणेता' इति सा प्रतिज्ञामकार्षीत् । स्थानेऽनुरक्तां स्वसुतां ज्ञात्वा पिता मुमुदे । तदर्थं यावत् स राजा श्रीषेणनृपान्तिके पुरुषान् प्रैषीत् तावत् तां मणिशेखरो विद्याधराधिपो ययाचे । तदा जितारिराड् जगाद–'एषा शङ्खं विनाऽन्यं नेच्छति' । अथाऽन्येद्युः स विद्याधरनाथस्ताम् अहार्षीत्; अहं तु तस्या धात्रिका स्नेहेन तद्दोर्लग्ना सह समागता, परं तेन दुष्टखेचरेण बलाद् इहोज्झिता । तां संसारसारभूतां बालां गृहीत्वा स कुत्रापि गतस्तेनाऽहं विलपामि" । तत्सर्वव्यतिकरं निशम्य कुमारस्ताम् ऊचे–'हे मातः ! त्वं धीरा भव, तं विजित्य कुमारीमानयामि' इत्युक्त्वा शुद्ध्यर्थं कुमारो महाटव्यां बभ्राम । अत्रान्तरे च सूर्य उदयाचलमारुरोह, कुमारोऽपि विशालशृङ्गपर्वतमाससाद । तस्यैकस्मिन् गह्वरे तां यशोमतीं विवाहार्थं प्रार्थयन्तं च खेचरं ददर्श । तत्र सा खेचरमित्थं ब्रुवतीं शुश्राव–'हे अप्रार्थितप्रार्थक ! त्वं मुधा कथं खेदयसि ?, मम भर्ता तु शङ्खोज्ज्वलगुणः शङ्ख एव, नाऽपरः' । तद्वचनं श्रुत्वा कुमारो हृष्टः । अथ ताभ्यां कुमारो

दृष्टः, तदा खेचरो हृष्टः सन् जगाद–'हे जडे ! त्वत्प्रियो दैवाकृष्टः पश्य मम वशमायातः, अमुं च त्वदाशया समं हत्वा बलात् त्वां परिणीय निजगृहे नेष्यामि'। इत्युक्तवन्तं तं शङ्खकुमार उवाच–'अरे परनारीहर ! उत्तिष्ठ, तव शिरः खड्गेन हरामि'। पश्चात् तौ खड्गपाणी बलिनौ स्वस्वबलेन पर्वतं कम्पयन्तौ इव मिथो युयुधाते, परं स यदा भुजाबलेन कुमारं जेतुं नाशकत् तदा विद्यया कृतैस्तप्ताऽयोगोलकप्रमुखैरस्त्रैर्युयुधे। अथ कुमारस्य पुण्यप्राग्भारात् कानिचिद् नाऽलगन्, कानिचिच्चाऽस्त्राणि सम्मुखमागच्छन्त्येव कुमारः खड्गेन खण्डयामास। ततो गाढं विखिन्नाद् निपण्णाच्च तस्मात् स शङ्खकुमारो धनुराच्छिदत्, तच्छरेणैव च तं खेचरं हृदये विव्याध। स मूर्च्छितः पृथ्व्यां पपात, तदा शङ्खो वातादिनोपचारेण तं सज्जीकृत्य पुनर्युद्धायाहृत। विद्याधर उवाच–'भोः कुमार ! अहम् अनिर्जितवरस्त्वया भूचरबलेन निर्जितोऽस्मि, अतो हे दोष्मन् ! न त्वं सामान्योऽसि। हे वीर ! इयं यशोमती यथा त्वया गुणक्रीता तथाऽहमपि पराक्रमक्रीतः, मेऽपराधं क्षमस्व'। कुमारोऽपि जगाद–'त्वद्दोर्बलेन विनयेन च रञ्जितोऽस्मि, तेन कारणेन हे महाभाग ! ब्रूहि, तव किं करोमि ?'। तदा स ऊचे–यदि प्रसन्नोऽसि तर्हि वैताढ्ये आगम्यताम्, तव सिद्धायतनयात्रा स्याद् ममानुग्रहश्च'। शङ्खोऽपि तद्वचनमनुमेने, यशोमती च मुमुदे। तदा तत्र मणिशेखरपत्तयोऽभ्येयुः, ते च ज्ञातवृत्तान्तास्तमुपकारिणं कुमारं नमश्चक्रुः। अथ च कुमारो द्वौ खेचरौ तत्र सैन्ये प्रेष्य स्ववृत्तान्तं सर्वमजिज्ञपत्, तत्सैन्यं च शीघ्रं हस्तिनापुरे प्राहिणोत्। यशोमत्याश्च

तां धात्रीं खेचरैरानाय्य, धात्री-यशोमतीसंयुक्तः स शङ्खकुमारो वैताढ्यगिरौ अगात्। तत्र च सिद्धायतनेषु यशोमत्या सह यात्रां चक्रे, प्रवरां पूजां च कृतवान्। पश्चाद् मणिशेखरस्तं कुमारं कनकपुरे निन्ये, स्ववेश्मनि देवमिव मन्यमानो रक्षितवांश्च। वैताढ्यवासिनो लोकास्तत्रैत्य आश्चर्यमागतमिव पुनः पुनः शङ्ख-यशोमत्यौ व्यलोकयन्। वैरिजयादिकमूल्येन अपरेऽपि विद्याधराः प्रीताः कुमारस्य पत्तयोऽभूवन्। अथ च ते निजनिजाः पुत्रीस्तस्मै अदुः,परं स प्रत्यवोचत–'यशोमतीं परीणीय पश्चाद् अमूः परिणेष्यामि'। अथाऽन्यदा मणिशेखरमुख्याः खेचराः स्वस्वकन्या गृहीत्वा यशोमत्या सह शङ्खकुमारं चम्पायां नगर्यां निन्यिरे। जितारिनृपो ज्ञातवृत्तान्तः पुत्र्या सहागतं वरं खेचरेन्द्रैः परिवारितं मुदितोऽभ्यगात्। ततो महामहःपूर्वकं प्रावेशयत्। शुभे दिवसे स्वपुत्र्या सह महोत्सवपूर्वकं कुमारः परिणायितः। ततस्ता विद्याधरसुताः शङ्खेन परिणीताः, श्रीवासुपूज्यचैत्यानां च भक्त्या यात्रां चक्रे। ततः सर्वान् खेचरान् विसृज्य, तत्र स कत्यपि दिनानि स्थित्वा, यशोमत्यादिपत्नीभिः सार्द्धं हस्तिनापुरमगात्। अथ आरणदेवलोकाच्युत्वा पूर्वबान्धवौ सूर-सोमनामानौ शङ्खकुमारस्य अनुजौ यशोधर-गुणधराभिधानौ बभूवतुः। अन्यदा श्रीषेणनृपः शङ्खकुमाराय राज्यं दत्त्वा गुणधरगणधरपादान्ते व्रतमाददे।

अन्यदा स श्रीषेणर्षिरुत्पन्नकेवलज्ञानः सुरसान्निध्यधारी विधिना विहारं कुर्वन् हस्तिनापुरमागात्। वनपालमुखात् केवलिसमागमनं ज्ञात्वा शङ्खराजस्तं भक्तितो ववन्दे, देशनां चाऽश्रृणोत्। देशनान्ते

कुमारोऽवदत्–'हे प्रभो ! जिनधर्मतोऽहं जानामि यद् इह संसारे कोऽपि कस्यापि सम्बन्धी नास्ति, सर्वः स्वार्थसम्बन्धी; तथाप्यस्यां यशोमत्यां ममाधिकं ममत्वं कुतः ?, एतद् आख्याहि'। अथ केवली प्राह– "इयं तव धनभवे धनवती पत्नी, सौधर्मे च युवां सुरौ परस्परं प्रीतिभाजौ । ततश्चित्रगतिभवे रत्नवती, ततो माहेन्द्रे देवौ सुहृदौ । ततोऽपराजितभवे प्रीतिमती पत्नी, तत आरणदेवलोके सुरौ सुहृदौ । तत एतस्मिन् सप्तमे भवे तवेयं भार्या यशोमती जाता । तेन पूर्वभवरागात् तवाऽस्यां स्नेहाधिकत्वं वर्तते । इतोऽपराजितानुत्तरविमाने गत्वा च्युत्वा चात्र भरतक्षेत्रे त्वं नेमिनाथनामा द्वाविंशस्तीर्थङ्करो भविष्यसि, इयं तु राजीमती नाम त्वयाऽनूढाऽनुरागिणी त्वत्पार्श्वे प्रव्रज्य परमपदं व्रजिष्यति । तथा यशोधर-गुणधरौ तव भ्रातरौ मतिप्रभमन्त्री च, एते त्रयोऽपि गणधरपदं प्राप्य सेत्स्यन्ति" । इति श्रुत्वा शङ्खकुमारो वैराग्यात् पुण्डरीकनामानं सुतं राज्ये निवेश्य, तत्पार्श्वे बन्धुभ्यां मन्त्रिणा यशोमत्या च समं दीक्षामग्रहीत् । क्रमाद् गीतार्थः स शङ्खकुमारोऽभूत् । अर्हद्भक्त्यादिभिर्विंशतिस्थानैश्च तीर्थङ्करनामकर्म आर्जयत् ।

कृततरूपगमाऽनशनोऽपराजितमगान्मुनिशङ्ख इहाद्भुतः ।
जगति चाऽनुययुश्च यशोमतीप्रभृतयोऽपि तमेव ततो विधेः ॥ १ ॥

इति राजाधिराजश्रीमदकब्बरसाहिक्षोणिपतिप्रदत्ताऽतिमान-मर्दितानेकवादीन्द्राऽभिमान-सिद्धिसौधसोपानसमानस्वकीयवचननिर्जिताऽमृतपान-सकलभट्टारकभूमामिनीभालभूषणायमान-भट्टाकरश्री ५-श्रीविजयसेनसूरीश्वरशिष्यपण्डितपीयूषपायिपरम्परापुरन्दरपण्डितश्री-कनकविजयगणिचरणपङ्कजभ्रमरसदृश-गुणविजयगणिविरचिते श्रीमदरिष्टनेमिचरिते सुललितगद्यबन्धे श्रीनेमिनाथपूर्वभववर्णनो नाम प्रथमः परिच्छेदः ॥

इति प्रथमः परिच्छेदः ॥

## ॥ अथ द्वितीयः परिच्छेदः ॥

इतश्च इह भरतक्षेत्रे वत्सदेशे कौशाम्बीपुर्यां सुमुखो नृपः, तेन वीरकुविन्दभार्या हृताऽन्तःपुरे क्षिप्ता। तस्या वियोगेन वीरको ग्रथिलोऽभवत्, ताभ्यां च दृष्टः। ततस्तौ संवेगं प्रापतुः, विद्युत्पाताऽन्मृतौ हरिवर्षक्षेत्रे मिथुनं संजातम्। वीरोऽपि कष्टं कृत्वा सौधर्मदेवलोके किल्बिषदेवोऽजायत। स प्राग्भववैरेण तद् मिथुनमपहृत्य, चम्पायां नगर्यां नीत्वा, तत्र चन्द्रकीर्तिनृपस्याऽपुत्रकस्य राज्यं दत्त्वा, देवशक्त्या ह्रस्वमायुः कृत्वा, पञ्चशतधनुष्प्रमाणं च शरीरं विधाय, तयोर्हरि-हरिणीति नामद्वयं प्रकल्प्य, मद्य-मांसादिभक्षणं शिक्षयित्वा स सुरः स्वस्थानं ययौ। तत आश्चर्येण हरिवंशोऽभूत्।

अथ सौवीरदेशे मथुरानगरी यमुनानद्या शोभिताऽस्ति। तस्यां हरिवंशकुलोद्भवाद् वसुपुत्राद् बृहद्ध्वजाद् बहुषु नृपेषु गतेषु यदुनामा राजाऽभूत्। तस्य शूरनामा पुत्रो जातः। शूरस्य द्वौ पुत्रौ शौरि-सुवीरौ अभूताम्। शौरिं राज्ये सुवीरं च यौवराज्ये न्यस्य शूरराट् वैराग्येण दीक्षां जग्राह। शौरिस्तु सुवीराय मथुराराज्यं दत्त्वा, कुशार्तदेशे गत्वा, तत्र शौर्यपुरं नाम नगरं न्यधात्। तस्य शौरिनृपस्य अन्धकवृष्ण्यादयः पुत्रा अभवन्, सुवीरस्य पुनर्भोजवृष्ण्यादयो महाभाग्याढ्याः पृथ्वीविख्याता जज्ञिरे। अथ सुवीरो

भोजवृष्णये मथुराराज्यं दत्त्वा, स्वयं सिन्धुषु सौवीरपुरं निधायाऽस्थात् । शौरिभूपस्तु अन्धकवृष्णिं स्वराज्ये संस्थाप्य, सुप्रतिष्ठमुनिसमीपे प्रव्रज्य शिवं ययौ । अथ भोजवृष्णेरुग्रसेनः पुत्रो जातः, अन्धकवृष्णेस्तु सुभद्रादेव्यां दश पुत्राः समभवन् । तेषां चेमानि नामानि—समुद्रविजयोऽक्षोभ्यः स्तिमितः सागरो हिमवान् अचलो धरणः पूरणोऽभिचन्द्रो वसुदेवः । एते दशापि दशार्हेत्याख्यया लोके प्रसिद्धा जाताः । तेषां कुन्ती-मद्रीनाम्न्यौ उभे अनुजे अभूताम् । कुन्ती पाण्डुराजाय दत्ता, मद्री च दमघोषाय । अन्यदा अन्धकवृष्णिनृपोऽवधिज्ञानिनं सुप्रतिष्ठं मुनिमपृच्छत्—'हे स्वामिन् ! दशमो मत्पुत्रो वसुदेवोऽत्यन्तरूप-सौभाग्य-कलापात्रं कुतः ?' । सुप्रतिष्ठमुनिराख्यत्—

## वसुदेवस्य पूर्वजन्मवृत्तान्तः ।

"मगधदेशे नन्दिग्रामे रोरद्विजः, तस्य सोमिला भार्या, तयोः सुतो नन्दिषेणनामाऽभूत् । आबालकालतस्तस्य मन्दभाग्यशिरोमणेः पितरौ मृतौ । स कुरूपो दन्तुरोऽनिष्टश्च स्वजनैरपि त्यक्तः । ततः स मूलेन जीवन् अन्यदा मातुलेन दृष्टः, स्नेहाद् गृहीतश्च । तस्य सप्त कन्या उद्वाह्या आसन् । नन्दिषेणं मातुल ऊचे—'एकां कन्यां तुभ्यं दास्यामि' । तल्लोभाद् गृहकार्यं स सर्वं चकार । तत्राद्या कन्या तज्ज्ञात्वोवाच—'यदि मां पिता एतस्मै दास्यति तदा मरिष्यामि' । तद् नन्दिषेणः श्रुत्वा विषण्णो जातो मातुलेनोक्तः—

'हे वत्स ! द्वितीयां सुतां तव दास्यामि, मा खेदं कुरु'। तच्छ्रुत्वा द्वितीयपुत्र्याऽपि तद्वद् अभिग्रहश्चक्रे, किं बहुना ?, अन्यपुत्रीभिरप्येवं स क्रमेण प्रतिषिद्धः। ततस्तं मातुलो जगाद—'अन्यस्य कस्यचित् कन्यां याचित्वा तव दास्यामि, हे वत्स ! आकुलो मा भूः'। ततो नन्दिषेणो दध्यौ—'मां कुरूपं निजा अमूर्न वाञ्छन्ति तदाऽन्याः कन्याः कथं ईप्सिष्यन्ति ?'। इति विमृश्य वैराग्यान्निःसृत्य रत्नपुरेऽगात्। तत्र च दम्पतीन् क्रीडतो निरीक्ष्य स्वं निनिन्द। अथ स दुःखेन मरणं कर्तुम् उपवनान्तरे ययौ। तत्र सुस्थितनामानं साधुं दृष्ट्वा प्रणनाम। साधुरपि ज्ञानेन तद्भावं ज्ञात्वाऽवोचत—'मा मरणसाहसं कुरु। दुःखस्य कारणं तु अधर्मः, तेन सुखार्थिना धर्मः कर्तव्यः, आत्मघातात् सुखं नास्ति'। इति मुनिवचनं श्रुत्वा स प्रतिबुध्य प्रव्रज्यामग्रहीत्। क्रमेण गीतार्थो जातः, साधुषु वैयावृत्त्याऽभिग्रहं च जग्राह। एकदा बालग्लानादिसाधूनां वैयावृत्त्यकरम् अनिर्विण्णं तं सभामध्ये सुरपतिः प्रशशंस। इन्द्रवचोऽश्रद्दधद् एकः कोऽपि ग्लानसाधुकायधरः सुरो रत्नपुराभ्यर्णे आययौ, द्वितीयसाधुवेषं च कृत्वा तद्वसतिं जगाम। अथ पारणाय कवले उत्क्षिप्ते नन्दिषेणं स जगाद—'भो ! वैयावृत्त्यं प्रतिज्ञाय कथं सम्प्रति भोक्ष्यसे ?, यतो बहिः क्षुधातृषाक्रान्तोऽतिसारकी मुनिरस्ति'। तन्निशम्य नन्दिषेणर्षिः सहसाऽन्नं मुक्त्वा, पानमवलोकयितुं निर्ययौ। देवः स्वशक्त्याऽनेषणीयं कर्तुं प्रचक्रमे, परं लब्धिमतस्तस्य मुनेः प्रभावात् तत्कृतं न प्राभवत्। ततः शुद्धं पानं स कुत्रचित् प्राप, तद्गृहीत्वा ग्लानर्षेः समीपे जगाम। तत्र तेन मायामुनिना कठिनाक्षरं चुक्रुशे—'अहम्

ईदृगवस्थां प्राप्तः, त्वं तु भोजनलम्पटः शीघ्रं नाऽऽगाः, तत् तव वैयावृत्त्याभिग्रहं धिक्' । नन्दिषेणोऽप्यवोचत–'त्वं ममाऽपराधं सहस्व, त्वां सज्जं विदधामि, इदं पानं तवोचितम्' । इति कथयन् पानं पाययित्वा 'उत्तिष्ठ' इति जगाद, तदा ग्लानोऽब्रवीत्–'रे मुण्ड ! त्वं किं माम् अक्षमं[1] न पश्यसि ?' । अथ मायामुनिं स्कन्धे आरोप्य प्राचलत् , तदा तेन स नन्दिषेणः पदे पदे आचुक्रुशे–'अरे ! शीघ्रं व्रजन् अतीवाऽऽन्दोलनैर्मां किं दुनोषि ?, यदि वैयावृत्त्यकरोऽसि तदा शनैः शनैर्गच्छ' । इत्युक्तः सोऽतिशनैरचलत् , तदा तस्योपरि मायामुनिः वर्चश्चक्रे[2], पुनरब्रवीत्–'एवं किं वेगभङ्गं करोषि ?' । परं नन्दिषेणस्तस्य कटुकवचनान्यपि नाजीगणत् , किन्तु 'अयं सज्जः कथं स्याद् ?' इत्यचिन्तयत् । अथ स सुरो मनो-वचन-कायदृढतां ज्ञानेन ज्ञात्वा, वर्चोऽपहृत्य, तस्योपरि सन्तुष्टः पुष्पवृष्टिं व्यधात् । ततस्त्रिः प्रदक्षिणीकृत्य तं ववन्दे, तस्मै च शक्रकृतां प्रशंसां कथितवान् । ततः क्षमयित्वा 'तुभ्यमहं किं ददामि ?' इति स सुर उवाच । मुनिराख्यत्–'भो देव ! मया परमदुर्लभो धर्मो लब्धः, अतः परं सारं नास्ति यत्त्वत्पार्श्वेऽहं प्रार्थये' । इत्युक्तः स देवो निजस्थानमगमत् । अथ नन्दिषेणो द्वादशवर्षसहस्राणि दुस्तपं तपस्तेपे, अन्ते च कृताऽनशनो निजं दौर्भाग्यमस्मरत् । ततः 'अनेन तपसा स्त्रीवल्लभो भूयासम्' एवं निदानं कृत्वा स महाशुक्रे सुरोऽभवत् । ततश्च्युत्वा अयं तव सूनुर्वसुदेवनामाऽभूत् , निदानानुभावतः कामिनीनां वल्लभो रूप-सौभाग्यवान् अस्ति" ।

१ अशक्तम् । २ विष्ठाम् ।

तद् मुनिवचनं श्रुत्वा, जातवैराग्योऽन्धकवृष्णिः समुद्रविजयं राज्ये विन्यस्य, सुप्रतिष्ठसाधोरुपान्ते प्रव्रज्य शिवं ययौ । भोजवृष्णिरपि प्राव्राजीत् । ततो मथुरायां राजा उग्रसेनो जातः । तस्याऽग्रमहिषी धारिणी-नाम्नी समभवत् ।

## कंसस्योत्पत्तिः ।

अन्यदा उग्रसेनो वहिर्गच्छन् एकान्तस्थाने मासोपवासिनं तापसमद्राक्षीत् । तस्य चैषोऽभिग्रहोऽस्ति यद्–'मासोपवासपारणं एकगृहगृहीतभिक्षया करिष्यामि, नान्यथा' । मासे मासे स एकगृहभिक्षया पारणं कृत्वा तदेकान्तस्थानमगात्, परं गृहान्तरे नाऽभिक्षत । अथ तं पारणाय निमन्त्र्य उग्रसेनो गृहं ययौ । तापसोऽपि पृष्ठे आगात्, परं राज्ञा विस्मृतः । अभुक्त एव स त्वरितं निजाश्रयमगात्, तथैव च द्वितीयमासक्षमणं कृतवान् । अथ कदाचित् तत्रोग्रसेनो गतस्तं पुनरपश्यत्, तच्च निमन्त्रणविस्मरणं चाटु-वचनैः क्षमयामास । तदैव च पुनरपि निमन्त्रयामास, पुनश्च तथैव विसस्मार । तदा अभुक्त एवागत्य भूयोऽपि स स्वस्थानमगात् । भूयोऽपि स्मृत्वा तं राजा पूर्ववत् क्षमयामास, यदा च तं पुनर्न्यमन्त्रयत तदा स तापसः कोपमकार्षीत्–'अहमनेन तपसाऽस्य वधाय भवान्तरे भूयासम्' एवं निदानं कृत्वा, सोऽनशनेन मृत्वा, उग्रसेनभार्याया धारिण्या उदरे पुत्रत्वेनोत्पन्नः । अथ गर्भप्रभावात् तस्याः पत्युर्मांसभ-

क्षणदोहदः प्रादुर्भूतः, तदा कथयितुं लज्जमाना सा दिने दिने क्षीयमाणा कथञ्चिदाग्रहेण दोहदं पत्युः कथयामास । अथ प्रधाना राज्ञो ध्वान्तस्थितस्योदरे शशकमांसं विन्यस्य, तस्याः पश्यन्त्याश्छित्त्वा छित्त्वा ददुः । ततः सा पूर्णदोहदा मूलस्वभावं पुनरागता । ऊचे च–'पत्युर्विना जीवितव्येन अनेन गर्भेण च किम् ?' । तदा तां मर्तुकामां मन्त्रिण ऊचुः–'तव पुनः सप्तरात्रेण राजानं जीवितं दर्शयिष्यामः' । इत्थं स्वस्थीकृतायास्तस्याः सप्तमे दिवसे ते उग्रसेनं दर्शयामासुः, तदा च सा महामहोत्सवं चक्रे । अथ पौषमासे कृष्णपक्षे भद्रायां चतुर्दश्यां मूलनक्षत्रगते चन्द्रे रजन्यां सा पुत्रं प्रासूत । अथ राज्ञी दोहदेनापि गर्भाद् भीता तं जातमात्रं पुरा कारितायां कांस्यपेटायां चिक्षेप, ततो राज-निजनामाङ्कितमुद्रायुगयुक्तां सपत्रिकां तां रत्नपूर्णां पेटां दास्या यमुनाजलेऽक्षेपयत् । राज्ञे तु सुतो जातो मृतश्चेति राज्ञी कथयामास । अथ सा पेटा नद्या शौर्यपुरद्वारे निन्ये । प्रातः शौचार्थमागतः सुभद्रनामा रसवणिक् तां पेटां दृष्ट्वा जलाद् बहिश्चकर्ष । तन्मध्ये पत्रिका-रत्नमुद्रासहितं तं बालकं बालचन्द्रमिव ददर्श । ततो गृहे नीत्वा मृतवत्सायाः स्वपत्न्या हृष्टोऽर्पयति स्म । तौ दम्पती 'कंस' इति तन्नाम चक्रतुः। स च वर्धमानः कलहशीलो डिम्भान् अकुट्टयत्, ततस्तस्य वणिजो लोकोपालम्भा निरन्तरमेयुः । ततस्तेन दशवार्षिको वसुदेवकुमारस्य सेवकत्वेनाऽर्पितः, स च तस्यातीव प्रियोऽभूत् । वसुदेवेन सार्द्धं कंसः सकलाः कला अपठत्, सममेव चिक्रीड, यौवनं च प्राप । तौ वसुदेव-कंसौ एकराशिगतौ सौम्य-मङ्गलाविव विरेजतुः ।

इतश्च, शुक्तिमतीनगर्यां वसुनृपसुतः सुवसुराजः, यः कुतोऽपि कारणाद् नंष्ट्वा नागपुरेऽगात्। तत्र च तस्य पुत्रो बृहद्रथः संजातः, स राजगृहेऽगात्। तत्र तत्सन्ततौ जयद्रथो नृपः, तस्य जरासन्धनामा प्रतिवासुदेवः प्रचण्डाज्ञस्त्रिखण्डस्वामी सुतः समभवत्। अन्यदा स दूतेन समुद्रविजयनृपमेवमादिक्षत्–'वैताढ्यपर्वतसमीपस्थे सिंहपुरे दुःसहं सिंहरथं बद्ध्वा समानय, तदानेतुश्च जीवयशसं स्वां सुतां वाञ्छितं पुरं च दास्यामि'। इति दूतवचनं श्रुत्वा, समुद्रविजयं नत्वा दुष्करमपि तद् जरासन्धाऽनुशासनं कर्तुं वसुदेवोऽभ्ययाचत। तदा समुद्रविजय उवाच–'भोः कुमार! तव सम्प्रति सुकुमारस्य युद्धावसरो नास्ति, ततोऽनया याञ्चया सृतम्'। तदा पुनरपि वसुदेवेन आग्रहेण नृपो विज्ञप्तः, ततस्तं कथञ्चिद् बह्वीभिः सेनाभिः सह विससर्ज। हृष्टो वसुदेवो हर्षोत्कर्षेण शीघ्रं प्रयाणभम्भां दापयित्वा कंससमन्वितः सिंहपुरं प्रति चचाल। स्तोकैरेव दिनैः सिंहपुरेऽगात्। अथ पर[1]राष्ट्रबलमागतं ज्ञात्वा सिंहरथोऽपि सिंहपुरात् सिंहवद् निर्ययौ। ततो द्वयोः सैन्ययोर्महद् युद्धमभवत्। सिंहरथो वसुदेवसैन्यं क्षणाद् व्यद्रावयत्, तदा कंससारथिर्वसुदेवः स्वयं योद्धुं दुढौके। ततश्च परस्परं जयकाङ्क्षिणौ उभौ युयुधाते। अथ कंसः सारथ्यं हित्वा महीयसा परिघेण सिंहरथस्य रथं शीघ्रमभाङ्क्षीत्, तदा कंसं हन्तुं सिंहरथः क्रुधा ज्वलन् करवालं चकर्ष, वसुदेवश्च तं क्षुरप्रेण [2]त्सरुदेशे चकर्त। ततश्छलबलोत्कटः कंसश्छागं वृक इव सिंहरथमुत्क्षिप्य

१ परराज्यसैन्यम्। २ त्सरुः खड्गमुष्टिः।

बद्धा वसुदेवरथेऽक्षैप्सीत्। अथ सिंहरथसैन्ये भग्ने सति जयवान् वसुदेवः सिंहरथमादाय कंससंयुक्तः स्वपुरं ययौ। समुद्रविजयो वसुदेवं रहसि जगाद यद्–"क्रोष्टुकिनामा ज्ञानी मम हितम् अदोऽकथयत्–'इयं जीवयशा जरासन्धकन्या अलक्षणा पति-पितृकुलक्षयकरी भविष्यति'। अथ च जरासन्धः सिंहरथानयने पारितोषिके तां तुभ्यं दास्यति, ततस्तस्यास्त्यागोपायः कोऽपि चिन्तनीयः"। तच्छ्रुत्वा वसुदेवः प्रत्यूचे–'रणे कंसः सिंहरथं बद्धाऽऽनैषीत्, ततस्तस्मै जीवयशा देया'। राजा समुद्रविजय उवाच–'स वणिक्पुत्रः, अतस्तां स न लिप्सते; परम् एष विक्रमेण तु क्षत्रिय इव विभाव्यते'। ततः शपथं दत्त्वा स रसवणिक् कंसस्य शृण्वतः पृष्टः सन् आदितस्तस्य वृत्तान्तमाख्यत्, ते उग्रसेन-धारिणीनामाङ्किते मुद्रिके पत्रिकां च समार्पयत्। तां च पत्रिकां राजाऽवाचयत् तदा तेन सर्वव्यतिकरो ज्ञातः। तदनन्तरम् 'अयमुग्रसेनसुतो यादवो महाभुजः, अन्यथेदृशं वीर्यं कथं भवेद्?' इति सर्वेषामग्रे प्रोच्य, कंसेन सह गत्वा, समुद्रविजयो जरासन्धाय सिंहरथमार्पयत्, कंसविक्रममाख्यच्च। जरासन्धोऽपि सन्तुष्टः स्वां जीवयशसं सुतां तेन पितृरोषेण याचितां मथुरां च दत्तवान्। अथ कंसो जरासन्धार्पितबलो मथुरायामागत्य, नृशंसोऽतीव दुष्टः पितरं बद्धा पञ्जरे चिक्षेप। उग्रसेनस्य अतिमुक्तादयः सुता अभवन्, परन्तु तदाऽतिमुक्तस्तु पितृदुःखात् प्रव्रज्यामादद। अथ कंसो रसवाणिजं सुभद्रं शौर्यपुरादानाय्य कृतज्ञमानी स्वर्णादिदानतः सच्चक्रे। अन्यदा राज्ञी धारिणी स्वपतिमुक्तये कंसमूचे, परं तद्वचनेनापि स कथञ्चित् पितरं

न मुमोच । अथ सा धारिणी निरन्तरं कंसमान्यानां गृहेषु गत्वा जगाद–'अयं मया कांस्यपेटायां क्षिप्त्वा नद्यां प्रवाहितः, इदं च राजा उग्रसेनो न विवेद । सर्वथाऽयं निरपराधः, सापराधाऽहमेव, तेन हेतुना एष मत्पतिर्मोच्यताम्' । परं तेषामपि वचनैरुग्रसेनं स कंसो न व्यमुञ्चत्, पूर्वजन्मनिदानं किमन्यथा जायते ? ।

इतश्च, समुद्रविजयो जरासन्धेन सत्कृतो विसृष्टः सन् भ्रातृभिः संयुक्तः स्वपुरं ययौ । अथ वसुदेवं शौर्यपुरे भ्रमन्तं सर्वदा मन्त्राकृष्टा इव स्त्रियो रूप-सौभाग्यमोहिता अन्वयुः । एवं वसुदेवः क्रीडया इतस्ततो भ्रमन् कियन्तं कालं निनाय। अन्येद्युर्महाजन एत्य राजानं रहस्युवाच—'हे स्वामिन् ! वसुदेवरूपेण स्त्रीजनोऽमर्यादोऽभवत् । या एकवारमपि वसुदेवं पश्येत् सा विवशैव भवेत्, तदा याः पुनः पुनः सञ्चरन्तं पश्यन्ति तासां किं कथनम् ?' । तद्वचः श्रुत्वा राजोचे–'भो महाजना ! वो वाञ्छितं करिष्यामि' इत्युक्त्वा तान् व्यसृजत् । ततो 'वसुदेवाय नाख्येयम्' इति राजा परिवारमुवाच । अन्यदा वसुदेवं नमस्कर्तुमागतं निजोत्सङ्गमारोप्य राजा समुद्रविजयोऽवदत्–'हे भ्रातः ! क्रीडापर्यटनेन त्वं कृशीभूतोऽसि, तद् वहिर्भवता न गन्तव्यं, मद्गृहे एव स्थातव्यम् । तत्र च नवा नवाः कला गृहाण, प्राक्पठिताश्च सर, कलाविदां गोष्ठ्या तव विनोदो भविष्यति' । विनीतो वसुदेव 'आम्' इत्युक्त्वा तथैव गीत-नृत्यादिविनोदैर्दिवसानतिवाहयन् अस्थात् । अन्येद्युस्तत्राऽऽपतन्तीं गन्धधारिणीं कुब्जां पप्रच्छ–'अयं गन्धः कस्य

कृते ?'। साप्यब्रवीत्–'हे कुमार! अयं शिवादेव्या श्रीसमुद्रविजयाय प्रेषितोऽस्ति'। तदा 'ममाऽप्युपकरोत्येतद्' इति वदन् वसुदेवो नर्मलीलया तद्गन्धद्रव्यं जहार। ततः सरोषा सा तमेवमुवाच—'अनेन चरितेनैव हि त्वं नियन्त्रितस्तिष्ठसि'। तेनाप्यूचे–'कथम् ?'। तदा सा भीतभीता पौरवृत्तान्तमादित आचख्यौ, यतो नारीणां हृदये रहस्यं चिरं न स्थिरं तिष्ठति। तं सर्वं व्यतिकरं श्रुत्वा वसुदेवो मनसि दध्यौ–'स्त्रीभ्यः स्वं रोचयितुम् असौ मम भ्राता वसुदेवो भ्रमति इति मां राजा मन्यते,तदत्र मम वासेन सृतम्'। एवं विचिन्त्य तां दासीं विसृज्य च दिवसात्यये गुटिकया वेषान्तरं कृत्वा स पुरान्निरगात्। बहिर्गत्वा श्मशानासन्नकाष्ठैश्चितामकरोत्, तत्र च एकमनाथं किञ्चिन्मृतकं ज्वालयामास। ततो गुरूणां क्षमणार्थं निजहस्तेन लिखित्वा एकत्र स्तम्भे पत्रं व्यलम्बयत्। तन्मध्ये च श्लोकद्वयं, तच्चेदम्—

"दोषत्वेनाभ्यधीयन्त गुरूणां यद्गुणा जनैः। इति जीवन्मृतंमन्यो वसुदेवोऽनलेऽविशत्॥ १ ॥
ततः सन्तमसन्तं वा दोषं मे स्ववितर्कितम्। सर्वे सहध्वं गुरवः पौरलोकाश्च मूलतः" ॥ २ ॥

इति कृत्वा विप्रवेषो वसुदेव उन्मार्गेण भ्रान्त्वा सन्मार्गं प्राप्तोऽचलत्। तं दृष्ट्वा पितृगृहं व्रजन्ती रथस्था काचित् स्त्री स्वकीयान् मनुष्यान् जगाद–'अमुं श्रान्तं पान्थविप्रं रथे आरोपयत'। तैरपि तथा कृते वसुदेवः सुखेन एकं ग्रामं प्राप। तत्र च स्नानं कृत्वा भुक्तः सन् सायं यक्षगृहे गतः।

अथ शौर्यपुरे 'वसुदेवोऽग्निं प्रविष्ट' इति यादवा ज्ञात्वा, सपरीवारा आक्रन्दं कुर्वन्तः सर्वेऽपि मृतकार्या-

णि चक्रिरे। इमां वार्तां श्रुत्वा वसुदेवो निश्चिन्तो विजयखेटपुरेऽगात्। तत्र राजा सुग्रीवः। तस्य कलापात्रे श्यामा–विजयसेनाभिधाने उभे कन्ये। तत्र ते कलांजयपणेन वसुदेवः परिणीतवान्। ताभ्यां सार्धं रममाणस्तत्र च यथासुखमस्थात्। अथ वसुदेवस्य विजयसेनापत्न्याम् अपरो वसुदेव इवाऽक्रूरो नाम सुतोऽभवत्। ततस्तस्मादपि पुरात् प्रतस्थे, महाटवीं प्राप, जलार्थी जलावर्तं नाम सरो ययौ। तत्रैको जङ्गमविन्ध्याद्रिरिव गजो दधावे। कुमारस्तु तं खेदयित्वा मृगेन्द्रवद् आरुरोह। तं गजारूढं दृष्ट्वा अर्चिमालि-पवनञ्जयौ विद्याधरौ कुञ्जरावर्तोद्याने नीत्वा व्यमुञ्चताम्। तत्राऽशनिवेगो विद्याधराधिपतिः स्वां श्यामाभिधां कन्यां तस्मै ददौ। स तया सह रेमे। तस्या वीणावाद्येन तुष्टः कुमारो वरं ददौ, तदा सा 'त्वया सह मेऽवियोगोऽस्तु' इति वरमयाचत। 'असौ वरः किंकारणः ?' इति तेन कथिते साऽब्रवीत्—

"वैताढ्ये किन्नरगीतपुरेऽर्चिमाली नृपोऽभूत्। तस्य ज्वलनवेगाऽशनिवेगौ सुतौ अभूताम्। ज्वलनवेगं राज्ये विन्यस्य अर्चिमाली दीक्षामाददे। ज्वलनवेगस्य विमलानाम्न्यां राज्यामङ्गारकः पुत्रो बभूव, अहं तु अशनिवेगस्य सुप्रभासम्भवा पुत्री। अथ ज्वलनोऽशनिवेगं राज्ये संस्थाप्य दिवं ययौ, तं विद्याबलान्निर्वास्य अङ्गारको राज्यमग्रहीत्। ततो मत्तातोऽष्टापदपर्वतेऽगात्, तत्रैकम् अङ्गिरसनामानं चारणमुनिं पप्रच्छ–'मम राज्यं भावि नवा ?'। मुनिराख्यत्–'त्वत्पुत्रीश्यामाभर्तृप्रभावात् तव राज्यं भावि, स च जला-

१ कलाना जय एव पणः–प्रतिज्ञा, तेन। २। किं कारण यस्य सः।

वर्तगजजयाद् ज्ञेयः'[1] । ततो मुनिवचनप्रत्ययाद् अत्र मत्पिता पुरं निवेश्याऽस्थात्, तत्र च जलावर्ते द्वौ खेचरौ सदैव प्रैषीत् । जित्वा गजमारूढस्ताभ्यां प्रेक्षितः, तेन हेतुना प्रभो! त्वमत्रानीतः, मत्पित्राऽशनिवेगेन च मया सह परिणायितः । अथ पुरा धरणेन्द्रेण खेचरैश्च मिलित्वाऽयं समयः[2] प्रतिष्ठितः— 'योऽर्हच्चैत्यसमासन्नं सस्त्रीकं साधुसमीपस्थं च हनिष्यति सोऽविद्यो भविष्यति'। इत्यस्मात् कारणात् स्वामिन्! मयाऽवियोगो वृतः,येन युष्मान् एकाकिनोऽङ्गारको मा वधीत्" । तद्वाचं प्रतिपद्य कुमारस्तया सह कलाभ्यासविनोदैः कालमत्यगात् ।

अन्यदा तया सह प्रसुप्तं तं कुमारं निशि अङ्गारको जह्रे । तदा वसुदेवः प्रबुद्धो 'मम को हर्ता ?' इति चिन्तयति तावता श्यामाननसममुखम् अङ्गारकं खड्गधारिणीं श्यामां च 'तिष्ठ तिष्ठ' इति जल्पन्तीं ददर्श । अङ्गारकस्तां द्विधाऽकार्षीत्, तदा पीडितो वसुदेवोऽभितो द्वे श्यामे अङ्गारकं युध्यमाने अद्राक्षीत् । 'इयं माया' इति निश्चित्य वसुदेवस्तमङ्गारकं मुष्टिना मूर्ध्नि जघान, तदा प्रहारव्यथया तेन कुमारो गगनतलाद् मुक्तश्चम्पाया बहिः सरोवरेऽपतत् । तत्तटाकं हंसवत्तीर्त्वा तत्तीरोपवनस्थितश्रीवासुपूज्यप्रासादे प्राविशत् । श्रीवासुपूज्यं प्रणम्य निशाशेषमतीत्य च स एकेन मिलितेन विप्रेण सह चम्पां ययौ । तत्र वीणाकरान् यूनः स्थाने स्थाने निरीक्ष्य तत्कारणं तं पप्रच्छ । विप्रोऽप्युवाच—'अत्र चारुदत्तः श्रेष्ठ्यस्ति, तस्य

१ जलावर्तस्य सरसो गजस्तस्य यो जेता स तव पुत्र्या भर्तेत्यर्थः । २ सङ्केतः—निर्णयः ।

गन्धर्वसेना कन्याऽतीव रूपवती कलानां च पात्रं वर्तते। 'गान्धर्वे यो मम विजेता स भर्ता' इति तस्याः पणः, तेनैष सर्वोऽपि जनो वीणावादे रतः। मासे मासे च सुग्रीव-यशोग्रीवयोर्गान्धर्वाचार्ययोरग्रेऽनुयोगः प्रवर्तते'। इति विप्रवचनं श्रुत्वा तत्र प्रकृष्टं सुग्रीवं विप्रवेषेण स गत्वोवाच—'अहं गौतमगोत्रजः स्कन्दिलनामा विप्रो गन्धर्वसेनार्थी तव समीपे गान्धर्वमध्येष्ये, मां दूरदेशिनं शिष्यं प्रतिपद्यस्व'। तं मूर्खं इति मत्वा मन्दधीः सुग्रीवोऽनादरेण समीपगं चकार। अथ वसुदेवो लोकान् ग्राम्योक्त्या हासयन् स्वं च गोपयन् गान्धर्वाऽध्ययनमिषात् सुग्रीवसमीपेऽस्थात्। वाददिने सुग्रीवभार्यया वस्त्रयुगलं स्नेहात् पुत्रस्येव वसुदेवस्याऽर्पितम्। ततः प्राक् श्यामादत्तं वस्त्रं तच्च वस्त्रद्वयं स कुमारो लोकान् कौतुकं जनयन् पर्यधत्त। 'अद्य त्वमेहि, गन्धर्वसेनां विद्यया जेष्यसि, अतिगान्धर्वज्ञाताऽसि!' इति नागरैः सोऽहस्यत। तान् नर्मलीलया प्रीयमाणः स सभायां गतवान्। तत्र च स सोपहासैर्लोकैरुच्चासनम् अध्यास्यते स। ततो गन्धर्वसेना तत्रागात्। सा च स्व-परदेशिनो बहून् गान्धर्वविदोऽजैषीत्। अथ स्वस्य वादसमये प्राप्ते कुमारो निजं रूपं प्रकटीचक्रे। तत् प्रेक्ष्य कुमारी तत्क्षणात् क्षोभं प्राप, लोकोऽपि 'असौ कः?' इति वितर्कयन् विस्मयमवाप। ततो लोकैर्या या वीणाऽर्पिता तां तां स सुधीरदूषयत्, तदा गन्धर्वसेना स्ववीणां तस्यार्पयत्। तां सज्जीकृत्य स ऊचे—'हे सुभ्रु! अनया वीणया मया किं गीतं गेयम्?'। साऽप्येवमुवाच—'हे गान्धर्वज्ञ! महापद्मचक्रिज्येष्ठभ्रातृविष्णुकुमारस्य त्रिविक्रमसम्बद्धं गीतं वादय'। वसुदेवस्तथा वादयामास यथा

गन्धर्वसेनां सभासंयुतां जिगाय। सर्वेऽपि लोका ज्ञातुं लग्नाः—'अयं कोऽपि लोकोत्तरः पुरुषः'। ततः स चारुदत्तश्रेष्ठी अखिलान् वादिनो विसृज्य वसुदेवकुमारं स्वगृहे गौरवेणाऽनयत्। अथ विवाहसमये श्रेष्ठ्यूचे—'हे वत्स ! किं गोत्रमुद्दिश्य तुभ्यं स्वकन्यां ददामि ?'। तदा वसुदेवो हसित्वाऽवदत्—'यत्तव मतं तत्कुलं वद'। श्रेष्ठ्यूचे—'इयं वणिक्पुत्री, अतः कारणाद् अदस्तव स्मितकारणम्; परं पुत्र्या आदितो वृत्तान्तं समये कथयिष्यामि' इत्युक्त्वा वर-कन्ययोर्विवाहमकारयत्। ततो गुणरञ्जितौ सुग्रीव-यशोग्रीवावपि श्यामा-विजयानाम्न्यौ द्वे कन्ये वसुदेवाय ददतुः। अन्यदा चारुदत्तो वसुदेवमब्रवीत्—"गन्धर्वसेनायाः कुलादिकं शृणु—

अत्रैव पुर्यां भानुनामा महाधनो व्यवहारी अभूत्। तस्य सुभद्रा भार्या। तौ पुत्राऽभावाद् दुःखितौ। अन्यदा ताभ्यां चारणमुनिः पृष्टः—'किमावयोः सुतो भावी ?'। सोऽपि 'भावी' इति कथयित्वा ययौ। क्रमेणाऽहं सुतोऽभवम्। अन्यदा मित्रैः सह क्रीडन् सिन्धुरोधसि[1] कस्याप्याकाशगामिनः पदन्यासं मनोज्ञमपश्यम्। स्त्रीपदैः 'स सप्रिय' इति मया ज्ञातः। अग्रतोऽप्यहं कदलीगृहं पुष्पशय्यां फलकं खड्गं च दृष्टवान्। तत्रासन्ने स्थाने वृक्षेण सह लोहकीलैः कीलितमेकं विद्याधरमद्राक्षम्, तदसेः कोशे च औषधिवलयत्रितयं दृष्टम्। तासु मयैकयौषध्या स्वबुद्ध्या स मोचितो, द्वितीयया संरोहितः[2] कृतः, तृतीयया च सचेतनः कृतः सन् मामुवाच—'वैताढ्ये शिवमन्दिरनगरे महेन्द्रविक्रमराजस्य

१ सिन्धुतटे। २ व्रणरहितः।

अहम् अमितगतिनामा पुत्रः। धूमशिख-गौरमुण्डमित्राभ्यामन्वितोऽहमेकदा क्रीडन् ह्रीमन्तं पर्वतमगाम्। तत्र स्वमातुलतपस्विनो हिरण्यरोम्णः सुकुमालिकां नाम कुमारीं रम्यां दृष्टवान्। मदनार्त्तोऽहं स्वस्थानं गतः। मित्रात् तथास्थितं मां ज्ञात्वा, पित्रा तत्कालं तामानाय्य, तया सहाऽहं परिणायितः। तया समं रममाणोऽहमस्थाम्। अन्यदा धूमशिखस्तस्यामभिलाषी मया इङ्गितैर्ज्ञातः; तथाप्यहं तेन सार्धं व्यहार्षम्, अत्र चागतः। तेन विश्वासघातकेन प्रमत्तोऽहं कीलितः, सुकुमालिका च हृता। परं भवता मोचितोऽस्मि, अतस्तवाऽकारणमित्रस्य किं प्रत्युपकारं करोमि येनाऽनृणो भवामि?'। तदा मया कथितम्—'सुन्दर! अहं त्वद्दर्शनेनैव कृतकृत्योऽस्मि'। ततः स खेचर उत्पत्याऽगात्, अहं च गृहं गतवान्। क्रमाच्च यौवनं प्राप्तः। अथ पित्रा सर्वार्थनाम्नो मन्मातुलस्य पुत्रीं मित्रवतीं शुभदिवसेऽहं परिणायितः, परं कलाऽऽसक्तत्वेन लवलेशमपि तस्यां भोगपरायणो नाभूवम्। पितृभ्यां तथा दृष्ट्वा 'असौ मुग्ध' इति ज्ञातः। ततो वैदग्ध्यहेतवे पितृभ्यां ललितायां गोष्ठ्यामहं मुक्तः। उपवनादिषु स्वेच्छया व्यचरम्। कलिङ्गसेनावेश्यापुत्रीवसन्तसेनाया गृहे द्वादश वर्षाणि विलसन् अहं तस्थिवान्, तत्राऽज्ञानात् षोडश स्वर्णकोटयो व्ययिताः। तदनन्तरं कलिङ्गसेनया 'निर्द्रव्य' इति ज्ञात्वाऽहं कर्षितः। ततः पित्रोर्मृत्युं ज्ञात्वा दुःस्थोऽहं धैर्यं प्रपद्य स्वभार्याऽऽभरणानि व्यापाराय गृहीतवान्। अन्येद्युर्मातुलेन समम् उशीरवर्तिनगरं प्रति चलितः, तत्र तैराभरणैः कर्पासं क्रीतवान्। ततस्तामलिप्त्यां गच्छतो मे स कर्पासो दावानलेन ज्वलितः,

तदा निर्भाग्य इति ज्ञात्वा मातुलेनाहं त्यक्तः!। ततोऽश्वारूढ एकोऽपि पश्चिमां प्रति अचलम्, सोऽश्वोऽपि मृतः, ततः पादचारी अभवम्। द्राघीयसा मार्गेणाऽहं क्षुधा-तृषाक्रान्तः क्लान्तश्च वणिग्जनाकुलं प्रियङ्गुपुरमगाम्। तत्र पितृमित्रेण सुरेन्द्रदत्तेन पुत्रवद् द्रव्य-भोज्यादिभिः सत्कृतोऽहं यथासुखमस्थाम्। अन्यदा वृद्ध्या द्रव्यलक्षमादाय गृहीतक्रयाणकस्तेन वार्यमाणोऽपि समुद्रेऽहं चटितः। अथ यमुनाद्वीपं प्राप्य, द्वीपान्तर्नगरादिषु गतागतं कुर्वन्नहं अष्ट स्वर्णकोटीरर्जितवान्। ततः स्वदेशाभिमुखं चलितः, परं समुद्रमध्ये पोतं भग्नम्, अहं तु फलकमेकमासदम्, तेन तीर्त्वा सप्तभिर्दिनैरुदम्बरावतीवेलं नाम तीरमागमम्। ततो राजपुरं नगरं कथमपि प्राप्तवान्। तस्य वहिराश्रमपदे दिनकरप्रभाऽभिधं त्रिदण्डिनमहमद्राक्षम्। तस्य स्वकुलादिकमाख्यम्। तेन च पुत्रवद् अतिप्रीत्योपचरितः। अन्येद्युरहं तेन त्रिदण्डिना भणितः—'त्वं धनार्थी दृश्यसे, हे वत्स! तद् एहि, पर्वतं गच्छावः, तव रसं दास्यामि येन कनककोटयो भविष्यन्ति'। एवं श्रुत्वाऽहं धनार्थी तेन समं हर्षेण चलितो महाटवीं प्राप्तः। ततस्तस्य पर्वतस्य नितम्बे त्रिदण्डी अहं च गच्छन्तौ वहुयन्त्रशिलाव्याप्तं यमसुखसदृशं दुर्गपातालाभिधं महाविलं गतौ। तस्य द्वारं स त्रिदण्डिको मन्त्रेणोदघाटयत्, ततस्तद् महाविलमावां प्रविष्टौ। तत्र वहु भ्रान्त्वा रसस्थानं चतुर्हस्तविस्तारं नरकद्वारवीभत्सं कूपं प्राप्तौ। ततस्त्रिदण्डिनोक्तम्—'कूपान्तस्त्वं प्रविश, तुम्बकेन च रसमादत्स्व'। तदा तद्धृतरज्ज्वा मञ्चिकयाऽहं कूपे प्रविष्टः। तत्र चतुष्पुरुषप्रान्ते मेखलापरिवारितो मया रसो दृष्टः,

यावद् रसमादातुमुद्यतस्तावता केनचिन्निषिद्धः। तदाऽहमवोचम्–'भगवता त्रिदण्डिना प्रवेशितश्चारुदत्तोऽहं वाणिजोऽस्मि, मां कथं निषेधसि ?'। सोऽवोचत्–'अहमपि धनकाङ्क्षी वणिगस्मि, तेन त्रिदण्डिना कूपे क्षिप्तः, ततः स पापिष्ठोऽगात्, मेऽपरकाय[1]श्च रसेन भक्षितस्तदत्र मा विशः। तव तुम्बके रसं क्षेप्स्यामि'। ततो मया तस्य तुम्बकमर्पितम्। सोऽपि तुम्बं रसेन भृत्वा मे मञ्चिकाधस्ताद् बबन्ध। तं रसं दृष्ट्वाऽहं रज्जुमकम्पयम्। तदा भगवान् रज्जुमकर्षत्, तटासन्नं प्राप्तं च मां रसम् अयाचत, परं स नोत्तारयति स्म। ततस्तं रसे लुब्धं द्रोहकारिणं च ज्ञात्वा रसं कूपेऽक्षिपम्, तदा स मामपि समञ्चिकं कूपेऽक्षिपत्। अहं कूपे वेद्यां पतितः, तदा पुनरपि सोऽकारणबान्धवो मामभाषत–'मा विषीद, त्वं रसान्तर्न गतोऽसि, वेदिकायां स्थितोऽसि। यदाऽत्र गोधाऽऽगच्छेत् तदा तत्पुच्छमवलम्ब्य भवता निर्गन्तव्यम्, अधुना तदागमनं प्रतीक्षस्व'। तद्वचनं श्रुत्वा कियन्तं कालं तत्र कूपेऽस्थाम्, मुहुर्मुहुर्नमस्कारं च गुणयन् तदाश्वासनया स्वस्थोऽभवम्। अथ स पुमान् व्यपद्यत। अन्यदा भीषणशब्दम् अहमश्रौषं, तदा मनसि चकितस्तद्वचः स्मृत्वा 'सा गोधाऽऽगच्छति' इति मया निश्चयः कृतः। सा रसपानं कर्तुमागात्, ततस्तस्या वलिताया लाङ्गूलेऽहं लग्नवान्। तेन पुच्छेन बहिर्निरगाम्, पश्चात् तद् मुक्तम्, मूर्च्छितश्च पृथिव्यामपतम्। क्षणान्तरेणाऽथ लब्धचेतनः पर्यटन् अरण्यमहिषेण प्राप्तः, तदाऽहं शिला-

---

१ अधःशरीरम्।

मेकामारूढः । तां शिलां तुङ्गशृङ्गेण ताडयन् महिषोऽजगरेण गृहीतः, तदा तयोर्युद्धव्यग्रयोरहमुत्तीर्य नष्टो वेगेनाऽटवीप्रान्तवर्तिनमेकं ग्रामं गतवान् । तत्र मातुलमित्रेण रुद्रदत्ताभिधेनाऽहं दृष्टः, पालितश्च । किञ्चिन्न्यूनलक्षद्रव्यभाण्डं गृहीत्वा ततोऽपि स्थानात् तेन रुद्रदत्तेन समं सुवर्णभूमिं प्रति अचालिषम् । इषुवेगवतीं नदीमुत्तीर्य गिरिकूटमावां गतौ । ततो वेत्रवने गत्वा टङ्कणदेशं प्राप्तौ । तत्र च द्वौ मेषौ गृहीत्वा तदारूढौ अजपथमतिक्रान्तवन्तौ[1] । ततः परं रुद्रोऽवदत्–'अतः स्थानात् पादचारिणां नो मार्गः, तेन हेतुना इमौ द्वौ अजौ हत्वा अन्तर्लोमे बहिर्मांसे द्वे भस्त्रे कुर्वहे । तयोर्मध्ये आवां प्रविशावः, पश्चाद् इहागतैर्भारण्डपक्षिभिर्मांसभ्रमाद् आवां गृहीतौ सुवर्णभूमिं यास्यावः' । तदाऽहमवोचम्–'याभ्यां विषमभूमिमावामुत्तीर्णौ तौ स्वबन्धुवद् अजौ कथं हन्वः?' । एवं मद्वचः श्रुत्वा स उवाच–'एतौ मेषौ न त्वदीयौ' इत्युक्त्वा प्रथमं निजमजं स क्रुद्धोऽवधीत् । तदा द्वितीयोऽजो दीनकातरदृशा मामपश्यत्, तं चाऽहमवोचम्–'त्वां रक्षितुं न समर्थः, किं करोमि ? । तथापि जिनधर्मस्तव शरणं भवतु, सङ्कटे पतिते स एव बन्धुः पिता माता च' । ततो मया कथितं धर्मं स शिरसा प्रतिपन्नवान्, नमस्कारं चाऽश्रौषीत् । ततो रुद्रदत्तेन हतो देवभूयं जगाम । तद्भस्त्रयोरन्तरावां क्षुरीधरौ प्रविष्टौ, तत्रागताभ्यां भारण्डाभ्यां गृहीतौ, एकमांसेच्छया तयोर्द्वयोर्युद्धमभवत्, तदाऽहं सरोवरे पतितः । ततः क्षुरिकया भस्त्रां दीर्त्वा सरस्तीर्त्वा ततो निर-

१ अजेन गम्यते यस्मिन् मार्गे सोऽजपथस्तम् ।

गाम् । अग्रे गच्छन्नटवीमध्ये एकं महापर्वतमद्राक्षम् । तत्र चटितेन मया कायोत्सर्गस्थितो मुनिर्दृष्टो, वन्दितश्च । सोऽपि धर्मलाभं दत्त्वा मामवदत्–"हे चारुदत्त ! त्वं कथमिह विषमभूमौ आगाः ?, यतोऽत्र सुर-विद्याधराणामागतिः, न त्वपरस्य । एषोऽहम् अमितगतिर्यस्त्वया प्राग् मोचितः । तदा हि उत्पतितोऽहं तं वैरिणम् अष्टापदपर्वतसमीपे प्रापम् । मम प्रियां त्यक्त्वा सोऽष्टापदपर्वतविषमस्थाने नंष्ट्वा गतः, तदा तां स्वस्त्रियं पतन्तीं गृहीत्वाऽहं निजस्थानमगमम् । मत्पिता मां राज्ये स्थापयित्वा स्वयं च हिरण्यकुम्भ-स्वर्णकुम्भयतिनोः पार्श्वे व्रतं गृहीतवान् । ततो मम मनोरमायां पत्न्यां सिंहयशाः सुतोऽभवत्, द्वितीयश्च मत्सदृशपराक्रमो वराहग्रीवः पुत्रो जातः । द्वितीयायां विजयसेनायां पत्न्यां सर्वगान्धर्वनिपुणा गन्धर्वसेना पुत्री अभवत् । ततो राज्यं यौवराज्यं विद्याश्च पुत्रयोर्दत्त्वाऽहमपि पितृगुर्वोः पार्श्वे व्रतं गृहीतवान् । अयं लवणसमुद्रमध्यगतः कुम्भकण्ठद्वीपः कर्कोटकश्च शैलः । अथ त्वं कथय, कथमत्राऽऽयासीः ?" । इति मुनिना पृष्टोऽहं सर्वमपि आत्मव्यसनं कथितवान् ।

अत्रान्तरे च तत्सदृशौ विद्याधरौ तत्रैयतुः, तं च प्रणेमतुः । तत्सादृश्यात् तत्सुतौ इति तौ मया ज्ञातौ । ततस्तौ प्रति मुनिरुवाच—'भो भोः! चारुदत्तं प्रणमतम्' । तावपि मां 'तात तात!' इति वदन्तौ प्रणम्य उपविष्टौ । अत्रान्तरे एकं विमानं गगनादवातरत् । तस्माद् एको देव उत्तीर्य प्रथमं मां त्रिः प्रदक्षिणीकृत्य ववन्दे, पश्चात् साधुं प्रणनाम । तदा ताभ्यां खेचराभ्यां वन्दनविपर्ययं पृष्टो देवोऽथा-

ख्यत्–"अयं चारुदत्तो मम धर्माचार्यः। तथाहि–काशीपुर्यां द्वे परिव्राजिके वेदपारगे सुभद्रा-सुलसा-नाम्न्यौ भगिन्यौ बभूवतुः। ताभ्यां बहवो वादिनो जिताः। अन्यदा तद्वादवार्तां श्रुत्वा परदेशतो महावादी याज्ञवल्क्याभिधो महांस्तापसः समागात्। तेन ते द्वे अपि जिते, पूर्वकृतपणत्वेन किङ्कर्यौ जाते। अन्यदा शुश्रूषमाणया नवतरुण्या सुलसया नवतारुण्यो याज्ञवल्क्यः कामाभिलाषी भूतः। पुर्या आसन्न-स्थाने निवसन् स तया सह प्रावर्तत। तस्यां तस्य याज्ञवल्क्यस्य सुतो जातः। तौ लोकोपहासभीतौ सुतं पिप्पलतले मुक्त्वा नंष्ट्वा च गतौ। तज्ज्ञात्वा सुभद्रा तं बालम् अङ्गजत्वेन जग्राह। तं च बालं मुखे पिप्पलफलं स्वयं पतितमदन्तं, विलोक्य, तस्य तेन कारणेन 'पिप्पलाद' इति यथार्थं नाम साऽकरोत्। तं च यत्नाद् अवर्धयत्, वेदादिकं चाऽपाठयत्। महाप्राज्ञो वादिदर्पक्षयकारी सोऽभवत्। तद्वादाय सुलसा-याज्ञवल्क्यौ आगतौ। स द्वावपि वादेऽजयत्। निजौ पितरौ च ज्ञात्वा, 'अमूभ्यामहं जन्मतस्त्यक्त' इति क्रोधमुपागतो माता-पितृमेधप्रमुखान् यज्ञान् स्थापयित्वा, तौ स्वपितरौ सोऽवधीत्। अहं तु पिप्पलाद-शिष्यो वाग्बलिनामा इतस्ततः पशुमेधादिकान् कुर्वन् घोरं नरकमासदम्। नरकान्निःसृत्याऽहं पञ्चवारान् पशुर्जातः, यज्ञे च क्रूरैर्विप्रैः पुनः पुनर्मारितः। ततष्टङ्कणदेशे मेषोऽभूवम्, अनेन चारुदत्तेन आख्यातधर्मो रुद्रेण हतः सौधर्मदेवलोकमाप्नवम्। तेन चारुदत्तो मम धर्माचार्यः प्रथमं मया नमस्कृतः, क्रमो न लङ्घितः"। तेन देवेन तौ खेचरावित्युक्तौ अवोचताम्—'अयं चारुदत्तो यथा तवोपकारी तथैवाऽस्म-

तिपितुरपि जीवदः'। अथ स सुरो मामुवाच–'हे चारुदत्त! ऐहलौकिकं तव प्रत्युपकारमहं किं करोमि ?'। तदा 'समये त्वं समागच्छेः' इति मयोक्तः स देवः स्वस्थानमगात् । ततः खेचराभ्यामहं शिवमन्दिरनगरे नीतः । तत्र ताभ्यां तन्मात्रा तद्बन्धुभिरपरैश्च खेचरैरहं कृतगौरवोऽधिकाधिकं पूज्यमानोऽस्थाम् । इमां गन्धर्वसेनां प्रदर्श्य मां तौ एवमवोचताम्–"अस्मत्तातः प्रव्रजन् आवामेवमादिशत्–'ज्ञानिनाऽस्माकं कथितं यत् कलासु एनां युष्मद्भगिनीं जित्वा वसुदेवकुमारः परिणेष्यति, तद् मम बन्धोश्चारुदत्तस्य भूचरस्याऽर्पणीया यथेमां वसुदेवभूचरः सुखमुद्वहेत्' । तद् इमां स्वपुत्रीं गृहीत्वा गच्छ"। इति तदुदीरिते तां गृहीत्वा स्वपुरं प्रति यावदहमचलं तावता स देव आगतः । ततः स देवस्तौ खेचरौ तत्सेवकाश्चापरखेचरा मां विमानेन लीलया क्षणादिह आनैषुः, सुवर्ण-माणिक्य-मुक्ताफलानां कोटिकोटीर्मम दत्त्वा स देवो विद्याधराश्च स्वस्थानं गताः । प्रातः सर्वार्थमातुलं, मित्रवतीं भार्याम्, आबद्धवेणीं वसन्तसेनां वेश्यां च अहमपश्यम् । वसुदेव! इयं गन्धर्वसेनाकन्याया उत्पत्तिर्मया कथिता । अथ वणिक्पुत्रीति मा कदापि एनामवज्ञासीः"। इति चारुदत्तमुखाद् वृत्तान्तं श्रुत्वा वसुदेवस्तया गन्धर्वसेनया समम् अधिकं रेमे ।

अन्यदा चैत्रमासे आगते तया सह रथारूढः स उद्यानं गच्छन् मातङ्गवेषां मातङ्गपरिवृतामेकां कन्यां ददर्श । गन्धर्वसेना तौ परस्परं सविकारौ दृष्ट्वा सारथिं कृतरक्तलोचनाऽवदत्–'भो भोः सारथे ! त्वरितं रथं

१ या वसुदेवेन गान्धर्वविद्याया जिता । २ मातङ्गवेषा कन्या वसुदेव च ।

वाहय । तेन तथा वाहिते शीघ्रमुपवनं गत्वा तया समं क्रीडित्वा च पुनरपि वसुदेवश्चम्पापुर्यामागात् । तदा तन्मातङ्गगणाद् जरन्मातङ्गिका समागत्य, आशिषं दत्त्वा, उपविश्य चैवं वसुदेवमुवाच—"प्राक् स्वकीयानां सुतादीनां स्वराज्यम् ऋषभजिनो विभज्याऽदात्, तदा तु नमि-विनमी तत्र दैवयोगतो नाऽभूताम् । ततस्तौ व्रतस्थमपि प्रभुं राज्याय सिषेवाते । तयोश्च सेवया सन्तुष्टो धरणेन्द्रः श्रीवैताढ्यपर्वते द्वयोः श्रेण्योः पृथक् पृथग् राज्यमदात् । समये सुतेभ्यो राज्यं दत्त्वा, तौ नमि-विनमी स्वामिसमीपे प्रव्रज्य, मुक्तौ स्वामिनं द्रष्टुमिव मोक्षं गतौ । नमिसुतो मातङ्गः परिव्रज्य दिवमगमत् । तद्वंशे प्रहसितनामा खेचराधिपोऽस्ति, अहं तु तस्य हिरण्यवती भार्याऽस्मि । मम पुत्रः सिंहदंष्ट्रः, तत्सुता नीलयशा या त्वया दृष्टा । तां हे वसुदेवकुमार! परिणय, सा त्वां प्रेक्ष्य मदनार्त्ताऽस्ति, अयं क्षणः शुभो वर्तते, सा विलम्बं न सहते" । तदा शौरिः कथयामास—'त्वं पुनः प्रभाते आगच्छेः, विचार्य वक्ष्यामि' । साऽवोचत्—'त्वं तत्राऽऽगामी अहं वाऽत्रागमिष्यामीति को जानाति ?' । इत्युक्त्वा सा क्वापि ययौ ।

अन्यदा ग्रीष्मे वसुदेवः सरसि क्रीडित्वा गन्धर्वसेनया समं सुष्वाप । तं करेऽत्यन्तं गृहीत्वा 'उत्तिष्ठ' इति वारंवारं वदन्, मुष्ट्या तेन ताड्यमानोऽपि द्रुतमेको भूतोऽहरत्; चितासमीपे नीतश्च । स वसुदेवो ज्वलदनलं घोररूपां च विद्याधरीं हिरण्यवतीं पुरोऽपश्यत् । 'हे भूत ! स्वागतं ते' इति तयाऽऽदरादुक्तः प्रेतस्तस्यै वसुदेवं समर्प्य क्षणेनाऽदृश्यीभूतः । साऽपि स्मित्वा तमूचे—'कुमार! त्वया किं चिन्तितम् ?,

सुन्दर! अस्मदुपरोधाद् इदानीमपि चिन्तय' । तदा तत्र पूर्वदृष्टा सखीसंयुक्ता नीलयशा अप्सरोवृता श्रीरिवागात् । 'गृहाण स्ववरम्' इति पितामह्या[1] हिरण्यवत्योक्ता सा वसुदेवं गृहीत्वा गगनेन ययौ । हिरण्यवती भ्रातर्वसुदेवमुवाच–'हे कुमार! मेघप्रभवनाऽऽकीर्ण एष ह्रीमान् पर्वतः । चारणसाध्वाश्रितेऽत्र ज्वलनपुत्रोऽङ्गारको भ्रष्टविद्यः पुनरपि विद्याः साधयन् वर्तते । तस्य विद्याश्चिरेण सेत्स्यन्ति, परं त्वद्दर्शनेन शीघ्रं सेत्स्यन्ति, तत् तस्योपकाराय तत्र गन्तुमर्हसि' । 'सृतमेतेन दृष्टेन' इति वसुदेवेनोक्ता सा हिरण्यवती वैताढ्ये शिवमन्दिरपुरे तमनैषीत् । ततः सिंहदंष्ट्रनृपेण स्वगृहे नीत्वा याचितस्तां नीलयशसं कन्यकां स परिणीतवान् ।

तदा च तुमुलशब्दं श्रुत्वा वसुदेवः कारणं प्रपच्छ । द्वाःस्थ आख्यत्–"अत्र शकटमुखपत्तनमस्ति । तत्र राजा नीलवन्नामा, तस्य नीलवती प्रिया, तयोर्नीलाञ्जना सुता नीलश्च सुतः । भ्रातुर्भगिन्या समं पूर्वमिति सङ्केतोऽभवद् यद्–'आवयोर्मिथः पुत्रस्य पुत्र्या समं पाणिग्रहणं कार्यम्' । नीलाञ्जनायाः पुत्री इयं त्वत्प्रिया नीलयशा अभवत्, नीलकुमारस्य तु नीलकण्ठाभिधः सुतः । अथ नीलः सुतार्थे सङ्केतदत्तामेतां याचितवान्, परम् एतत्पित्रा[2] बृहस्पतिनामा मुनिः पृष्टस्तदा सोऽभाषत—'अर्धभरतपतेर्विष्णोः पिता यदुकुलसम्भवो वसुदेवो मन्मथसौभाग्य एतस्या वरो भावी' । ततो राज्ञा विद्यया आनीतस्त्वम् इमां

१ पितुर्मात्रा । २ नीलयशसः पित्रा सिंहदंष्ट्रेण ।

परिणीतवान्। तदर्थे नील आगतो, जितश्च । तेनायं तुमुलशब्दः” । इति निशम्य तया समं क्रीडन् कुमारो मुमुदे ।

अन्यदा शरदि विद्यौ-षधीभ्यो ह्रीमन्तं यांतः खेचरान् ददर्श । तदा 'विद्यादाने तव शिष्यो भवामि' इति स नीलयशसमवदत् । 'आम्' इत्युक्त्वा तं गृहीत्वा सा ह्रीमन्तं पर्वतं जगाम । तत्र कुमारं रन्तुकामं ज्ञात्वा सा कदलीगृहं विकृत्य तं रमयामास । तदा च सा एकं मयूरमपश्यत् । तदा तं वर्णयितुं लग्ना— 'अहो! पूर्णकलापोऽयं मयूरो वर्तते' । ततः सा सविस्मया स्वयमेव तमानेतुं दधावे । मयूरसमीपं गता । स तु मायी स्वांसे तामारोप्य जहे, गगने च गरुड इवोत्पतितः । वसुदेवोऽपि तमनुधावन् घोपे गतवान् । तत्र गोपिकार्चितो निशामुषित्वा प्रातर्दक्षिणां प्रति प्राचलत् । गिरितटग्राममगात् । तत्र वेदध्वनिं प्रौढं श्रुत्वा कमपि द्विजं तत्पाठकारणं पप्रच्छ । स द्विजो बभाषे—“भोः कुमार ! प्राग् दशग्रीवसमये दिवाकरनामा विद्याधरो नारदर्षये स्वपुत्रीमदात् । तद्वंशे सुरदेवो ग्रामणीर्द्विजोऽस्ति । तस्य क्षत्रियानाम्न्यां पत्न्यां वेदज्ञा सोमश्रीः सुता जाताऽस्ति । पित्रा तस्या वरार्थं पृष्टः करालनामा ज्ञानी अवोचत—'एतां यो वेदेषु विजेता स परिणेष्यति' । ततस्तां विजेतुमयं लोको वेदाभ्यासपरो वर्तते । अत्र च ब्रह्मदत्तोपाध्यायो वेदपाठकोऽस्ति” । अथ कौतुकी कुमारस्तं वेदाचार्यं विप्रीभूय इत्यूचे—'अहं गौतमगोत्रः स्कन्दि-

१ द्वितीयाबहुवचनम् । २ व्रजे ।

लनामा द्विजस्त्वत्पार्श्वे वेदान् अध्येष्ये'। तेनाप्यनुज्ञातो वेदानपठत्। क्रमेण वेदेषु सोमश्रियं जित्वा स परिणीतवान्। तया सह विलसन् वसुदेवस्तत्र तस्थौ।

अन्यदा वसुदेव उद्यानं गतवान्। तत्रेन्द्रशर्माभिधम् इन्द्रजालिकं ददर्श। तस्य चमत्कारकरीं विद्यां दृष्ट्वाऽयाचत। सोऽप्युवाच—'इमां मानसमोहिनीं विद्यां गृहाण। इयं विद्या सायमारब्धा रवेरुदये सिध्यति, परं बहूपसर्गा, तेन कारणेन कोऽपि सहायी विधीयताम्'। कुमार ऊचे—'मम वैदेशिकस्य कुतः सहायी?'। इति श्रुत्वा स उवाच—'हे भ्रातः! तव सहायी अहमस्मि, इयं च तव भ्रातुः स्त्री वनमाला तथैव ज्ञेया'। इत्युक्तो वसुदेवस्तां विद्यामग्रहीत्। विधिवच्च जपन् स मायाविना इन्द्रशर्मणा शिबिकयाऽपजह्रे, परं कुमारस्तमुपसर्गं चिन्तयन् विद्यां जजाप। प्रातस्तां मायां ज्ञात्वा शिबिकाया उत्तीर्णः, तदैव च इन्द्रशर्मादिषु धावत्स्वपि यादवोऽतिगच्छन् दिनशेषे तृणशोषकं सन्निवेशं प्राप। तत्र च देवकुले सुप्तो वसुदेवो नरादेनागत्य शीघ्रमुत्थापितः। तं कुमारो मुष्टिभिः कुट्टयामास। ततश्चिरं परस्परं बाहुयुद्धं कृत्वा तं नरादं यादवोऽवध्नात्, तं पृथिव्यामास्फाल्य रजकः शिलायां वस्त्रमिव अवधीत्। प्रातर्लोकोऽपि दृष्ट्वा प्रीतो वसुदेवं रथे आरोप्य वाद्यमानेन वादित्रेण वरमिव सन्निवेशमध्येऽनयत्। ततः पञ्चशतकन्यास्तस्मै अढौकयत्, तदा ता निषिध्य कुमारोऽब्रवीत्—'अत्राऽसौ नरादः कः?'। तदा कश्चिदाचख्यौ—

१ नरान् अत्तीति नरादो राक्षसः—राक्षससदृशो मनुष्यभक्षकः क्रूरो नृपपुत्रस्तेन।

"कलिङ्गदेशे काञ्चनपुरे जितशत्रू राजा, तस्य सुतोऽयं सोदासः। स स्वभावेन मांसलोलुपः। राज्ञा तु स्वदेशे जीवानामभयं दत्तम्, परं तेन सुतेन दिने दिने एकमयूरमांसं स्वपिता याचितः, तदाऽनिष्टमपि पुत्रस्नेहेन तत् प्रतिपेदे। प्रतिदिनं सूदाः पाकाय मंशगिरेर्मयूरमानयन्। अन्यदा पाकाय हतो मयूरो मार्जारेण हृतः, तदा तस्य सूपकारा मृतबालकस्य मांसं पक्त्वा तस्मै ददुः। 'अद्य स्वादुतरं मांसं किमस्ति?' इति स तानपृच्छत्, तदा यथातथे कथिते सोदासोऽप्येवमादिशत्—'अतः परं मयूरस्थाने नरः संस्कार्यः'। इत्युक्त्वा स्वयं नित्यं बालान् जहार। नृपेण ज्ञातः, कोपाद् देशात् कर्षितश्च। ततः पितृभीतः सोऽत्र दुर्गे निवसन् प्रतिदिवसं पञ्चषान् मनुष्यान् निघ्नन् साधु त्वया मारितः"। इति तेनोक्तः कुमारो मुदा ताः कन्याः परिणीतवान्। तत्र च निशाम् उषित्वा सोऽचलग्रामं ययौ। तत्र सार्थवाहपुत्रीं मित्रश्रियं परिणीतवान्, पूर्वं ज्ञानिना तस्या वरत्वेन यादवः कथितोऽभूत्। तत्स्थानाद् वेदसामपुरं गच्छन् तया वनमालया 'देवर! एहि एहि' इत्युक्त्वा स निजगृहे निन्ये। तया च 'स वसुदेवोऽयम्' इत्याख्यातेऽथ तत्पिता स्वागतं पृष्ट्वाऽऽख्यत्—"अत्र कपिलनृपोऽस्ति, अस्य कपिलानाम्नी कन्या। तस्या वरो ज्ञानिना गिरितटग्रामे तिष्ठन् हे महात्मन्! त्वं प्राक् कथितः। 'स्फुलिङ्गवदनं नाम तुरङ्गं स दमयिष्यति' इति तेनैव ज्ञानिना तवोपलक्षणायोपाय उक्तोऽभूत्। ततस्त्वामानेतुं मम जामाता इन्द्रजालिक इन्द्रशर्मा राज्ञा प्रेषितः, परं त्वम् अन्तरैव गत इति स आख्यत्। अथ भाग्येनागतोऽसि, तुरङ्गमं दमय"। इति

तेनोक्तो वसुदेवस्तं तुरङ्गमं दमयित्वा कपिलोद्वाहं चक्रे । तेन राज्ञा श्यालकेन अंशुमता चाऽऽग्रहं कृत्वा कत्यपि दिनानि वसुदेवो रक्षितः । तत्र कपिलायां कपिलनामा पुत्रो जातः ।

अन्यदा हस्तिबन्धे[1] कुमारो गतः । तत्रैकं हस्तिनं बद्ध्वा तस्य स्कन्धमारुरोह । तं मायया गगने उत्पतन्तं दृष्ट्वा कुमार एकया मुष्ट्या जघान, तदा सरस्तीरे पतन् स नीलकण्ठाभिधः खेचरोऽभवत्; यो नीलयशोविवाहे सङ्ग्रामे आगमत् । अथ ततोऽपि स्थानात् कुमारः सालगुहपुरे ययौ । तत्र भाग्यसेनं नृपं धनुर्वेदमशिक्षयत् । अन्यदा भाग्यसेनेन समं योद्धुं तदग्रजं मेघसेनं तत्रागतं वसुदेवः पराजिग्ये, तदा भाग्यसेनः पद्मावतीं स्वपुत्रीं वसुदेवाय ददौ । मेघसेनोऽपि अश्वसेनां स्वकन्यां कुमारायार्पयत् । तत्र चिरं ताभ्यां रन्त्वा, भद्दिलपुरे जगाम । तत्राऽपुत्रमृतस्य पुण्ड्राजभूपस्य पुण्ड्रानाम्नीं कन्याम् औषध्या नररूपां राज्यं पान्तीं[2] स ददर्श । 'स्त्री' इति स्वमत्या ज्ञात्वा तां सानुरागां परिणीतवान् । तस्यां पुण्ड्रनामा पुत्रो जातः, स राजाऽभवत् ।

अन्यदा तत्र विद्याधरोऽङ्गारको रात्रौ हंसकपटाद् वसुदेवं हृत्वा गङ्गायां चिक्षेप । तां तीर्त्वा प्रातरिलावर्धनं नाम पुरमद्राक्षीत् । तत्र सार्थवाहस्य हट्टे तदनुज्ञया स उपाविशत् । तत्प्रभावात् तस्य हेमलक्षलाभोऽभवत् । सोऽपि सार्थेशस्तत्प्रभावं ज्ञात्वा तं गौरवाद् आललाप, स्वर्णरथे चारोप्य गृहेऽनयत्; स्वां

१ गजशालायाम् । २ पालयन्तीम् ।

कन्यां रत्नवतीं च पर्यणाययत्। अन्यदा इन्द्रमहे जाते श्वशुरेण समं दिव्यं स्यन्दनं चटितो वसुदेवो महापुरे ययौ। पुराच्च बहिर्नवीनान् प्रासादान् प्रेक्ष्य यादवः श्वशुरं पप्रच्छ—'इदं पुरं नूतनप्रासादव्यासम्, तस्य किं कारणम्?'। तदा सार्थवाहोऽवदत्—'अत्र सोमदत्तो राजा, तस्य सोमश्रीः कन्या। तस्याः स्वयंवराय इमे प्रासादाः कारिताः। आकारिताश्च भूयो नृपाः, परं तेषाम् अपाटवाद् विसृष्टाः'। इति श्रुत्वा, यादवो गत्वा शक्रस्तम्भं नमस्कारमकरोत्। तत्र च पूर्वमागतं राज्ञोऽन्तःपुरं शक्रस्तम्भं नत्वाऽचलत्। तदा तत्र मदोन्मत्तो राजगज आलानस्तम्भमुन्मूल्य आगात्, सोऽकस्माद् राजकुमारीं रथात् पातयामास। तां दीनाम् अशरणां कुमारः प्रेक्ष्याऽग्रे स्थित्वा तं गजमतर्जयत्, तदा तां त्यक्त्वा क्रुद्धो हस्ती यादवाय दधावे। सोऽपि तं दुर्धरं महाबलं खेदयामास, किं बहुना? वशीकृतः। अथ तां कुमारीमेकत्र गृहे नीत्वा पवनादिना आश्वासयामास। ततः सा धात्रीभिर्गृहे निन्ये। पश्चाद् वसुदेवस्तु श्वशुरसंयुक्तः कुबेरसार्थवाहेन गौरवाद् मन्दिरे नीतः। तत्र स्नातभुक्तो यावद् अस्थात् तावत् तत्रागता राजप्रतीहारी जयाशीःपूर्वकम् इदमब्रवीत्—"भोः कुमार! सोमदत्तराजस्य सोमश्रीः कन्या। तस्याः स्वयंवरे वरः स्याद् इति प्रागभूत्, परं सर्वाणसाधोः केवलज्ञानमहोत्सवे आगतान् देवान् पश्यन्त्यास्तस्या जातिस्मरणमजायत। तत्प्रभृति सा मौनं कृत्वाऽस्थात्। अन्यदा मया रहसि पृष्टा सती इत्यब्रवीत्—'महाशुक्रे देव आसीत्। तेन तत्र जन्मनि मया सह अतिवल्लभतया भोगा भुक्ताः। अन्येद्युर्मयैव सह अर्हज्जन्मोत्सवं नन्दीश्वरा-

दिषु यात्रां च कृत्वा स्वस्थानाय निवृत्तवान्। यावच्च ब्रह्मदेवलोकेऽगात् तावत् सोऽमरश्च्युतः। तदा शोकपीडिताऽहं तं मार्गयन्ती अत्र भरते कुरुषु आगाम्। तत्र केवलिनौ दृष्ट्वाऽपृच्छम्–'दिवश्च्युतो मम पतिः क्वोत्पन्नः ?'। तत एवं तौ जजल्पतुः–'तव पतिर्हरिवंशे राजमन्दिरेऽवतीर्णः, त्वमपि च्युत्वा राजपुत्री भाविनी। यदा शक्रमहोत्सवे त्वां गजाद् मोचयिष्यति तदानीं स पुनरपि ते पतिर्भावी'। इति श्रुत्वा हृष्टाऽहं तौ वन्दित्वा तदा स्वस्थानं गता, क्रमात् स्वर्गाच्च्युता सोमदत्तनृपस्य पुत्री जाता। सर्वाण-साधुकेवलोत्सवे देवान् प्रेक्ष्य मम जातिस्मरणमुत्पन्नं, तेन एतदज्ञासिषं, तस्मात् कारणाद् मौनं कृतम्'। एतस्याः सर्वं वचनं मया राज्ञे कथितम्, ततस्तेन स्वयंवरागताः सर्वेऽपि नृपा विसृष्टाः। अथ त्वया गजाद् मोचितायास्तस्याः प्रत्ययोऽभवत्, ततस्त्वामानेतुमहं प्रेषिताऽस्मि। तद् एहि, हे वीर! तामुद्वह"। ततस्तया समं वसुदेवो नृपगृहे गत्वा सोमश्रियं परिणीतवान्, तया च समं यथेच्छं रेमे।

अन्यदा सुप्तोत्थितः कुमारस्तां मृगलोचनां नाऽपश्यत्, तदा करुणस्वरं रुदन् शून्यचित्तो दिवसत्रितयं तस्थौ। पश्चाद् उपवने गतो वसुदेवस्तां दृष्ट्वा उवाच–'हे सुन्दरि! त्वं केनाऽपराधेन इयच्चिरं मां पीडयसि ?'। साऽप्यूचे–'प्राणेश! त्वत्कृते मया विशिष्टो नियमः कृतः, दिनत्रयं च मौनं कृत्वा स्थिताऽस्मि। अयं ह्यत्र विधिर्यद् एतां देवीं पूजयित्वा पुनरपि मम पाणिग्रहणं कुरु'। वसुदेवोऽपि तत्तथा चक्रे। तया 'इयं देव्याः शेषा' इति कथयित्वा वसुदेवो मदिरां पायितः, ततः स तया समं कान्दर्पि-

कस्तुर इव रतिसुखमतीव बुभुजे । तया सार्धं निशि सुप्तो वसुदेवो निद्राच्छेदे तामन्यरूपां दृष्ट्वा उवाच—'हे सुभ्रु ! त्वं काऽसि ?' । साऽप्यवोचत्—'दक्षिणश्रेण्यां सुवर्णाभपुरे चित्राङ्गनामा नृपोऽभूत् । तस्याऽङ्गारवती राज्ञी । तयोर्मानसवेगः पुत्रः, अहं च वेगवती कन्या । मानसवेगं राज्ये न्यस्य मत्पिता चित्राङ्गराजः प्रवव्राज । हे स्वामिन् ! तेन निर्लज्जेन मद्भ्रात्रा तव भार्या हृता, रतये च मन्मुखेन विचित्रैः स्वादुभिर्वचनैर्भणिता, परं तव महासती पत्नी तन्न प्रत्यपद्यत । मां सखीत्वेनाऽमंस्त, त्वामानेतुं च साऽऽदिशत् । अत्राऽऽयाताऽहं त्वां दृष्ट्वा मदनार्त्ता ईदृशमकार्षम् । अथ मम कुलकन्यायाः पतिरुद्वाहपूर्वकस्त्वमेव' । प्रातःकाले वेगवतीं प्रेक्ष्य सर्वोऽपि लोको विस्मयं प्राप । पत्याज्ञया च सा सोमश्रीहरणं लोके आचख्यौ ।

अन्यदा निशि रतश्रान्तस्तया सह सुप्तो वसुदेवो मानसवेगेन जह्रे । वसुदेवेन ज्ञात्वा स खेचरो मुष्ट्या जघ्ने, तदा प्रहारार्त्तः खेचरस्तं कुमारं गङ्गाजलेऽमुञ्चत् । कुमारस्तु विद्यां साधयतस्तत्रस्थस्य चण्डवेगखेचरस्य स्कन्धे पतन् विद्यासिद्धिकारणमभवत् । तदा 'त्वत्प्रभावाद् विद्या सिद्धा, हे महात्मन् ! तव किं ददामि ?' इति तेनोक्तः कुमारो गगनगामिनीं विद्याममार्गत् । स खेचरस्तां विद्यां ददौ, वसुदेवोऽपि कनखलपुरस्य द्वारे तां विद्यां साधयितुमारेभे । ततश्चण्डवेगे गते विद्युद्वेगनृपपुत्री मदनवेगा तत्राऽऽगता तं ददर्श । सा च मदनार्ता वसुदेवं वैताढ्ये नीत्वा पुष्पशयनोद्यानेऽमुञ्चत्, स्वयं तु अमृत-

धाराभिधाने नगरे प्रविवेश । प्रातस्तस्या भ्रातरस्त्रयोऽपि तत्रैत्य तं कुमारं नमस्कारमकार्षुः । तेषु प्रथमो दधिमुखो, द्वितीयो दण्डवेगः, तृतीयश्चण्डवेगो यस्तस्य विद्यादायी अभवत् । ते त्रयोऽपि वसुदेवं पुरे नीत्वा तया मदनवेगया समम् उद्वाहयामासुः । सोऽपि तया समं रेमे ।

अन्येद्युर्मदनवेगया सन्तोष्य याचितः कुमारस्तस्यै वरं ददौ । एकदा दधिमुखो वसुदेवं नमस्कृत्य इद-मवदत्—"दिवस्तिलकनाम्नि नगरे त्रिशिखरनृपोऽस्ति । स च स्वसुतस्य सूर्पकस्यार्थे मत्पितुः पार्श्वे मदनवे-गाम् अयाचिष्ट, परं मत्पिता विद्युद्वेगो नाऽदत्त । पित्राऽन्यदा पुत्रीवरं पृष्टश्चारणर्षिरवदत्—'हरिवंश्यो वसु-देवस्त्वत्पुत्रीवरो भावी । स च गङ्गायां विद्याः साधयतश्चण्डवेगस्य स्कन्धे निशि पतिष्यति, चण्डवेगस्य विद्या अपि तत्क्षणात् सेत्स्यन्ति' । इति श्रुत्वा मत्पिता तस्मै विशेषतः कन्यां नो दत्तवान् । तदा बलगर्वि-ष्ठेन त्रिशिखरनृपेण मम जनको बद्ध्वा रोषेण स्वपुरे नीतः । अथ मदनवेगायाः स्वपत्न्याः स्वयं दत्तं वरं स्मरन् इदानीं श्वशुरं मोचय, मां च श्यालकमनुगृहाण । अस्माकं वंशस्य मूलं तु नमिः । तस्य नन्दनः पुलस्त्यः । तद्वंशे मेघनादोऽभवत् । तस्मै सुरेश्वरनृपजेत्रे स्वश्वशुराय तुष्टः सुभूमचक्री जामाता श्रेणि-द्वयं ब्राह्मा-ऽऽग्नेयादीनि चाऽस्त्राणि ददौ । तस्य वंशे राजा रावणो विभीषणश्चाऽजनि । मत्पिता विद्युद्वेगस्तु विभीषणाऽन्वयेऽभूत् । क्रमायातानि तान्यस्त्राणि त्वमादत्स्व, हे महाभाग ! तव सफलानि भावीनि, निर्भाग्याणामस्माकं तु मुधैव" । इत्युक्त्वा तेनार्पितानि अस्त्राणि गृहीत्वा वसुदेवो विधि-

पूर्वकमसाधयत्, पुण्यैः किं न सिध्यति ? । अथ मदनवेगां भूचराय दत्तां श्रुत्वा क्रोधाग्निध्मातस्त्रिशिखरः स्वयं संग्रामायाऽऽगमत् । तदा कुमारो मायामयं सौवर्णं तुण्डविद्याधरार्पितं स्यन्दनमारूढो दधिमुखादिभिः परिवृतो युयुधे, ऐन्द्रेण चाऽस्त्रेण क्षणात् त्रिशिखरशिरोऽच्छिदत् । ततो दिवस्तिलकपुरमेत्य तं श्वशुरममोचयत् । ततः श्वशुरपुरे एत्य विलसतो वसुदेवकुमारस्य मदनवेगायां पत्न्याम् अनाधृष्टिर्नाम पुत्रो बभूव ।

अन्यदा खेचरसंयुक्तः सरागाभिः खेचरीभिर्वारंवारमीक्ष्यमाणः स सिद्धायतनयात्रां चक्रे । यात्रायाश्चागतः सन् 'एहि वेगवति !' इति मदनवेगां वसुदेवो व्याहार्षीत्, तदा सा क्रुद्धा तल्पं ययौ । तस्मिन् समये त्रिशिखरपत्न्या सूर्पणख्या मदनवेगारूपया तद्गृहं निर्दह्य कुमारोऽहारि । तया तु जिघांसया गगनान्मुक्तो वसुदेवो राजगृहान्तिके तृणपुञ्जस्योपरि पपात । तत्र जरासन्धे गीयमाने राजगृहं ज्ञात्वा पाशकक्रीडास्थाने गतः, अक्षैश्च स्वर्णकोटिं जित्वा याचकेभ्यो ददौ । तदाऽऽरक्षैर्बद्ध्वा नृपगृहं नीतः । ततः 'अपराधं विना किं बद्धोऽस्मि ?' इति तान् सुभटान् कुमारोऽपृच्छत् । तेऽपि कथयितुं लग्नाः—"ज्ञानिना जरासन्धस्योक्तमस्ति—'यः प्रभाते कनककोटिं जित्वाऽर्थिनां दाता तत्सुतस्तव वधकारी भावी' । स त्वमसि, तेन त्वं निरपराधोऽपि राजाज्ञया मार्यसे" । इत्युक्त्वा ते भस्त्रामध्ये वसुदेवं प्रचिक्षिपुः । अपवादभयाच्च ते वसुदेवं छन्नं जिघांसवः पर्वताद् अलोठयन्,

तदा वेगवत्या धात्री तं पतन्तमग्रहीत् । तया नीयमानो वसुदेवो मनसि दध्यौ–'अहमपि चारुदत्त इव भारण्डैर्गगने गृहीतो मन्ये'। तया पर्वते मुक्तः स वेगवत्याः पादद्वयमपश्यत्, उपलक्ष्य च भस्राया बहिर्निर्ययौ, तावद् 'नाथ! नाथ!' इति रुदती तामालिलिङ्ग । ततः 'त्वयाऽहं कथं प्राप्त' इति यादवोऽपृच्छत् । साऽश्रूणि उन्मृज्याऽवोचत्–"हे स्वामिन्! तदा शयनोत्थितया मयाऽभाग्ययोगात् त्वं तल्पे न दृष्टः । तदा सर्वान्तःपुरस्त्रीभिः समं करुणस्वरं रुदत्या मम प्रज्ञप्त्या विद्यया तव हरणं पतनं च कथितम् । ततः परम् अजानानाऽहं व्यमृशं यद्–'मम पतिः कस्यापि ऋषेः पार्श्वे गतो भावी, तत्प्रभावतो विद्या नाचष्टे'। ततस्त्वद्वियोगपीडिता कमपि कालं स्थित्वा, नृपानुज्ञया तव विलोकनाय जगद् भ्रान्ता । भ्रमन्ती सिद्धायतने मदनवेगया समं दृष्टोऽसि, तच्चैत्याद् नगरं प्राप्तं त्वां शीघ्रमहमनुप्रापम् । तत्र च अन्तर्हिताऽहं यत्त्वया मम नामोदीरितं तद् अश्रौषम्, तदा च तव स्नेहतश्चिरतरं विरहोद्भूतं क्लेशममुञ्चम् । तदा क्रुद्धा मदनवेगाऽन्तर्गृहं प्रविवेश । अथ सूर्पणख्या औषधीबलात् प्रदीपनं कृतं, तयैव च मदनवेगारूपया त्वं हृतः । तयोत्पाट्यमानं त्वां धर्तुं कल्पितमानसवेगरूपाऽहमन्वधावम्, अधस्ताच्च स्थिताऽहं तया विद्यौषधिसमर्थया दृष्टा तर्जिता च । तदा तस्या नष्टाऽहं चैत्याय यान्ती साधुमलङ्घयम्, ततो मम विद्या भ्रष्टाः । तदा च धात्री मिलिता, तव शुद्ध्यर्थं सा नियोजिता । तया भ्रमन्त्या त्वं पर्व-

ताग्रतः पतन् गृहीतः, अथ प्रभो ! पञ्चनदे ह्रीमत्तीर्थे मुक्तः" । इति श्रुत्वा तया समं वसुदेवस्तत्र तापसाश्रमे तस्थौ ।

सोऽन्यदा नद्यां नागपाशनियन्त्रितामेकां कन्यां ददर्श । तदा वेगवत्या प्रेरितः स्वयं च कृपापरो वसुदेवः कन्यां नागपाशबन्धाद् अमोचयत् । कुमारेण जलसेचनतो मूर्च्छिता सोत्थापिता । ततस्त्रिः प्रदक्षिणीकृत्य सा वसुदेवमुवाच—"हे महापुरुष! त्वत्प्रभावाद् मम विद्याः सिद्धाः । अथ मम सम्बन्धं शृणु—वैताढ्ये दक्षिणश्रेण्यां गगनवल्लभपुरे नमिवंशे विद्युद्दंष्ट्रो राजाऽभूत् । सोऽन्यदा पश्चिममहाविदेहे गतः । तत्र प्रतिमाधरमेकं मुनिमद्राक्षीत् । तदा सोऽवोचत्—'भोः ! कोऽप्ययमुत्पातः, तद् एनं वरुणपर्वते नीत्वा हत' इत्युक्त्वा विद्याधरैस्तमतीवाऽताड्यत् । परं शुक्लध्याननिलयस्य तस्य मुनेस्तु केवलज्ञानमुत्पन्नम् । तदा तन्महिमकरणार्थं धरणेन्द्र आययौ, तस्य साधोस्तान् प्रत्यनीकान्[1] क्रोधेन भ्रष्टविद्यान् चकार । ते दीनास्तं चैवमूचिरे—'भोः स्वामिन् ! एष कः? इति न विद्मः, एतस्मिन् मुनौ अस्माभिरवज्ञाकर्म कृतं तत्तु केवलं विद्युद्दंष्ट्रप्रेरणात्' । धरणेन्द्र उवाच—'अस्य केवलज्ञानोत्सवेऽहमागमम्, अरे पापाः! वोऽज्ञानां किं करोमि ? । अधुना भूयो बहुक्लेशेन वो विद्याः सेत्स्यन्ति, परं तीर्थङ्कराणां साधूनां श्राद्धानां चोपरि द्वेषं वहतां ताः क्षणाद् मोक्ष्यन्ति । अस्य दुष्टस्य दुर्मते-

१ प्रतिपक्षान्—शत्रून् ।

विद्युद्दंष्ट्रस्य तु रोहिण्याद्या महाविद्या न सेत्स्यन्ति, तस्य सन्ताने पुरुषस्य स्त्रिया अपि च न सेत्स्यन्ति; परं महापुरुषस्य साधोश्च दर्शनात् ताः सेत्स्यन्ति"। इत्युक्त्वा धरणेन्द्रो निजस्थानमगात् । तद्वंशसम्भवा केतुमतीनाम्नी कन्या अत्र विद्याः साधयन्ती प्राक् पुण्डरीकवासुदेवेन परिणीता आसीत्। तद्वंशोत्पन्नां[1] च मां त्वत्प्रभावात् सिद्धविद्यां बालचन्द्राभिधानां वशंवदां परिणय । हे महापुरुष! विद्यासिद्धिहेतोस्ते किं ददामि ?"। तदा 'वेगवती विद्यां देहि' इति कुमार ऊचे। ततः सा वेगवतीं गृहीत्वा गगनवल्लभपुरे ययौ। वसुदेवस्तु तापसाश्रममगात्, तावत्तत्र तत्कालं गृहीतव्रतौ स्वं पौरुषं निन्दन्तौ भूपावागतौ। तौ प्रेक्ष्य कुमार उद्वेगकारणं पप्रच्छ, तदा तौ जजल्पतुः—"श्रावस्तीपुर्यां पुण्यात्मा एणीपुत्रो राजाऽस्ति। तेन राज्ञा स्वपुत्र्याः प्रियङ्गुसुन्दर्याः स्वयंवरकृते बहवो नृपा आकारिताः, परं तत्पुत्र्या एकोऽपि राजा न वृतः। ततस्तैः क्रुद्धैर्भूपालैर्मिलित्वा सङ्ग्राम आरम्भि, परम् एकेनापि तत्पित्रा सर्वेऽपि जिताः। तदा भीता नष्टाश्च केचिद् गिरिषु केऽपि अरण्ये केऽपि पानीयेषु प्राविशन्, हे महापुरुष! आवां तु वृथाभुजौ तापसौ भूतौ"। इति श्रुत्वा तौ प्रति वसुदेवो जैनधर्ममबोधयत्, ततस्तौ प्राव्रजताम्। कुमारस्तु श्रावस्त्यां ययौ। तत्रोद्याने स त्रिद्वारं देवकुलं प्रेक्षते स्म, तत्र दत्तद्वात्रिंशदर्गले मुख्यद्वारे दुष्प्रवेशत्वाद् पार्श्वद्वारेण स प्रविष्टः। तस्मिन् देवगृहे वसुदेव एकस्तर्पैः गृहस्थस्य त्रिचरणमहिषस्य

१ विद्युद्दंष्ट्रवंशोत्पन्ना।

च प्रतिमा ऐक्षत । ततस्तेनैको विप्रः पृष्टः । सोऽभाषत—"अत्र जितशत्रुनृप आसीत् । तस्य पुत्रो मृगध्वजः । अत्र श्रेष्ठी कामदेवोऽभूत्, सोऽन्यदा स्वगोष्ठे ययौ, तदा दण्डकनाम्ना निजगोपालेन जगदे—'अस्या महिष्याः पञ्च पुत्राः पूर्वं मया हताः । अयं तु षष्ठः पुत्रोऽतीव मनोहररूपो जातोऽस्ति, जातमात्रोऽपि भयात् कम्पमानश्चलेक्षणो मम पादौ नमति स्म, अतो मया कृपया त्रातः । त्वमप्यस्याऽभयं देहि, अयं हि कोऽपि जातिस्मरणसंयुक्तः' । इत्युक्तः श्रेष्ठी दयया तं महिषं श्रावस्त्यामनयत् । तत्र श्रेष्ठिना तस्याऽभयं याचितो राजा ददौ । ततः परं स महिषो निर्भयोऽभ्रमत् । एकदा मृगध्वजकुमारस्तस्यैकं पादमच्छिनत्, तज्ज्ञात्वा राज्ञा कर्षितः स प्रव्रज्यां ललौ । स महिषोऽष्टादशे दिवसे मृतः । मृगध्वजस्य तु द्वाविंशे दिने केवलज्ञानं प्रादुर्बभूव । तदा सुरा-ऽसुर-नर-विद्याधरपतयस्तमागत्य ववन्दिरे । देशनान्ते जितशत्रुनृप ऊचे—'हे प्रभो! महिषेण सह भवतां किं वैरम्?' । केवली कथयामास—'पूर्वमश्वग्रीवोऽर्धचक्री बभूव । तस्य प्रधानो हरिश्मश्रुः । स नास्तिको धर्मं निनिन्द, परं राजा सदाऽऽस्तिको धर्मं स्थापयामास । एवं तयोर्नृप–मन्त्रिणोर्विरोधो ववृधे । तौ त्रिपृष्ठा-ऽचलाभ्यां हतौ सप्तमं नरकं गतौ । तत उद्धृत्य तौ बहुभवान् परिभ्रेमतुः । ततोऽश्वग्रीवजीवस्तव पुत्रोऽहमभवं, हरिश्मश्रुजीवो महिषोऽभूत् । पूर्ववैराद् मया तस्य पादोऽच्छिद्यत, स मृत्वाऽयं लोहिताक्षोऽसुरो भूतो यो मां सम्प्रति वन्दितुं समायातोऽस्ति । ईदृशं संसारनाटकम्!' । तत ऋषिं प्रणम्य लोहिताक्षस्तस्य मृगध्वजर्षेः, श्रेष्ठिनः कामदेव-

स्य, त्रिपदो महिपस्य च रत्नमयमूर्त्तीरिह चकार । तस्य कामदेवश्रेष्ठिनो वंशेऽधुना कामदत्तो नाम श्रेष्ठी वर्तते, तस्य बन्धुमती पुत्री । एकदा तद्वरार्थं श्रेष्ठिना ज्ञानी पृष्टोऽकथयत्—यो देवकुलमुखद्वारमुद्घाटयेत् स त्वत्सुतावरो भावी"। वसुदेवस्तच्छ्रुत्वा तद्द्वारमुद्घाटयामास । तदैव श्रेष्ठी तत्रागत्य तां कन्यां कुमाराय ददौ । तं द्रष्टुं राजपुत्री प्रियङ्गुसुन्दरी पित्रा सहागता । दृष्ट्वा मदनार्ता जाता । ततस्तस्या द्वाःस्थस्तां स्वामिनीदशां एणीपुत्रनृपचरितं च रचिताञ्जलिर्वसुदेवायाऽऽख्यत् । 'प्रातः प्रियङ्गुसुन्दर्या गृहे त्वमवश्यमापतेः' इत्युक्त्वा स द्वाःस्थो ययौ । कुमारस्तु नाटकमद्राक्षीत्, तत्राऽश्रौषीत्—'नमिपुत्रः खेचरो वासवोऽभवत्, तद्वंश्या अन्ये वासवाः, तद्भवश्च पुरुहूतः । सोऽन्यदा गजमारूढोऽटन् गौतमस्त्रीम् अहल्यामाश्रमे दृष्ट्वा तया सह रेमे । तदा तस्य गतविद्यस्य गौतमः पुंलिङ्गमच्छिदत्' । तन्निशम्य यादवो भीतः प्रियङ्गुसुन्दरीगृहे न गतः । अथ बन्धुमत्या समं निशि सुप्तः सन् निद्रात्यये स एकां देवीं ददर्श । 'काऽसौ ?' इति चिन्तयन्तं तं 'हे वत्स ! किं चिन्तयसि ?' इति जल्पन्ती सा तं करे गृहीत्वाऽशोकवनिकायामनैषीत् । इत्यूचे च—

"अत्र भरते चन्दनपुरेऽमोघरेता राजा । तस्य चारुमती राज्ञी । चारुचन्द्रः पुत्रः । तत्राऽनङ्गसेना वेश्या, तस्याः कामपताका पुत्री । अन्यदा तस्य राज्ञो यज्ञे तापसा एयुः । तेषु कौशिक-तृणबिन्दू उपाध्यायौ, तावुभौ राज्ञः फलान्यार्पयताम् । 'कुत ईदृशानि फलानि ?' इति राज्ञा पृष्टौ तावुपाध्यायौ

हरिवंशोत्पत्त्यानीतसुरतरोरादितः कथां कथयामासतुः। तदा तत्र च्छुर्या नृत्यन्ती कामपताका चारुचन्द्रकुमारस्य कौशिकमुनेश्च मनो जह्रे। यज्ञे जाते चारुचन्द्रकुमारस्ताम् आत्मसादकरोत्। अथ कौशिको नृपसमीपे तामयाचत, तदा राजोचे—'इयं कुमारेण गृहीता श्राविका च, सा तु पत्यौ प्रतिपन्ने द्वितीयं पतिं न कुर्यात्'। एवं राज्ञा निषिद्धः क्रुद्धः कौशिकः शापं दत्तवान्—'यद्येनां चेद् नारीं रमयिष्यसि तदा हे चारुचन्द्र! त्वं निश्चितं तदैव मरिष्यसि'। अथ राज्ञा चारुचन्द्राय राज्यं दत्त्वा तापसीभूय वनवासः प्रपेदे। तस्य राज्ञी अज्ञातगर्भा तेन समं वनं ययौ। समये पत्युः शङ्कानिराकरणाय प्रकटं गर्भमवदत्। अन्येद्युस्तया पुत्री प्रसूता, तस्या अभिधानं 'ऋषिदत्ता' इति। क्रमेण सा चारणश्रमणसमीपे श्राविकाऽभूत्। यौवनं प्राप। तस्या मातृ-धात्र्यो मृताः। अन्यदा तत्राऽऽखेटकाय शिलायुधनृप आगात्, स च तद्रूपविलोकनात् कामवशोऽभवत्। तस्या आतिथ्यं प्रपद्य तामेकान्ते नीत्वा राजा तया समं रेमे। साऽप्यूचे—'अहम् ऋतुस्नाताऽस्मि, यदि गर्भः स्यात्तदा कुलकन्यायाया मम का गतिः?'। सोऽवोचत्—'अहम् इक्ष्वाकुवंशोद्भवः श्रावस्तीपुर्यां नृपः शिलायुधनामा शतायुधराजस्य पुत्रोऽस्मि। यदि तव सुतो जायेत तदा स मम पार्श्वे आनेयः, मया स एव राजा कार्यः'। एवं यावदवोचत तावता तद्बलानि एयुः। तदा तामापृच्छ्य राजा स्वनगरीं प्रति ययौ। अथ साऽपि तत्सर्वं जनकायाचख्यौ, क्रमाच्च सुतं प्रासूत। तेन प्रसवरोगेण ऋषिदत्ता मृता, सा मृत्वा ज्वलनप्रभनागकुमारस्याऽग्रमहिषी जाता। तत्पिताऽमोचरेतास्तं बालं करेण

गृहीत्वा शोकाद् अन्यलोकवद् बहु रुरोद । तदाऽहं देवीत्वं प्राप्ता ज्वलनप्रभाभार्या मोहात् तत्रैत्य मृगीभूय तं बालमवर्धयम्, ततोऽसौ 'एणीपुत्र' इति नाम्ना विख्यातोऽभवत् । अथ कौशिको मृत्वा मत्पितुराश्रमे दृष्टिविषः सर्पोऽभवत् । सोऽन्यदा मत्पितरम् अदशत्, तदा तस्य विषं मयाऽहारि । पश्चात् स प्रतिबोधितोऽहिर्मृत्वा बलनामा देवोऽभवत् । अन्यदाऽहम् ऋषिदत्तारूपं कृत्वा श्रावस्त्यामागत्य तं बालं तस्य राज्ञ आर्पयं, परं सोऽसंस्मरन् नाऽग्रहीत् । तदा तस्यान्तिके पुत्रं मुक्त्वाऽऽकाशे स्थित्वा चाऽभ्यधाम्–'हे राजन्! अहम् ऋषिदत्तानाम्नी या त्वया पूर्वं भुक्ता । असौ पुत्रस्त्वत्तो जज्ञे । अस्मिन् जायमानेऽहं मृता देवीत्वं प्राप्ता मोहाद् मृगीभूय एनं बालमवर्धयम् । ततोऽसौ एणीपुत्रस्तव सुतः' । इत्युक्तः स शिलायुधनृपस्तं पुत्रं राज्येऽस्थापयत्, स्वयं च प्रव्रज्य दिवं ययौ । अन्यदा एणीपुत्रेणाऽपत्यार्थेऽहमष्टमभक्तेनाराधिता पुत्रीमदाम् । सैषा प्रियङ्गुसुन्दरी । अस्याः स्वयंवरे एणीपुत्रेण राज्ञा बहवो नृपा आहूताः, परं न चैकोऽप्यनया वव्रे । ततो राजभिर्युद्धमारम्भि, मम सान्निध्याद् एकेनापि एणीपुत्रेण ते सर्वेऽपि जिताः । सा प्रियङ्गुसुन्दरी तु त्वां दृष्ट्वा त्वद्‌र्थेऽष्टमेनाहं तयाऽऽराधिता, मदादिष्टो वेत्रभृत् त्वामवोचत, अज्ञानाच्च त्वमवाज्ञासीः । सम्प्रति तु ममाज्ञया तेनाऽऽहूतस्तां कन्यां परिणयेः, कञ्चिद् वरं च याचस्व" । इत्युक्तो यादवो जगाद–'त्वं मया स्मृताऽऽगच्छेः' । साऽपि तथा प्रतिपेदे । अथ वसुदेवं बन्धुमतीगृहे मुक्त्वा देवी स्वस्थानमगात् । प्रातर्द्वाःस्थ आह्वातुमागमत्, तदा तेन संयुक्तः कुमार आयतने

ययौ। तत्र पूर्वागतां प्रियङ्गुसुन्दरीं स गान्धर्वविवाहेन परिणीतवान् । देवीदत्तं तं वरं द्वाःस्थोऽष्टादशे दिने राज्ञे व्यजिज्ञपत्, तदा राजा परमप्रीत्या तं स्वगृहेऽनैषीत् ।

इतश्च वैताढ्ये गन्धसमृद्धपुरे गन्धारपिङ्गलनृपः, तस्य प्रभावती पुत्री। सा भ्रमन्ती सुवर्णाभपुरेऽगात् । तत्र सोमश्रियं ददर्श, तां च शीघ्रं सखित्वेन प्रत्यपद्यत । तस्यास्तु पतिविरहजं दुःखं ज्ञात्वा सा प्रभावत्युवाच–'हे सखि! त्वं मा ताम्य, तव भर्तारमहमानयामि' । तदा सोमश्रीर्निःश्वस्य ऊचे–'यथा वेगवती आनयत् तथा त्वमपि अद्भुतसौभाग्यं मम पतिमानेष्यसि!' । 'अहं हि वेगवती नाऽस्मि!' इत्युक्त्वा प्रभावती श्रावस्त्यामागत्य वसुदेवं गृहीत्वा क्षणात् तत्रानयत् । तत्र च कुमारः कृताऽन्यरूपः सोमश्रिया सममस्थात् । अन्येद्युर्मानसवेगेन स ज्ञातः, तत एत्य बद्धः । अथ कलकले जाते वृद्धविद्याधरैर्वसुदेवो मोचितः, तदा दुष्टेन मानसवेगेन विवादो मण्डितः । ततो वैजयन्तीपुर्यां बलसिंहनृपपार्श्वे तौ विवादनिराकरणाय गतौ, तदा कुमारवैरिणः सूर्पकादयोऽपि एयुः। अथ मानसवेग ऊचे–'सोमश्रीः प्राग् मम कल्पिताऽभूत्, परम् अनेन च्छलात् परिणीता। मम भगिन्यपि मयाऽदत्ता पाणिग्रहीकृता'। तदा कुमार उवाच–'मया पितृदत्ता सोमश्रीः परिणीताऽस्ति, ताम् असौ जह्रे । वेगवत्यास्तु सर्वं लोकोऽपि जानाति' । एवं वसुदेवेन सभासमक्षं स मानसवेगः कूटजल्पाकः कृतः। ततो नीलकण्ठ-सूर्पकादिखेचरैः संयुक्तो मानसवेगः कोपाद् युद्धार्थमुत्थितः । तदा वेगवतीमाताऽङ्गारवती वसुदेवाय दिव्यं धनुस्तूणीरौ च प्रददौ, प्रभावत्यपि

प्रज्ञप्तिविद्यामार्पयत् । एवं विद्या-दिव्यास्त्रैः पुष्टबलः स यादवस्तान् सर्वान् खेचरान् लीलयैवाऽजैषीत् ।
मानसवेगं बद्ध्वा सोमश्रियाः पुरो मुमोच, परं श्रुत्वा अङ्गारवत्या वचनेन स मुक्तः। ततो भृत्यीभूतैर्मानसवे-
गादिभिः खेचरैः सार्द्धं स सोमश्रीसंयुक्तो विमानस्थो महापुरनगरमगमत्। तत्र सोमश्रिया सह यादवो रेमे।
अन्येद्युर्मायिना सूर्पकेण तुरगीभूय स जह्रे । तं च ज्ञात्वा कुमारो मुष्टिना ताडयामास । ततस्तेन मुक्तः
कुमारो गङ्गाजलेऽपतत् । गङ्गामुत्तीर्य तापसाश्रमं ययौ। तत्र चैकां कन्यां कण्ठन्यस्ताऽस्थिमालां ददर्श ।
तदा कुमारेण पृष्टास्तापसा आख्यन्–'एषा जितशत्रुनृपस्य प्रिया जरासन्धराजस्य च पुत्री नन्दिषेणानाम्नी ।
इयमेकेन परिव्राजकेन वशीकृता, स च नृपेण हतः, तथाप्यसौ तस्य दृढकार्मणेन तदस्थीनि अद्यापि कण्ठे
धत्ते' । ततो वसुदेवो मन्त्रबलेन तां गतकार्मणां चक्रे, तदा तस्मै उपकारिणे जितशत्रुनृपः स्वां भगिनीं
केतुमतीं ददौ । तदा डिम्भनामा जरासन्धद्वाःस्थ एत्य जितशत्रुमब्रवीत्–'नन्दिषेणाकार्मणहर्ताऽसौ उप-
कारी प्रेष्यताम्' । राज्ञापि युक्तमिति कथिते तेनैव वेत्रिणा सह रथे चटितो वसुदेवो राजगृहं ययौ ।
तत्रारक्षैर्बद्धः, तदा तद्बन्धकारणं कुमारोऽपृच्छत् । तेऽप्याचख्युः–"अस्मत्स्वामिजरासन्धस्य ज्ञानिनाऽद
आख्यातम्–'यस्तव नन्दिषेणां पुत्रीं गतकार्मणां करिष्यति तत्सुतस्तव हन्तैव भविष्यति'। साम्प्रतं स त्वम-
सीति ज्ञातः, अतो वध्यस्थाने नीयसे" । इत्युक्त्वा यादवं पशुमिव बद्ध्वा वध्यस्थाने त्वरितमेवाऽनयन्,
तत्र च कुमारस्य मारयितुं मुष्टिकाद्याः ससज्जुः । तदवसरे वैताढ्ये गन्धसमृद्धपुरस्वामी गन्धारपिङ्गलः

स्वपुत्रीप्रभावत्या वरं विद्यामपृच्छत्, सा तु वसुदेवमवदत् । तच्छ्रुत्वा तेन तमानेतुं भगीरथीनाम्नी धात्री प्रेषिता । सा राजगृहे गत्वा तेभ्य आच्छिद्य गन्धसमृद्धपुरे कुमारो निन्ये । ततो वसुदेवस्तां प्रभावतीं पर्यणैषीत्, तया सह च रममाणो यथासुखमवतस्थे ।

सत्खेचराणां समवाप्य कन्याः, सुकोशलां चाप्य पराश्च गत्वा ।
शौरिः स्थितो धाम्नि सुकोशलाया, भोगान् यथेच्छं बुभुजे नितान्तम् ॥ १ ॥

इति श्रीमद्-गुणविजयगणिविरचिते श्रीमदरिष्टनेमिचरिते सुललितगद्यबन्धे श्यामादिसुकोशलान्तमानुषी-विद्याधरीपरिणयनो नाम द्वितीयः परिच्छेदः ॥

## ॥ अथ तृतीयः परिच्छेदः ॥

### कनकवत्या सह वसुदेवस्य विवाहः

इतश्चात्रैव भरतक्षेत्रे विद्याधरनगरसदृशं पेढालपुरनगरमस्ति । तत्र हरिश्चन्द्रनामा नृपः, स च महर्द्ध्या सुरपतिरिव राजते । तस्याऽग्रमहिषी लक्ष्मीवती, यथा कृष्णस्य लक्ष्मीः । सा च शीलेन

लज्जया प्रेम्णा दाक्षिण्येन विनयेन च पतिमनःकुमुदचन्द्रिकासदृशा, सकलकलाभिः पल्लविता, लज्जा-विवेकादिगुणैः पुष्पिता, भर्तृभक्त्या च फलिता जङ्गमा वल्लीव शोभते । अन्यदा तया देव्या कियता कालेन पुत्री प्रसुषुवे । लक्षणसम्पूर्णया तया जातमात्रया गृहमागतया श्रियेव तौ पितरौ हृष्टौ । तस्याः पूर्वजन्मभर्ता धनदो[१] मोहात् कनकवृष्टिमकरोत्; तया कनकवृष्ट्याऽतीव हृष्टो राजा तस्याः कनकवतीति नाम चक्रे। सा धात्रीभिरुत्सङ्गादुत्सङ्गं गृह्यमाणा राजहंसीव पादचङ्क्रमणसमर्था बभूव, क्रमेण च मुग्धभावं त्यजन्ती कलाकलापयोग्या जाता । तदा राजा सुतां शुभदिवसे कलाचार्यस्य समीपे मुमोच । तत्र क्रमेण अष्टादशलिपि-नाममाला-शब्दशास्त्र-प्रमाण-च्छन्दो-ऽलङ्कार-काव्यादिपारगामिनी अभवत् । वचनचातुरीसमये मानुषीवेषेण सरस्वती विभाव्यते । तूर्यत्रयदर्शने सा आचार्य इवाऽलभत। किं बहुना ?, सा काऽपि कला नाऽभूद् यां सा न विवेद । लावण्यजलतटिनी सा क्रमेण कलासमूहसफलीकरणं यौवनं प्राप । तद् दृष्ट्वा तस्याः पितरौ तत्सदृशगुण-रूप-वयसो वरस्य विलोकने तत्परौ बभूवतुः, परं तद्योग्यं वरमपश्यन्तौ स्वयंवरमण्डपसारेभाते ।

अन्यदा स्वगृहे सुखासीना सा कनकवती अकस्मादागतम्, अतीव प्रीतिदम्, अशोकपल्लवरक्तचञ्चुचरण-लोचनं, कर्पूरवर्णविराजितं, विधात्रा सारसारशुक्लपरमाणून् गृहीत्वा घटितमिव!, एवंविधं तत्रैकं राज-

१ कुबेरः ।

हंसं ददर्श । स्वर्णघुर्घरिकाभरकण्ठं मञ्जुलस्वरम् इतस्ततो गत्वा नृत्यन्तमिव तं दृष्ट्वा सा मनसी-त्यचिन्तयत्-'कस्यापि अतुलपुण्यस्य विनोदस्थानमेष भावी, यतः स्वाम्यङ्गीकारं विना पक्षिणां कुतो भूषणं भवेत्? । अथ यस्य कस्यापि एष भवतु, परं मम तु विनोदायाऽस्तु, यत एनं दृष्ट्वा मम मनोऽत्यन्तमुत्कण्ठते' । तदनन्तरं गवाक्षनिलीनं हंसं सा हंसगामिनी स्वयमुपाददे। ततः सुखस्प-र्शेन करकमलेन सा तं क्रीडाकमलमिव शनैः शनैर्लालयामास । तथा शिरीषकुसुमसुकुमालेन हस्तेन शिशोः केशपाशमिव तस्य राजहंसस्य निर्मलं पिच्छकोशम् अमार्जयत् । ततः सा सखी-मुवाच-सुवर्णपञ्जरमानय यथा तत्रैनं पक्षिणं क्षिपामि, यतः पक्षिण एकत्र स्थाने स्थायिनो न भवन्ति' । सा सखी यावत् सुवर्णपञ्जरमानेतुमुत्थिता तावद् हंसो मनुष्यभाषया वक्तुमारेभे-'भो राजपुत्रि! त्वं विवेकिन्यसि, मा मा मां पञ्जरे क्षिप; तुभ्यं किञ्चित् प्रियं कथयिष्यामि, मां मुञ्च' । एवं तं हंसं मनुष्यभाषया वदन्तं प्रेक्ष्य सा विस्मयं प्राप्ता सती आगतं प्राघूर्णकमिव तम् अतीव गौरवाद् अदोऽवादीत्-'हे हंस! त्वं तु प्रत्युत प्रसादार्होऽसि, प्रियं कथय, यतो वार्ताऽर्धकथिता सती शर्क-रातोऽपि मधुरा जायते' । हंसोऽप्यवोचत्-''वैताढ्यपर्वते कोशलायां नगर्यां कोशलनाम्नो विद्या-धराधिपस्य अमरीसदृशा सुकोशलानाम्नी सुताऽस्ति । तस्या युवा पती रूपनिधानं, तं दृष्ट्वा सर्वेषां रूपवतां रेखा भज्यते । स युवा यथा रूपसम्पदा नरशिरोरत्नं तद्वत् त्वमपि हे सुन्दरि! नारीशिरोरत्नम्

अस्ति। युवयो रूपमादर्शेऽस्ति, नान्यत्र स्थाने, अतोऽहं युवयो रूपं दृष्ट्वा, युवयोः सङ्गमाऽभिलापेण त्वां तस्य कुमारस्य सम्यगाख्याय तव तम् आख्यातवानस्मि। तव च स्वयंवरं श्रुत्वा त्वं तस्याग्रे तथा वर्णिताऽसि यथा सोऽत्र स्वयंवरदिवसे आगमिष्यति । नक्षत्रेषु चन्द्रमिव स्वयंवरमण्डपे बहूनां मध्येऽनल्पतेजसा तमुपलक्षयेः । तद् मां मुञ्च, तुभ्यं स्वस्ति भवतु"। इति श्रुत्वा कनकवती दध्यौ–'एष क्रीडया हंसरूपधारी न सामान्यपुरुषः सम्भाव्यते'। ततः सा हस्तात् तं मुमोच, तदा स गगने उत्पतन् कनकवत्युत्सङ्गे एकं चित्रपटमपातयत्। ऊचे चे–'हे भद्रे! स युवा यादृग् मया दृष्टस्तादृग् अत्र लिखितोऽस्ति, इदमालेख्यं प्रेक्ष्य तमत्रागतं त्वं जानीथाः'। कनकवती हृष्टा तं कृताञ्जलिरूचे–'त्वं कोऽसि ?, स्वरूपं कथयित्वा मां मनाग् अनुगृहाण'। तदा हंसचरः खेचरो दिव्यरूपः प्रकटीभूय इदमभ्यधात्–'अहं चन्द्रातपविद्याधरोऽस्मि, हे चन्द्रानने ! तव भाविनः पत्युः पादसेवोद्यतोऽस्मि । अन्यच्च विद्याप्रभावात् तव कथयामि–स तव स्वयंवरदिनेऽन्यस्य दूतीभूय एष्यति' । इत्युक्तवन्तं तं विद्याधरम् आशीर्दत्त्वा कनकवती विससर्ज । दध्यौ च–'मम भाग्येन दैवतं वचः संवदति' । अथ तया पिटालेखितपतिदर्शनाऽतृप्तया विरहतापार्त्तया स पटः पुनः पुनः क्षणं कण्ठे क्षणं शिरसि क्षणं हृदये ध्रियते स्म। चन्द्रातपस्तु खेचरस्तयोः सङ्गमकौतुकी तत्कालं कोशलानगर्यां ययौ। ततश्च विद्याशक्त्या पवन इवाऽस्खलन् रात्रौ वसुदेववासभवने प्राविशत्। तत्र वसुदेवं सकलत्रं सुप्तं ददर्श। ततः पादविश्रामणेन तं सावधानमकरोत्। कुमारोऽपि क्षणाद् जजागार, यत उत्तम-

पुरुषा अल्पनिद्रा भवन्ति । अकस्मादागतं तं नरं निशायां प्रेक्ष्य कुमारो न विभाय, न चुकोप, प्रत्युत एवमचिन्तयत्–'एष पुरुषस्तावद् उपासनाद् मम विरुद्धो न, शरणार्थी भवेद्, अथवा कोऽपि मत्कार्यचिन्तको भवेत् । अथ यद्यमुम् आलपामि तदा प्रियाया निद्राच्छेदो भवेत्, सेवाकरममुं जनं न चोपेक्षितुमर्हामि, तत् प्रयत्नेनोत्थाय प्रियाम् अप्रतिबोधयन् पर्यङ्कादुत्तीर्य असुं वार्तयामि' । इति विचिन्त्य शनैः शनैः पर्यङ्कमुज्झित्वाऽन्यस्थाने वसुदेव उपाविशत् । चन्द्रातपोऽपि तं सेवकपरमाणुवत् प्राणमत् । ततो 'यः कनकवतीमाख्यत् सोऽयं चन्द्रातपनामा विद्याधरः' इति कुमारस्तमुपलक्षयति स्म । पश्चात् कुमारः स्वागतिपूर्वम् आगमनकरणं पृच्छति स्म । ततश्चन्द्रातपश्चन्द्रशीतलया वाण्याऽवदत्–"हे वसुदेवकुमार ! तादृशीं कनकवतीं तवाख्याय त्वामपि तस्यै अहमाख्यातवान्, विद्यावलेन च त्वामहं पटे आलिखितवान् । ततस्तन्मुखकमलभानुं तं पटमहमार्पयम् । हे स्वामिन् ! त्वां पटस्थं दृष्ट्वा हर्षेण तल्लोचने चन्द्रकान्तवत् पानीयममुञ्चताम् । सा त्वद्रूपविराजितं पटं विरहसन्तापसंविभागं दातुमिव हृदयेऽधात् । पश्चाद् मां कृताञ्जलिर्गौरवोच्चारितवक्त्राञ्चला च सेति प्रार्थितवती–'मत्स्वयंवरे त्वममुं महापुरुषं सर्वथाऽऽनयेः, मां वराकीं मोपेक्षिष्ठाः' । हे प्रभो ! अद्य कृष्णदशमीदिवसः, तदनन्तरं शुक्लपञ्चम्यां पूर्वाह्णे तस्याः स्वयंवरो भावी । स्वामिन् ! तत्र त्वं गन्तुमर्हसि, यतस्त्वत्सङ्गम एव तस्या जीवितव्यौपधम्, तेन त्वया साऽनुग्राह्या" । तच्छ्रुत्वा वसुदेवोऽवोचत्–'हे चन्द्रातप ! अहं दिनोदये स्वजनानापृच्छ्य तथा करिष्ये, त्वं

मुदमुद्वह । मया समं च यियासया त्वं प्रमदवने तिष्ठेः, स्वप्रयत्नफलं तु तस्याः स्वयंवरे पश्येः’ । एवमुक्ते स विद्याधरपुत्रस्तिरोऽधत्त । वसुदेवस्तु पर्यङ्केऽतीव प्रमोदभाक् सुष्वाप । अथ प्रातःकाले वसुदेवः स्वजनानापृच्छ्य प्रेयसीजनं चाऽनुज्ञाप्य पेढालपुरनगरं ययौ । तत्र हरिश्चन्द्रनृप आगत्य कुमारं लक्ष्मीरमणोपवनेऽवासयत् । तदुद्यानं सकलजातितरुसङ्कीर्णं दृष्ट्वा कुमारो दृष्टिं विनोदयन् अस्थात् । ततश्च कनकवतीपिता राजा हरिश्चन्द्रो वसुदेवस्य प्रवरां सन्मानादिपूजां व्यधात् । कुमारस्तत्रोद्याने पूर्वनिष्पादितेषु प्रासादेषु गृहेषु च स्थित इमां पुरातनीवार्तामशृणोत्–‘प्राक् श्रीनमिस्वामिनः समवसरणमत्रोद्यानेऽभवत्, तदा चेह देवाङ्गनाभिः सहिता लक्ष्मीरर्हतोऽग्रतो रासकेन रेमे, तत्प्रभृति एतद् लक्ष्मीरमणमितिनामोद्यानं बभूव’ । पश्चात् तत्रायतने श्रीमत्तीर्थकराणां प्रतिमा दिव्योपहारैः कुमार आनर्च, ववन्दे च । तदा च सुमेरुरिव जङ्गमं ध्वजलक्षसंयुक्तं मङ्गलकारिवादित्रनिर्घोषगर्जितं वन्दिकोलाहलाकुलम् एकं विमानं गगनादवतरद् वसुसेवोऽद्राक्षीत् । ततोऽनाकुलो धैर्यधारी अग्रस्थितमेकं देवं पप्रच्छ–‘शक्रसदृशमिदं विमानं कस्य देवस्य ?’ । तदा सोऽवदत्–‘हे महापुरुष ! इदं धनदस्य विमानं, स चाऽत्रारूढः सम्प्रति भूलोके महता कारणेनोत्तरति । अस्मिन् चैत्येऽर्हत्प्रतिमाः पूजयित्वा शीघ्रं कनकवतीस्वयंवरविलोकनाय प्रयतिष्यते’ । तच्छ्रुत्वा वसुदेवोऽचिन्तयत्–‘अहो ! कनकवती धन्या यस्याः स्वयंवरे मण्डिते देवा अप्यागच्छन्ति !’ । अथ धनदो विमानादुत्तीर्य अर्हत्प्रतिमा आनर्च, ववन्दे, सङ्गीतं चाऽकरोत् । तदा

कुमारो दध्यौ–'अहो ! महात्माऽयं देवः परमश्रावकः पुण्यकार्ये सोद्यमः, अहो ! श्रीमदर्हतां शासनं प्रभावनापात्रम्, अहमपि धन्योऽस्मि यस्यैतद् आश्चर्यं दृष्टिगोचरं जातम्'। इति पुनः पुनश्चिन्तयामास । अथ धनदस्तत्र चैत्ये पूजां कृत्वा हृष्टमानसः प्रचलितो दिव्यरूपं वसुदेवकुमारं ददर्श । अचिन्तयच्च–'अहो ! अस्य नरस्याऽद्भुतं रूपं, यत् सुरा-ऽसुर-नर-विद्याधरेष्वपि नास्ति' । ततस्तं लोकोत्तररूपधारिणं प्रेक्ष्य विमानस्थो धनदोऽङ्गुलीसंज्ञया सस्नेहमाकारयत् । वसुदेवोऽपि कौतुकी निर्भयस्तत्समीपे गतः। धनदोऽपि स्वार्थत्वाद् मित्रवत् प्रियालापादिसत्कारपूर्वकं तमवार्तयत् । अथ प्रकृत्याऽपि विनयवान् सत्कृतः कुमारः कृताञ्जलिस्तमुवाच–'आज्ञापय, अहं किं करोमि ?'। अथ धनदः कर्णसौख्यदया गिरा तमूचे–"हे सत्पुरुष ! त्वत्साध्यं ममैकं दूत्यं साधय। अत्र नगरे हरिश्चन्द्रराजस्य कुमारी कनकवती नाम, तां मद्वचनेनेदं कथय–'शक्रस्योत्तरदिक्पालो धनदस्त्वां परिणेतुमिच्छति, त्वं मानुष्यपि देवी भव'। मम चाऽमोघया वाचा त्वं वायुरिवाऽस्खलन् कनकवतीभूषितं स्थानकमवाप्स्यसि"। ततो वसुदेवः स्वावासे गत्वा, दिव्याऽलङ्कारादिकं मुक्त्वा, प्रेष्योचितं मलिनवेषमादद। तं मलिनवेषं यान्तं धनदोऽब्रवीत्—'हे कुमार ! किमुदारं वेषमौज्झीः ?, यतः सर्वत्राऽडम्बरः पूजां प्राप्नोति'। तदा कुमार उवाच–'वेषेण मलिनेन उज्ज्वलेन वा किं कार्यम् ?, यतो दूत्ये तु वागेव मण्डनं, सा च ममाऽस्त्येव'। तच्छ्रुत्वा धनदोऽवदत्–'स्वस्ति तुभ्यं, याहि'। इति धनदेन पुनः प्रेरितः कुमारो निःशङ्कं हरिश्चन्द्रनृपाङ्गणमगात् । तत्र हस्ति-तुरङ्गम-

रथ-सुभटादिसङ्कीर्णमपि राजद्वारं कुमारोऽविशत्। ततश्च केनापि अदृश्यमानोऽस्खलद्गतिश्च अञ्जनसिद्ध-योगीवाऽग्रतोऽगात्। क्रमेण वेत्रपाणिभिर्वृद्धपरिकरैर्न्यासं राजमन्दिरस्य प्रथमं कक्षान्तरं कुमारः प्राविशत्, तत्र इन्द्रनीलमणिप्रतिबद्धभूमिकं चलत्कान्तितरङ्गविराजितं सजलवापीभ्रमकरं ददर्श। पुनस्तत्र दिव्याभरण-विभूषितानाम् अप्सरसामिव सुरूपाणां सवयसां स्त्रीणां वृन्दमैक्षत। ततो द्वैतीयीकं कक्षान्तरं स्वर्णस्तम्भं रत्नमयपाञ्चालिकं स्फुरद्ध्वजदण्डं कुमारोऽद्राक्षीत्। अथ तृतीये कक्षान्तरे ज्योत्स्नासन्निभक्षीरस्तरङ्गे क्षीर-समुद्रे सुरगज इव कुमारोऽविशत्, तत्र स्त्रीजनं दिव्याभरणविभूषितं सुरपुरेऽसंभ्रान्तम् अप्सरसो गण-मागतमिव सोऽपश्यत्। अथ चतुर्थं कक्षान्तरं प्राप्तः, तत्र जलकुट्टिमं तरङ्गतरलं राजहंस-सारसादिसेवित-मद्राक्षीत्, तथा तत्र कुट्टिमे आदर्शं विनाऽप्यात्मानं पश्यन्तीः शृङ्गारं च कुर्वाणा अङ्गना यादवः प्रेक्षाञ्चक्रे, शुक-सारिकोदीर्यमाणं मङ्गलं गीत-नृत्याकुलं च चेटीजनं प्रैक्षिष्ट। ततः पञ्चमं कक्षान्तरं जगाम, तत्र मरक-तरत्नमयं कुट्टिमं कुमारो ददर्श। तत्र च मुक्ताफल-विद्रुमदामसंयुक्तान् चामरान्, सुवेष-रूपा रत्नालङ्कार-भाजनभृतो दासीश्चाऽपश्यत्। ततोऽपि षष्ठं कक्षान्तरं प्राप्तः, तत्र दिव्यं सरोवरमिव सर्वतः पद्मविभू-षितं पद्मकुट्टिमं सोऽद्राक्षीत्। पुनस्तत्र कृमिरागांशुकधारिमृगाक्षीणां मूर्त्तानां सन्ध्यानामिव वृन्दं ददर्श। अथ स कुमारः सप्तमे कक्षान्तरे प्राप्तः, तत्र लोहिताक्षरत्नमयस्तम्भं कर्केतनमणि-मयं कुट्टिमं दृग्विषयं व्यधात्। पुनस्तत्र कल्पवृक्षान्, कुसुमाभरणानि, सुरनदीपानीयपूर्णकलशान्,

कलाविदः सकलदेशभाषाविचक्षणाः कुण्डलालीढगल्लस्थला मृगलोचना वेत्रधारिणीश्च यादवो ददर्श। तदा सोऽचिन्तयत्–'वेत्रधारीभिर्व्याप्तेऽत्र भवने कस्यापि पुरुषस्य नाऽवकाशः'। कुमारे एवं चिन्तयति सति लीलाकनककमलभृद् एका दासी पक्षद्वारमार्गेणाऽऽययौ। तां ता वेत्रधारिण्यः ससम्भ्रमा अपृच्छन्–'स्वामिनी कनकवती क्व तिष्ठति?, किं च करोति?'। साऽप्याख्यत्–'प्रमदवनप्रासादे दिव्यवेषधारिणी देवताविहितसान्निध्या स्वामिनी एकैव तिष्ठति'। वसुदेवकुमारस्तच्छ्रुत्वा तां च तत्र तिष्ठन्तीं ज्ञात्वा दासीकथितेन पक्षद्वारमार्गेण निरगात्। प्रमदवनं प्राप्तः, तत्र च सप्तभूमिकं प्रासादमारुरोह। तत्र दिव्यालङ्कार-वस्त्रधरां, सर्वर्तुपुष्पाभरणां साक्षाद् वनश्रियमिव, रूपशोभया विधातुराजन्मसृष्टिमिव, भद्रासनस्थितां, पट्टालिखितपुंरूपं पश्यन्तीं तां कनकवतीं कुमारोऽद्राक्षीत्। साऽपि अपरं पट्टरूपमिव तं दृष्ट्वा इष्टागमनज्ञानात् प्रातः कमलिनीमिव व्यकसत्। ततो भद्रासनात् ससम्भ्रममुत्थाय कृताञ्जलिस्तं कुमारं साऽवोचत्–'हे सुभग! रूपमन्मथ! त्वं मत्पुण्यैराकृष्टोऽसि, हे सुन्दर! तवाऽहं दास्यस्मि'। इत्युक्त्वा सा कुमारं नन्तुमुपचक्रमे। तदा स तां प्रणमन्तीं प्रतिषिध्य एवमभ्यधात्–'अहं तु प्रेष्योऽस्मि, हे महाशये! मा प्रणंसीः। यो हि तवानुरूपः स्यात् तं पुरुषं पणन्तुमर्हसि। मयि अविज्ञातकुले प्रेष्येऽनुचितं मा कृथाः'। तदा सा उवाच— 'तव सर्वं मया वरं ज्ञातमस्ति। मम पतिस्त्वमेव। यो मे देवतयाऽऽख्यातो, यश्च चित्रालिखितो मया हर्षेण ध्यातः, स त्वमेव'। ततो वसुदेवोऽवदत्–'भद्रे! तव पतिर्नाऽहमस्मि, यस्ते देवतया कथित-

तस्याहं किङ्करोऽस्मि। तत्र भर्ता धनदः, तस्याहं दूतः, तदाज्ञयाऽहं त्वां याचे, तस्य त्वमग्रमहिषी देवीभिः सेव्यमाना भव'। अथ सा धनदनामग्राहं कृतनमस्काराऽब्रवीत्–'हे सुन्दर! क्वाऽयं शक्रदिक्पालः?, क्व चाऽहं मानुषकीटिका?। तस्य तु मयि दूत्यं क्रीडामात्रमनुचितं च, यतो मानुषीणां सुरैः समं कदाचिदपि न भूतपूर्वः सङ्गमः'। वसुदेवोऽवदत्–'हे सुन्दरि! त्वं देवताऽऽदेशम् अन्यथा कुर्वाणा दमदन्तीवाऽनर्थमनाप्स्यसि'। कनकवत्यपि एवमूचे–"धनदेत्यक्षरैः श्रुतैर्मम मनः प्राग्जन्मसम्बन्धात् कुतोऽप्युत्कण्ठते, परम् औदारिकस्य दुर्गन्धशरीरस्य गन्धमपि सोढुं सुधाहारी न समर्थ इत्याहितं मननम्। तद् दूतमिषतस्त्वमेव छन्नो मम पतिः। ततो गत्वा मद्वाचमुत्तरदिक्पतेराख्याहि यत्–'त्वद्दर्शनेऽपि नाऽर्हामि, यतोऽहं मानुषीमात्राऽस्मि। त्वं सप्तधातुतनोर्मम प्रतिमां कृत्वा पूज्योऽसि"। इति श्रुत्वा दृष्टः कुमारः केनाप्यदृश्यमानो धनदसमीपे ययौ। तत्र च यावद् वृत्तान्तं कथयितुमारेभे तावद् धनद उवाच–'सर्वं मया ज्ञातमेव'। ततः सामानिकदेवानां पुरः कुबेरो वसुदेवं प्रशशंस–'अस्य महापुरुषस्य काऽपि निर्विकारचरित्रताऽस्ति!'। इति प्रशंसन् प्रीतो गुणक्रीतो धनदो वसुदेवकुमाराय दिव्यगन्धवासितं सुरपतिप्रियं नाम देवदूष्ययुग्मं, सुरप्रभनामानं मुकुटं, दकगर्भनाम्नी कुण्डले, शशिमयूखं हारं, ललितप्रभनाम्नी केयूरे, अर्धशारदानाम्नीं नक्षत्रमालां, विचित्रमणिशोभितौ सुदर्शनौ नाम वलयौ, स्मरदारुणनाम कटिसूत्रं, दैवतानि माल्यानि, दैवतं च विलेपनं ददौ। स तद् अङ्गलग्नं कृत्वा धनदोपमोऽ-

भवत् । तं धनदेनापि सत्कृतं तादृशं दृष्ट्वा सह समागताः श्यालादयोऽधिकं मुमुदिरे । हरिश्चन्द्रोऽपि तत्र सकौतुक आगत्य कृताञ्जलिरेवं धनदं व्यजिज्ञपत्—'भवद्भिर्भरतक्षेत्रमद्य पावनं कृतं, मम स्वयंवरमण्डपोऽद्य सुरविमानसमानो जातः'। इत्युक्त्वा सोऽधिकं स्वयंवरमण्डपं सज्जीचकार, मञ्चांश्च मनोहरान् कारयामास । ततः सुरवधूकरपल्लवलालितैश्चामरैर्वीज्यमानो बन्दिभिश्च सद्भूतगुणकीर्तनैः स्तूयमानो धनदः स्वयंवरमण्डपं द्रष्टुं प्राचालीत् । ततो रत्नमयाऽष्टमङ्गलशोभितद्वारभूमिकं रत्नादर्शलक्षाङ्कितम् अनेकतोरणमण्डितं तं स्वयंवरमण्डपम् उत्तरदिक्पालः प्रविवेश । तत्रैकस्मिन् मनोज्ञमञ्चे हंसवाहनो धनदो गगनसंस्थे सिंहासने सुराङ्गनापरिवृत उपाविशत् । वसुदेवोऽपि युवराज इव तस्याऽदूरे सुभगवदनो निषसाद । अन्येऽपि राजानो विद्याधराश्चाऽनुक्रमेण न्यषदन् । अथ धनदो निजनामाङ्किताम् अर्जुनजातिसुवर्णनिर्मितां कुबेरकान्ताभिधानां मुद्रिकां कुमारायाऽऽर्पयत्, स कनिष्ठाङ्गुल्यां न्यधात् । तस्या मुद्रिकायाः प्रभावेण तदैव तत्रस्थः सकललोको यादवं धनदसदृशमद्राक्षीत् । 'अहो ! धनदो रूपद्वयधारी अत्रागतः' इति स्वयंवरमण्डपेऽद्वैतः प्रघोषोऽभवत् । अथ सर्वालङ्कार-देवदूष्यधारिणी, मदनदोलाभं पुष्पदाम च बिभ्रती सखीभिः परिवृता कनकवती राजहंसीव मन्थरगतिस्तत्र स्वयंवरे आगात्; परं तत्र चित्रदृष्टं दूत्यदृष्टं च वसुदेवमपश्यन्ती सायं कमलिनीव म्लानमुखी विषादमयात्माऽजायत । स्तम्भलग्ना पाञ्चालीव किमपि नाऽजल्पत्, सर्वस्वहारितेव कमप्यपरं राजानं नाऽपश्यत् । ततस्तस्यां कमप्यवृण्वत्यां तत्र

स्वयंवरमण्डपे 'किमस्मासु रूप-वेषादिदोषो दृष्टः ?' इति शङ्कया पुनः पुना राजानः स्वं स्वं व्यलोकयन् । तदा सखी कनकवतीमुवाच–'हे सुन्दरि ! किमद्यापि विलम्बसे ?, कस्यापि वरमाला न्यस्यताम्' । तदा कनकवत्यूचे–'वरस्तु रुच्यो व्रियते, यश्च मे रोचते तमहं मन्दभाग्या न पश्यामि' । ततो मनसि दध्यौ–'मम का गतिर्भविष्यति ?, यत इष्टं वरं न पश्यामि । हे हृदय ! प्रियविरहेण त्वं द्विधा भव' । इत्थं चिन्तातुरा सा धनदं प्रेक्ष्य प्रणम्य च दीना रुदती कृताञ्जलिरेवं व्यजिज्ञपत्–'हे देव ! प्राग्जन्मपत्नीति मत्वा मयीत्थं हास्यं मा कृथाः, मया यो वुवूर्षितो वरः स त्वया प्रच्छन्नीकृतः' । इति श्रुत्वा स्मित्वा च धनदो वसुदेवमुवाच–'हे महाभाग ! मयाऽर्पितां कुबेरकान्तानाम्नीमिमां मुद्रिकां हस्ताद् अपाकुरु' । तदा कुमारस्तां मुद्रिकां धनदाज्ञया हस्तादुत्तार्य स्वस्वाभाविकरूपभागभूत्, तावत् सा कुमारी प्रादुर्भूतप्रमोदा स्वभुजलतामिव तस्य कण्ठे स्वयंवरमालां चिक्षेप । तदा धनदाज्ञया गगने दुन्दुभिनिनादा अभवन् । अप्सरसः सरसं मङ्गल्यगानं चक्रुः । 'अहो ! धन्यो राजा हरिश्चन्द्रो यस्य सुता जगत्प्रधानं वरं वव्रे' इति विष्वग् उच्चैर्वाण्यभूत् । धनदादिष्टा देवताः सधवाः स्त्रियोऽक्षतगणानिव वसुधारां निरन्तरं ववृषुः । ततो वसुदेवस्य कनकवत्याश्च पाणिग्रहणोत्सवो हर्षस्यैकच्छत्रतां तन्वानो बभूव ।

अथ कुमारो धनदं नत्वा विज्ञप्तिमकरोत्–'यूयं कुतः कारणादत्रागताः ?, इति ज्ञातुमहं कौतुक्यस्मि' । तदा धनदस्तम् आबद्धकङ्कणं नवपरिणीतमवदत्–"भोः कुमार ! ममात्राऽऽगमनकारणं श्रूयताम्—

अत्रैव भरतक्षेत्रेऽष्टापदसमीपे सङ्गरं नाम नगरमस्ति । तत्र मम्मणनामा नृपः, तस्य वीरमती राज्ञी । सोऽन्यदा सप्रियो नगराद् बहिः पापर्द्धौ अचालीत्, तदा क्षुद्राशयः स राजा सार्थेन सममायान्तमेकं मलमलीमसं साधुमपश्यत् । 'असौ मम मृगयोत्सवे विघ्नकृद् अपशकुनम्' इति मत्वा तं यूथाद्गजमिव सार्थादरक्षत् । पुनरपि सकलत्रोऽपि स्वभवनं गत्वा द्वादश घटीस्तं साधुं प्रलापयन् सोऽस्थात् । तदनन्तरं ताभ्यामुत्पन्नाऽनुकम्पाभ्यां दम्पतिभ्यां स मुनिरप्रच्छि—'कुत आयासीः ?, क्व च गच्छसि ? इति कथ्यताम्' । तदा मुनिर्बभाषे—'अहं रोहीतकपुराद् अष्टापदार्हत्प्रतिमा वन्दितुं सार्थेन समं चलितः, परं हे महाभागौ ! भवद्भ्यां सार्थाद्वियोजितो धर्मकर्मबद्धान्तरायोऽहमष्टापदं नाऽगाम्' । तदा तौ दम्पती लघुकर्मत्वात् तं मुनिं वार्तयन्तौ दुःस्वप्नमिव कोपं विसस्मरतुः । परोपकारी मुनिरपि तौ कोमलहृदयौ ज्ञात्वा जीवदयाप्रधानं जिनधर्ममाख्यत् । ततः प्रभृति तौ किञ्चिद् धर्माभिमुखतां जग्मतुः, तं च मुनिं शुद्धभक्त-पानादिना भक्त्या प्रत्यलाभयताम् । तयोः कर्मरोगार्त्तयोर्धर्मज्ञानमहौषधं दत्त्वा, स साधुस्ताभ्यामनुमतोऽष्टापदं प्राप । तावपि चिरं साधुसंसर्गात् श्रावकव्रतं प्रपद्य यथा कृपणा धनं पालयन्ति तथा यत्नात् पालयामासतुः ।

"अन्यदा धर्मस्थिरीकरणाय वीरमती शासनदेव्याऽष्टापदे निन्ये, यतो धर्मवतां किं न स्यात् ? । तत्र जिनप्रतिमाः सुरा-ऽसुरैः पूज्यमाना दृष्ट्वा साऽतीवानन्दं प्राप । चतुर्विंशतिं जिनप्रतिमास्तत्र भक्त्या

भावेन च वन्दित्वा, पुनरपि स्वपुरं देवीशक्त्या आगात्। ततस्तत्तीर्थविलोकनाद् धर्मे स्थिरबुद्धिं दधाना सा वीरमती जिनं जिनं प्रति विंशतिमाचाम्लानि अकरोत्, चतुर्विंशतिजिनानां च रत्नसंयुक्तसुवर्णतिलकानि भक्त्या कारयामास। अन्यदा सपरीवाराऽष्टापदपर्वतं गत्वा सा स्नात्रपूर्वकं चतुर्विंशतिजिनान् पूजयामास, तानि च तिलकानि जिनप्रतिमाललाटेषु न्यधत्त। तत्तीर्थागतानां च चारणश्रमणादिमहापात्राणां सा यथार्हं दानं दत्त्वा तत्तप उदपादयत्। ततश्च कृतकृत्येव मनसा नृत्यन्तीव सा वीरमती पुण्यात्मा स्वपुरं प्रत्यागात्। तौ दम्पती पृथक्छरीरौ एकमनसाविव धर्मकार्योद्यमवन्तौ कियन्तं कालमतिनिन्यतुः। पूर्णकाले च समाधिमरणं प्राप्य, तौ विवेकिनौ देवलोके देवो देवी च दम्पती अभूताम्। ततश्च्युत्वा मम्मणजीवो बहलीदेशे पोतनपुरे धम्मिलनाम्न आभीरस्य रेणुकाकुक्षिसम्भवो धन्यनामा पुत्रोऽभवत्। वीरमतीजीवोऽपि देवलोकाच्च्युत्वा तस्यैव धन्यस्य धूसरीनाम्नी भार्याऽभवत्। धन्योऽरण्ये महिषीवृन्दं चारयामास, यत इदं प्रथममेवाभीराणां कुलकार्यम्। अन्यदा प्रवासिनां वैरी महान् वर्षाकालः प्रवृत्ते। मेघे प्रवर्षत्यपि धन्यो महिषीश्चारयितुं ययौ। मस्तके सलिलनिवारणं महच्छत्रं बिभ्राणो महिषीव्रजमनुव्रजन् अरण्ये पर्यटनमकरोत्, तावदेकं साधुं प्रतिमाधरम् एकेन पादेन तस्थिवांसं निश्चलमानसं शीतपरीषहकम्पमानशरीरं तपोऽत्यन्तकृशं स धन्योऽद्राक्षीत्। तथापरीषहं सहमानं तं मुनिं प्रेक्ष्य उत्पन्नानुकम्पस्तन्मस्तके स्वच्छत्रं स्वयमेवाऽधारयत्। ततो धन्येन धृतच्छत्रः स मुनिः कष्टरहितो जातः।

अथ मद्यपानाद् मदवानिव स मेघो वृष्टेर्न व्यरमत्, तथापि च्छत्रधारणाद् धन्यो न निर्विविदे। अथकथमपि क्रमयोगेण मेघो वृष्टेर्विरराम, तदा मुनिरपि यावद्वृष्टिकृतध्यानाभिग्रहो ध्यानाद् न्यवर्तत। तत्कालं स धन्यो मुनिं नत्वा पादसंवाहनापूर्वकं कृताञ्जलिरित्युवाच—'हे महर्षे! अयं विषमः कालः, कर्दमेनाऽऽतङ्कदा महीं, ईदृशे समये कुत आयासीः?'। तदा साधुर्धन्यं कथयितुं लग्नः—'अहं पाण्डुदेशाद् इहागमम्, गुरुचरणपवित्रितां च लङ्कानगरीं यास्यामि। परं गच्छतोऽयं वर्षाकालो ममान्तरायकृतेऽभवत्। येन हेतुना वर्षति मेघे साधूनां गमनं न युज्यते तेन कारणेन वृष्ट्यभिग्रहं विधायाऽहमत्रैव स्थितः। अथाऽद्य सप्तमे दिने वृष्टौ विरतायां सम्पूर्णाभिग्रहोऽहं क्वापि वसतौ सम्प्रति यामि'। तदा धन्योऽवदत्—'हे महर्षे! मम महिषमारोह, यतः पङ्केन पृथ्वी दुःसञ्चराऽस्ति'। मुनिराह—'हे महिषीपाल! जीवेषु साधवो नारोहन्ति, यत् परपीडाकरं कर्म तत् कदाचिन्नाचरन्ति, साधवः पादचारिण एव'। इति वदन् मुनिस्तेन युक्तः पुरसमीपं गतः। धन्यस्तं मुनिं नत्वाऽवदत्—'यावदहं महिषीर्दोह्मि तावदत्र भवता प्रतीक्षितव्यम्' इत्युक्त्वा, स्वगृहं च गत्वा, महिषीः शीघ्रं दुग्ध्वा, एकं दुग्धघटं भृत्वा मुनिमभ्यगात्। ततो धन्य आत्मानं धन्यं मन्यमानस्तं मुनिं पारणं कारयामास। साधुः पोतनपुरे वर्षारात्रमतिचक्राम। तत ईर्याशुद्ध्युचितेऽध्वनि गच्छन् रुचितं स्थानं जगाम। धन्यस्तु साधुसंसर्गात् स्वभार्यया धूसर्या समं स्थिरं

१ दुःखदा।

सम्यक्त्वं वहन् सुचिरं श्रावकधर्मं पालयामास, समये च तौ दम्पती दीक्षां गृहीत्वा सप्तवर्षाँ पालयित्वा समाधिना विपेदाते । साधुदानोपार्जितपुण्यौ हैमवते युगलौ जातौ । ततो मृत्वा क्षीरडिण्डीरनामानौ[1] देवो देवी च दम्पती अभूताम् ।

## नल-दमयन्त्योर्जन्म, तयोश्च चरित्रम् ।

"ततो देवश्च्युत्वा इह भरते कोशलदेशेऽयोध्यानगर्याम् इक्ष्वाकुवंशसम्भवस्य निषधराजस्य सुन्दराराज्ञ्युदरोत्पन्नो नलनामा पुत्रोऽभवत् । इतश्च विदर्भदेशे कुण्डिनपुरनगरे भीमरथराजः, तस्य पुष्पदन्ती[2] प्रिया । तस्याः कुक्षौ क्षीरडिण्डीरा देवी देवलोकाच्च्युत्वाऽवातारीत् । तदा च सा शयनीये सुखसुप्ता निशाशेषे सुस्वप्नं दृष्ट्वा राज्ञे विज्ञपयामास–'हे स्वामिन् ! अहमद्य सुप्ता जानामि यत् तव मन्दिरे श्वेतहस्ती दवाग्निभीतः प्रविवेश, किं साक्षात्तव यशःपुञ्जः !' । तन्निशम्य शास्त्रसमुद्रपारगामी राजा इति कथयामास–'हे सुन्दरि ! कोऽपि पुण्यवान् गर्भोऽद्य तवोदरे सम्भूतः' । एवं यावद् राजा राज्ञी च वार्तयन्तौ तस्थतुस्तावत् स श्वेतहस्ती ऐरावणभ्रातेव तत्र साक्षादागात् । सप्रियं राजानं निजस्कन्धे क्षणात् तत्पुण्यप्रेरित आरोपयामास । ततः स हस्ती लोकैः पुष्पदामक्षेपपूर्वकं पूज्यमानः पुरे भ्रान्त्वा पुनरपि राजभ-

१ क्षीरडिण्डीरश्च क्षीरडिण्डीरा च क्षीरडिण्डीरौ, इत्येकशेषः । २ पुष्पदन्ती ।

वनमेत्य तौ उदतारयत्, स्वयं चाऽऽलानस्तम्भे न्यलीयत। अथ च देवाः पुष्पाणि स्थाने स्थाने ववृषुः। नृपस्तं गजं सुगन्धिभिर्यक्षकर्दमैः सर्वाङ्गमालिप्य, प्रवरपुष्पैः पूजयित्वा, पश्चादारात्रिकां व्यधात्। अथ पूर्णे काले व्यतिपातादिदोषरहिते दिने राज्ञी कन्यां सुषुवे। तस्या भाले सूर्यसदृशं सहजमेकं तिलकमभूत्, तेन साऽतीव शुशुभे। तज्जन्मप्रभावाद् राजा भीमरथो निःसीमपराक्रमः सर्वाऽपरराजधार्यमाणोग्रशासनो बभूव। तस्यामुदरस्थितायां राज्ञी स्वप्नेऽग्निभीतं स्वगृहमायान्तं दन्तिनं यदपश्यत् ततस्तेन स्वप्नानुसारेण सम्पूर्णे मासे तस्याः पुत्र्या 'दवदन्ती' इति नाम राजा ददौ। सुगन्धिमुखकमलश्वासलुब्धभ्रमरधोरणिः[1] सा दिने दिने वर्धमाना पादचङ्क्रमणं कर्तुमारेभे, साक्षाल्लक्ष्मीरिव च गृहाङ्गणे रेमे। तस्याः प्रभावेण राज्ञो निधयः प्रत्यक्षा अभूवन्। अथाऽष्टमे वर्षे प्राप्ते राजा तां स्वपुत्रीं कलाग्रहणाय कलाचार्यस्याऽदात्, परं तस्याः सुबुद्धेः साक्षिमात्रमुपाध्यायोऽभवत्। सर्वाः कलास्तस्यामादर्शे प्रतिबिम्बवत् संचक्रमुः। सा धीमती कर्मप्रकृत्यादिषु अधीतिनी[2] अभूत्, तस्याः पुरः कोऽपि स्याद्वादमतखण्डको नाऽभवत्। अन्यदा तां कन्यां कलासमुद्रपारदृश्वरीं पितुः पार्श्वे कलाचार्य आनयत्, तत्र राजाज्ञया गुणवनखण्डैकसारणिः सा सर्वं स्वकलाकौशलं सम्यग् दर्शयामास। तदा च तथा श्रुतार्थप्रावीण्यं सा प्रकट्यकृत यथा स्वपिता सम्यक्त्वधारिप्रथमनिदर्शनमभवत्[3]। ततो राजा सहस्राधिकलक्षदीनारैः कलाचार्यं पूजयित्वा विसृ-

१ सुगन्धिमुखकमलश्वासे लुब्धा भ्रमराणां धोरणिः—पङ्क्तिर्यस्याः। २ अधीतमनया साऽधीतिनी। ३ सम्यक्त्वधारिषु प्रथममुदाहरणम्।

ष्यान्। अथ दवदन्त्याः पुण्यातिशयेन निर्वृतिदेवता[1] साक्षाद्भूय सौवर्णीं जिनप्रतिमामर्पयामास। उवाच च—'हे वत्से! भाविनो जिनस्य श्रीशान्तिनाथस्यैषा प्रतिमा त्वयाऽनिशं पूजनीया'। अथ सखीभिः सार्धं रममाणा सा कामिजनकुरङ्गपाशसङ्काशं यौवनं प्राप। तां तादृशीं दृष्ट्वा राजा राज्ञी च तद्विवाहोत्सवं द्रष्टुमुत्सुकमानसावभूताम्, परं तस्यास्तत्तद्गुणगणाऽनुरूपवरचिन्तया पितरौ अन्तः शल्यातुराविवाऽत्यदूयेताम्। अथ क्रमेण दवदन्ती अष्टादशवर्षा बभूव, परं तद्योग्यं वरं राजा नोपलेभे। 'अतिप्रौढानां कन्यानां हि स्वयंवरो युक्त' इति चिन्तयित्वा स राज्ञामाकारणाय दूतानादिशत्। तस्यामन्त्रणेन कुण्डिनपुरे त्वरितं राजानो राजनन्दनाश्च परस्परं श्रिया स्पर्धमाना आययुः। महीपतीनां दृश्यमानैर्महाहस्तिभिस्तदा कुण्डिनपुरसमीपभूमिर्विन्ध्याचलोपान्तभूमिसमाना रराज। तदा निषधराजोऽपि नल-कूबरपुत्रसहितस्तत्रागात्। राजा भीमरथः सर्वेषां राज्ञामभिगमनपुरस्सरं स्वागतं चकार। अथ शुभदिवसे कुण्डिनपुरस्वामी स्वयंवरमण्डपं पालकविमानस्याऽनुजन्मानमिव कारयामास, तस्यान्तर्मञ्चांश्च विमानसदृशान् अकारयत्, तदुपरि स्वर्णसिंहासनानि व्यरचयत्। ततः स्वस्वकुमारसंयुक्ता दिव्यालङ्कारवस्त्रधारिणो राजान आययुः, ते च शक्रसामानिका इव रेजुः। सर्वेऽपि नानाप्रकारचेष्टाभिः स्पष्टं स्ववैदग्ध्यबन्धुरत्वं दर्शयन्तो यथायोग्यं मञ्चेषु निषेदुः। तेषु कश्चित् करलीलया कनककमलं लालयामास, कश्चित्

१ शासनदेवी।

सुगन्धिमल्लिकाकुसुमानि भ्रमरवद् आजघ्रौ, कश्चित्तु कुसुमकन्दुकं गगने द्वितीयं चन्द्रं कर्तुमिव करेणोल्लालयामास । एवं तत्र नानाविधचेष्टां कुर्वाणाः सर्वेऽपि नृपा रेजिरे । अथ देवी सुरसन्दिरमिव पितुराज्ञया तं मण्डपं भूषयन्ती दवदन्ती सखीभिः परिवृताऽपरा रम्भेवाययौ । नवयौवनां तां दृष्ट्वा राजानो विशेषतः स्वचातुर्यं प्रकटीचक्रुः, तत्रैव च निजनयनानि चिक्षिपुः । केचित्तु पाणिग्रहणाय स्वाभीष्टकुलदेवीं स्मृतिगोचरमानयन् । ततश्चान्तःपुरप्रतीहारी नृपाज्ञया तस्या दवदन्त्या नृपान् नामग्राहं कथयितुमारेभे–'हे स्वामिनि ! शिशुमारपुरस्वामी जितशत्रुनृपपुत्रोऽयम् ऋतुपर्णनरेन्द्रो दृशा सम्भाव्यताम् । इक्ष्वाकुवंशतिलकसमः श्रीचन्द्रभूपपुत्रोऽयं चन्द्रराजः, किममुं वुवूर्षसि ? । अयं चम्पानगरीस्वामी भोगवंशोद्भवो धरणेन्द्रराजपुत्रः सुवाहुनृपः; अमुं वृणीष्व, येन गङ्गायाः सुगन्धिभिः सीकरपवनैस्त्वं सेविष्यसे । अयं राजा रोहीतकपुरेशः पवनपुत्रश्चन्द्रशेखरो द्वात्रिंशल्लक्षग्रामाधीशस्ते किं रोचते ? । अयं जयकेसरिभूपालनन्दनो मन्मथरूपः शशलक्ष्मा तव मनः किमाकर्षति ? । अयं सूर्यवंशमुकुटो भृगुकच्छस्वामी जह्नुपुत्रो यज्ञदेवराजः, हे सुन्दरि ! अमुं किमिच्छसि ? । अयं भरतचक्रिकुलतिलको मानवर्धनभूपः, तदेनं विश्वविख्यातं वरं वृणु । अयं कुसुमायुधसुतो मुकुटेश्वरः, रोहिणी चन्द्रस्येव त्वमस्य पत्नी भवितुम-

१ जलकणमिश्रवायुभिः ।

र्हसि । अयं राजा कोशलाधिपतिर्निषधनामा ऋषभस्वामिकुलसम्भवो भुवनविदितोऽस्ति, अस्य च नल-कूबरनामानौ महाबलौ सुतौ स्तः, तव योऽभिमतो भवेत् तस्य कण्ठे वरमालां क्षिप'। दवदन्त्यपि जन्मान्तरस्नेहेन रूपेण च मोहिता तत्कालं नलकुमारस्य गलकन्दले कृष्णस्य लक्ष्मीरिव वरमालां न्यास्थत्। तया नले वृते सति 'अहो! सुष्ठु वृतं सुष्ठु वृतम्' इत्याकाशे खेचराणां वाण्योऽभवन्। तदा कृष्णराजकुमारो धूमकेतुसमानं खड्गं गृहीत्वा त्वरितमुत्थाय नलमवदत्–'अरे नल! तव कण्ठे दवदन्त्या स्वयंवरमाला वृथैव क्षिप्ता, मयि सति न ह्येनां कश्चिदन्यः परिणेतुं समर्थः!, तद् भीमपुत्रीं मुञ्च, अथवा शस्त्राणि गृहीत्वा युद्धाय सज्जो भव। मां कृष्णराजम् अनिर्जित्य कथं त्वं कृती भविष्यसि?। तदा स्मयमानो नलकुमारोऽवादीत्–'अरे क्षत्रियाधम! दवदन्त्या त्वं न वृत इति किं मुधा खेदं प्राप्नोषि?। अहं दवदन्त्या वृतोऽस्मि, तदिमां परस्त्रियं महापापमविमृश्य इच्छसि; तथापि त्वं न भवसि'। इति प्रोच्य नलकुमारोऽनल इवाऽसह्यतेजाः क्रोधधुताऽधरो यमजिह्वाभयङ्करं खड्गं करेण नर्तयामास। नलस्य कृष्णराज कुमारस्य च द्वयोरपि सैन्यं तत्कालं संवर्मयामास। तदा दवदन्ती दध्यौ–'मन्निमित्तोऽयं प्रलय उपस्थितः, हा! किमहं क्षीणपुण्याऽस्मि?'। 'हे शासनदेवते! यद्यहं श्राविका तर्हि मातः! नलो विजयी भवतु, उभयोश्च सैन्ययोः क्षेमं भवतु'। इत्युक्त्वा दवदन्ती जलभृङ्गारं गृहीत्वा शान्त्यर्थं तत्पानीयेन च्छटात्रयं ददौ। तदा कृष्णराजस्तज्जलच्छटाच्छोटितशिरा निर्वाणाऽङ्गार इव क्षणादपि निस्तेजा अभवत्।

शासनदेवतायाश्च प्रभावात् कृष्णराजकराद् वृक्षात् पक्वपत्रमिव खड्गः पपात। अथ हतप्रभावः कृष्णराजो दध्यौ–'नलो न सामान्यः, अमुष्मिन् मया न विचार्य भाषितं प्रयत्नश्च कृतः, तदयं प्रणामयोग्यः' इति चिन्तयित्वा कृष्णराजः प्रेष्यवत् नलपादौ प्राणमद्। ऊचे च–'हे स्वामिन्! मयाऽविमृश्य कृतं, तन्ममापराधम् अविनीतत्वदोषं च क्षमस्व'। प्रणामान्तकोपो महापुरुषो नलोऽपि प्रणामकारिणं कृष्णराजं संभाव्य व्यसृजत्। भीमरथो राजा जामातृगुणैः पुत्रीं पुण्यवतीं मेने। पश्चात् सर्वानपरान् राज्ञः सत्कृत्य विसृज्य च नल-दवदन्त्योर्महान्तं पाणिग्रहणोत्सवं चक्रे, करमोचने च स्वविभवोचितं गज-वाजि-रथादि भीमरथराजो जामात्रे ददौ। तौ नवपरिणीतौ आबद्धकङ्कणौ गोत्रजरतीगीयमानमङ्गलगीतौ गृहचैत्यं विधिपूर्वकमवन्देताम्। ततो महामहेन भीमरथ-निषधभूपती तयोः कङ्कणमोचनं कारयामासतुः। ततश्च सपुत्रं निषधराजं भीमरथनृपोऽतीव सत्कृत्य व्यसृजत्, किञ्चिच्चाऽन्वगात्। अनुपतिं व्रजन्तीं दवदन्तीं पुष्पदन्ती माता शिक्षां दातुं लग्ना–'हे पुत्रि! व्यसनेऽपि पतिं देहच्छायेव त्वं मा त्याक्षीः'। ततः स्वपितरौ अनुज्ञाप्योपेयुषीं दवदन्तीं नलो रथे आरोपयामास, स्वयं च न्यविशत्।

"अथ राजा निषधः सपुत्रः स्वनगरीसंमुखं चचाल। मार्गे गजमदवारिभिर्भूमिः सिषिचे, तुरगखुरक्षुण्णाऽवनिः कांस्यतालमिव ररास, शकटानां रेखाभिः पन्थानोऽचित्र्यन्त, करभ-वेसरैर्मार्गवृक्षा निष्पत्राः क्रियन्ते स्म, सैन्यैः पीतपानीया वापी-कूप-तटाक-तटिनी-कुण्डादयो जलाशयाः पङ्कशेषा अभूवन्, उद्धूतैः

सैन्यरजोभिश्च गगनेऽपि द्वितीया भूमिरिवाभवत् । राजा निषधः स्वनगरीदर्शनोत्सुकश्चलन् कथमपि न व्यरंसीत्, ततोऽन्धकारः प्रसृतः, न स्थल-जल-गर्ता-वृक्षादिकं किञ्चिद् अदृश्यत । तदा तमसा रुद्धलोचनवलं चतुरिन्द्रियतां गतं सैन्यं दृष्ट्वा नलो निजोत्सङ्गसुप्तां दवदन्तीमवदत्–'सुन्दरि ! आत्मीयसैन्यं तमसा पीडितम्, अतः स्वकीयतिलकभास्करं प्रकाशय' । इति श्रुत्वा दवदन्ती उत्थाय स्वभालममार्जयत्, तदा स तिलकोऽन्धकारे सूर्यसमोऽदीपिष्ट । ततः सैन्यं निर्विघ्नं चलितुमारेभे । अग्रतः पद्मखण्डमिव भ्रमरैर्लेलिह्यमानं प्रतिमया स्थितमेकं साधुं नलो ददर्श। तदा स्वपितरमूचे–'हे तात ! असौ महर्षिर्दृश्यतां, वन्द्यतां, मार्गप्रासङ्गिकं फलं च गृह्यताम् । अयं मुनिः कायोत्सर्गे स्थितः केनचिन्मदोन्मत्तगजेन गण्डकण्डूयनवाञ्छया वृक्षवद् अघृष्यत; अतीवतद्गण्डकण्डूतिविलग्नमदवारिसौरभ्याद् मधुकरैर्दंश्यमानोऽसौ परीषहं सहते। मत्तेनापि हस्तिना पर्वत इव स्थिरपादो ध्यानान्न चालितोऽयम् अन्तरा पुण्यैर्दृष्टः' । अथ जातश्रद्धो निषधनृपः सपुत्रः सपरिवारश्च प्राप्तं तीर्थमिव क्षणं तं मुनिं सिषेवे, पुनः पुनः प्रशस्य तं निरुपद्रवं च कृत्वा सपरीवारोऽगात् । अथ क्रमेण कोशलानगरीपरिसरं प्राप्य नलो निज प्रियामवदत्–'देवि ! इमां हि जिनप्रासादमण्डितामस्माकं पुरीं विलोकय' । दवदन्त्यपि उच्चैस्तचैत्यदर्शनाद् उत्कण्ठोत्कण्ठिता ययौ, यथा मयूरी मेघदर्शनात् सोत्साहा जायते। वारंवारमत्यन्तं सा स्वात्मानं प्रशंसयामास–'अहं धन्याऽस्मि यया नलः पतिर्लब्धः, मया प्रतिदिनममूनि चैत्यानि वन्दिष्यन्ते' । अथ सर्वतस्तोरण-ध्वजादिभिः

प्रारब्धनानाविधमङ्गलाचारायां निजनगर्यां शुभे दिने सपुत्रो निषधराजः प्रवेशमकरोत् । तत्र नलो दवदन्ती च दम्पती नखमांसवत् प्रीतिभाजौ महासुखेन कियत्कालमतीयतुः। अन्यदा निषधराजः स्वराज्ये नलं यौवराज्ये च कूबरमस्थापयत्, स्वयं तु दीक्षां जग्राह।

"अथ नलभूपालः स्वां प्रजां सन्ततिमिव पालयामास। तस्याः सुखेन सुखी तस्या दुःखेन च दुःखी सर्वदा प्रजापालक एवाऽभवत्। बुद्धि-पराक्रम-भुजाबलसम्पन्नं तं नलराजं जेतुमपरः कोऽपि राजा समर्थो नाऽभूत्। अन्यदा नलः क्रमागतान् सामन्त-प्रधानपुरुषादीन् पप्रच्छ—'किमहं पित्रोपार्जितामेव भूमिं पालयामि अधिकां वा ?'। तदा तेऽवोचन्—'राजा निषधस्त्र्यंशोनं भरतार्धमभुक्त, परं त्वया तु समस्तं भरतार्धं भुक्तम्; पितुरधिकः पुत्र इदं युक्तमेव। परम् इत योजनद्विशतदूरायां तक्षशिलानगर्यां कदम्बनृपः, स त्वदाज्ञां नाऽङ्गीकरोति। तावके भरतार्धसाधनजयोत्पन्नाद्भुतयशश्चन्द्रे स एक एव कलङ्कश्रियं प्राप्नोति। व्याधिलेश इव त्वया प्रमादेनोपक्षितः सोऽत्यन्तं प्राप्तोपचयोऽसाध्यत्वमागतोऽस्ति, परं यदा त्वया रोषपरुषं मनस्तदुपरि क्रियेत तदा सोऽद्रिभ्रष्टो घट इव भज्येत एव। ततः प्रथमं दूतमादिश्य स उन्मत्तः कदम्बभूपः प्रबोध्यताम्'। इति क्रमागतसामन्तादिवचनं हितकारि निशम्य, नलो महावाचालं दूतमनुशिष्य भूयसा सैन्येनाऽऽदिशत्। सोऽपि गरुड इव दुर्धरः शीघ्रं गत्वा, स्वस्वामिनमलज्जयन् कदम्बराजं कथयितुं लग्नः—'अरे कदम्ब! मत्स्वामिनं महावैरिवनदावानलं नलभूपालं सेवस्व, स्वाऽभिमानं त्यज।

अहं तु तव कुलदेवीभिरधिष्ठित इव हितं कथयामि । यदि नलस्याज्ञां न करिष्यसि तदा तव दुःखकरं भावि' इति दूतवचनानि श्रुत्वा,कदम्बः क्रोधाक्रान्तो दन्ताग्रैरोष्ठं दशन् वालिश इव स्वम् अजानन् अदोऽवदत्–'अरे दूत ! तव स्वामी किं ग्रथिलोऽस्ति ?, किं वा वातस्थानके सुप्तो यो मां वैरिमुस्तावराहं न जानाति ? । तस्य किं सामन्त-प्रधान-पुरोहितादयो न सन्ति ये सुप्तं सिंहं मां प्रबोधयन्तं नलं न निषेधन्ति ? । हे दूत ! तद् गच्छ, यदि तव स्वामी राज्यादुद्विग्नस्तदा सङ्ग्रामाय सज्जो भवतु, अहमपि तस्यैव संग्रामाऽतिथिरस्मि' । दूतोऽपि शीघ्रमागत्य तत् कदम्बोक्तम् अहङ्कारदारुणं वचनं नलस्य कथयामास । ततो नलस्तक्षशिलानगर्युपरि सर्वसैन्येन सहितश्चटितः । तत्र त्वरितं गत्वा स सर्वां तक्षशिलापुरीं वेष्टयामास, हस्तिभिर्द्वितीयप्राकारा किं कृता !, ईदृशी सा नगरी दृश्यते । कदम्बोऽपि सन्नह्य ससैन्यो बहिर्निरगात्, यतो गुहाद्वारागतं द्वितीयं सिंहं न सिंहः सहते । तत उभयोः सैन्ययोः सुभटा युयुधिरे, शेराशरि चिरतरं कृते गगने वाणमण्डपाः समभवन् । अथ नलः कदम्बमुवाच–'किं गजादिभिर्मारितैः ?, आवां वैरिणौ द्वन्द्वयुद्धेन युध्यावहे' । ततो नल-कदम्बौ आयुधादिभिर्द्वन्द्वयुद्धैर्युयुधाते । दर्पान्धः कदम्बो नलाद् यद्यद् युद्धं याचते स्म तत्र तत्र विजयिना नलेन स पराबभूवे । तदा कदम्बश्चिन्तयामास–'महाबलेन नलेन सह मया क्षत्रवृत्तं तोलितम्, अथाऽहं तेन मृत्युकोटिं प्रापितोऽस्मि; तत् पतङ्गवद् मा मृषि, तस्मात्

१ मुस्ता-कुरुविन्दः–भाषाया 'नागरमोथ' । २ शरैश्च शरैश्च मिथः प्रहृत्य कृत युद्ध शराशरि ।

कारणाद् नलात् पलायनं कृत्वा दीक्षामासादयामि, यतस्तत् पलायनमपि वरं यस्य फलं सुन्दरम्' । इति मनसि विचिन्त्य, कदम्बः प्रपलाय्य, भवविरक्तो व्रतं गृहीत्वा प्रतिमया संस्थितः। तं गृहीतव्रतं दृष्ट्वा नलोऽवदत्–'हे कदम्ब ! अहं त्वया जितोऽस्मि, परं मनसः क्षमां मा त्याक्षीः, त्वं जयकास्यसि'[1] । महाव्रतधारी धीरः कदम्बो नलस्य किमप्युत्तरं नाऽदात्, यतो निरीहस्य[2] किं राजा ?। ततो नलः कदम्बं व्यावर्ण्य[3] तस्य सत्त्वेन मस्तकं धूनयन् तत्पुत्रं जयशक्तिं तद्राज्ये स्थापयामास । ततो विजयिनो नलस्य वासुदेवस्येव समस्तै राजभिर्भरतार्धपतित्वाभिषेकोऽकारि। अथ स्वपुरीं कोशलां जग्मुषो नलस्य राजानः प्राभृतान्यदुः । खेचरनारीभिरपि गीयमानबलो नलभूपालो दवदन्त्या समं रममाणश्चिरकालं पृथ्वीं पालयामास ।

अथ कूबरः स्वकीयकुलाङ्गारो राज्यलुब्धो नलस्य सत्पात्रस्य शाकिनीवत् छलं गवेषयामास । नलस्य तु न्यायवतोऽपि द्यूतासक्तिरभूत्, चन्द्रस्यापि कलङ्कोऽस्ति, क्व रत्नमनुपद्रवं वर्तते ?। 'अहं महीं जयामि' इति क्रूराशयः कूबरो नलं पाशकैः सर्वदा रमयामास । तौ बहुकालं द्यूतलीलया रेमाते, डमरुकग्रन्थिवच्च द्वयोर्जयः संचचार । अन्यदा अनुगमचर-बन्ध-मोक्षसमर्थोऽपि नलः कूबरं जेतुं दैवयोगतः क्षमो नाऽभवत्, काङ्क्षमाणोऽपि अनुकूलपाशको नलस्य नाऽपतत्, ततस्तच्छारीन्[4] कूबरः पुनः पुनरमारयत् । ग्राम-नगर-कर्वट-खेट-द्रोणादि हारयन्नलो लक्ष्म्या हीयमानोऽभवत्, यथा ग्रीष्मे सरोवरं पानीयरहितं भवति ।

१ जयेन शोभनशीलः । २ निःस्पृहस्य । ३ प्रशस्य । ४ शारिः भाषायां 'सोंगठी' ।

ततः सर्वलोको नले द्यूतव्यसनम् अमुञ्चति सति विषसाद, कूवरस्तु पूर्यमाणवाञ्छितोऽतीव जहर्ष । नलानुरक्तो लोको हाहाकारं कर्तुं प्रचक्रमे, तमाकर्ण्य तत्र दवदन्त्यागात्। उवाच–"हे नाथ ! त्वां प्रार्थयामि, मम प्रसीद, द्यूतं मुञ्च, तव पाशकौ वैरिणाविव द्रोहकारिणौ स्तः । नाथ! गणिकागमनवद् मनीषिणो द्यूतं क्रीडामात्रं सेवन्ते, न त्वेवं प्रतिदिनम् । इदमात्मनोऽन्धङ्करणं सर्वसम्पदः क्षयकरं चाऽस्ति । वरं कूवराय लघुभ्रात्रे स्वयं राज्यं देहि, परम् 'अस्मात् प्रसह्य लक्ष्मीर्गृहीता' इत्यात्मनः प्रवादं मा कृथाः । भवता युद्धशतैरियमुपार्जिता पृथ्वी द्यूतोत्तीर्णा[1], देव ! तेन कारणेन अस्रोतोगतसिक्थुवद् मां दुनोति" । तद्वाचं नलो न शुश्राव, तस्याः सम्मुखमपि न ददर्श, यथा दशमीं मदावस्थां गतो गजः किमपि न वेत्ति । एवं पत्याऽत्यन्तमवज्ञाता दवदन्ती रुदती कुलामात्यादीन् ऊचे–'नलं द्यूतान्निषेधत' । तेषामपि वचनं सन्निपातवत औषधमिव नलस्य मनागपि न प्रबभूव । हारितभूमिरपि नलो द्यूतेऽनलस एवाऽभूत्, ततो दवदन्त्या सहाऽन्तःपुरमपि अहारयत् । अथ हारितसर्वस्वः स्वशरीरादपि सर्वमाभरणादिकं प्रविव्रजिषुरिवाऽमुञ्चत् । ततः कूबरो नलं प्रोचे–'रे नल ! मा इह स्थाः, मम भूमिं त्यज । तव पित्रा राज्यं दत्तं, मम तु पाशकैर्दत्तम् !'। 'बलवतां पुरुषाणां लक्ष्मीर्न दूरे, मदं मा कार्षीः' इति ब्रुवन् नलः संव्यान[2]मात्रस्ततश्चचाल। अथ नलमनुयान्तीं दवदन्तीं कूवरोऽधमवाचम् अवदत्–'रे सुन्दरि ! त्वं द्यूते जिताऽसि, अतो मा गाः,

१ द्यूतेनोत्तीर्णा–गता। २ संव्यानम् उत्तरीयवस्त्रम् ।

समान्तःपुरं पवित्रीकुरु'। तदाऽमत्यादयो दुराशयं कूबरं प्रोचुः—"महासतीयं दवदन्ती अन्यपुरुषच्छायामपि न स्पृशति, अत इमामन्तःपुरे त्वं मा निधाः। 'ज्येष्ठभ्रातृपत्नी मातृवद् ज्येष्ठभ्राता च पितृवद्' इति बाला अपि कथयन्ति। कूबर! तथापि यदि प्रसह्यैवं त्वं करिष्यसि तदेयं सती दवदन्ती त्वां भस्मसात् करिष्यति, यतो ज्वलनादिविधानं सतीनां दुष्करं नास्ति। हे राजन्! इमां सतीं कोपयित्वाऽनर्थं मा प्रपद्येथाः, प्रत्युत भर्तारमनुयान्तीयम् उत्साह्यताम्। नलं प्रति ग्राम-नगर-पत्तनादिदानेन सृतम्, परं सशम्बलं ससारथिमेकं रथं तु अर्पय"। इत्युक्तः सन् कूबरो दवदन्तीं नलेन सह व्यसृजत्, सशम्बल-सारथिं रथं चार्पयामास। तदा नलोऽवदत्—'येन मया भरतार्धजयेन लक्ष्मीरुपार्जिता सा क्रीडया त्यज्यते तस्य मम का रथेच्छा ?'। इति श्रुत्वा चिरसेवकाः प्रधानपुरुषाः प्रोचिरे—'हे स्वामिन्! वयमपि त्वामनुयामः, परं कूबरो निषेधति। तव लघुभ्राता त्वद्दत्तराज्यश्चैपोऽस्माकं न त्याज्यः, यतोऽस्मिन् वंशे हि यो भूपालः स सेव्यः, अयमस्माकं क्रमः। ततो हे महाभुज! त्वया सहागन्तुं नार्हामः। सम्प्रति तव भार्या मन्त्री सखा पत्तिश्च दवदन्त्येव। परं हे स्वामिन्! अङ्गीकृतसतीमर्यादां शिरीषसुकुमाराङ्गीमिमां दवदन्तीं पादचारेण कथं मार्गे नेष्यसि ?, सूर्यतापितवालुकापुञ्जं मार्गं कमलगर्भसमानैः पादैरेषा कथं स्पृशेत् ?। तद् हे नाथ! प्रसीद, अस्माकमनुगृहाण, देव्या समं चेह रथे आरोह। अध्वा क्षेमो भवतु, वः स्वस्त्यस्तु'। एवं प्रधानपुरुषैः पुनः पुनः प्रार्थ्यमानो नलो दवदन्त्या समं रथमारुह्य निर्ययौ। दवदन्तीमेकवस्त्रां स्नानोद्यतामिव

विलोक्य अश्रुपानीयक्लेदितकञ्चुका नागर्यः स्त्रियोऽतीव रुरुदुः । अथ पुरमध्येन गच्छन्नल एकं पञ्चशतहस्तोन्नतं दिग्गजालानसमानं स्तम्भं ददर्श; तदा राज्यभ्रंशसम्भवं दुःखम् अजानन्निव कौतुकात् तं लीलया कदली गज इवोत्पाटयामास, पुनरपि स्तम्भं तत्रैवारोपयामास । तद्बलं दृष्ट्वा नगरलोकाः प्रोचुः–"अहो ! नलस्य बलम् । अस्यापि बलिनो व्यसनं तत्खलु नियतिरेव प्रमाणम् । पुरा [1]नगोद्याने कूबरेण समं नलस्य क्रीडत एको महर्षिर्ज्ञानी आजगाम । स च कथयामास–'पूर्वस्मिन् जन्मनि साधुक्षीरदानप्रभावाद् असौ नलो भरतार्धपतिर्भावी, यो हि नगरीमध्यस्थितं पञ्चशतहस्तोन्नतं स्तम्भं चालयिष्यति सोऽवश्यं भरतार्धपतिः परिज्ञेयः' । एतद् द्वयं संवादभूत्–भरतार्द्धपतिर्नलः, स्तम्भश्चानेन चालितः । परं 'नले जीवति सति कोशलानगर्यां न ह्यपरो राजा भावी' इति यत्तेन महर्षिणा कथितं तत्तु विसंवादि दृश्यते ! । अथवा तस्य वाग् दृष्टप्रत्यया नाऽन्यथा भवित्री, यतः किं ज्ञायते पुनः कूबरो यदि न नन्दिष्यति, अथ कदाचिदत्र नल एव राजा पुनः स्यात्, पवित्रकीर्तेर्नलस्य पुण्यं वर्धताम्" । एवं नगरलोकवचनानि शृण्वन्, अतीव रुदत्या दवदन्त्या अश्रुप्रवाहैः स्नप्यमानरथो नलो नगरीं तत्याज । दवदन्तीमभ्यधाच्च–'हे देवि ! आवां सम्प्रति क्व यावः ?, यतः स्थानमनुद्दिश्य दक्षाणां चलनक्रिया न शोभते' । इति पृष्टा तीक्ष्णबुद्धिर्दवदन्त्युवाच–'देव ! कुण्डिनपुरे गम्यताम्, तत्रातिथीभूय मम तातो भवताऽनुगृह्यताम्' । इति श्रुत्वा

१ पर्वतोपवने ।

नलनृपादिष्टो भक्तेराश्रयः सारथिः कुण्डिनपुरदिशं प्रति तुरङ्गमान् प्रेरयामास । अथ व्याघ्रसमूहबूत्कारभीषणां केसरिसिंहमारितवनगजदन्तदन्तुरभूतलां यमक्रीडास्थानमिव महाघोराटवीं नलः प्राप । अग्रतो गच्छन् आकर्णाकृष्टकोदण्डान् प्रचण्डान् भिल्लान् अभिसर्पतो यमदूतसदृशान् ददर्श । तेषु च केऽपि भिल्लाः सुरापानतत्परा इव ननृतुः, केऽपि च एकदन्तगजसमानाः शृङ्गमवादयन्, केऽपि च रङ्गादौ नर्तका इव कलकलं चक्रुः, केचित्तु बाणान् मेघधारा इव ववृषुः, केऽपि च नियोधिनो मल्ला इव करास्फोटं व्यधुः । एवंविधास्ते सर्वे भिल्लाः सम्भूय गजं श्वान इव नलं रुरुधुः । अथ नलस्त्वरितं रथादुत्तीर्य, कोशादसिमाकृष्य स्वमुष्टिमध्ये रङ्गे नर्तकीमिवाऽनर्तयत्, तदा दवदन्ती रथं मुक्त्वा नलं भुजायां धृत्वाऽवदत्–'हे स्वामिन्! एतेषु तवाक्षेपः कीदृशः?, किं शशक-जम्बुकादिषु सिंहः पराक्रमं करोति?। हे नाथ! एतेषु भरतार्धजयश्रीवासभूमिरसौ व्यापार्यमाणोऽसिर्हेष्यति' । इत्युक्त्वा दवदन्ती स्वसमीहितसिद्धये पुनः पुनर्हुङ्कारान् अमुञ्चत् । मुच्यमानास्ते हुङ्काराः सत्याः प्रभावाद् भिल्लकर्णेषु लोहसूचितां ययुः । भिल्ला दिशो दिशं प्रणश्य प्रणश्य जग्मुः, तौ दम्पती तु तानभिधावन्तौ रथाद् दूरे बभूवतुः । इतश्चापरैः पुलिन्दैस्तयो रथो गृहीतः, दैवे वक्रीभूते पुरुषकारः किं कुर्यात्?। ततो नलो दवदन्तीं पाणिनाऽऽदाय तस्याः पाणिग्रहोत्सवं स्मारयन्निवाऽभ्रमत् । दवदन्ती दर्भ-कण्टकविद्धचरणक्षरद्रुधिरबिन्दुसमूहैररण्यपृथ्वीम् इन्द्रगोप[1]जीवाकुलामिव चकार । पुरा पट्टबन्धस्तस्या मस्तकेऽभूत्, तदा पुनः स्ववस्त्रं

१ इन्द्रगोपः—त्रीन्द्रियजीवविशेषः ।

दारं दारं तस्याः पादयोः पट्टबन्धं नलश्चकार ! । यदा च दवदन्ती श्रान्ता सती वृक्षतले उपविष्टा तदा नलस्तालवृन्तीकृतपरिधानाञ्चलेन वातं वीजयमास, पलाशपत्रैश्च पानीयमानीय पञ्जरस्थां सारिकामिव तामपीप्यत् ! । ततो दवदन्ती पप्रच्छ–'अद्यापि कियत्यसौ अटवी ?, अत्र स्थिताया मम द्विधा भवितुमिव इदं हृदयं कम्पते' । नलोऽपि कथयितुं लग्नः–'हे प्रिये ! एषाऽटवी शतयोजनसत्का, अस्याः पञ्चैव योजनान्यावामागतौ, ततो मनसि धीरतामानय' । एवं तस्मिन् महारण्ये वार्तयतोर्गच्छतोस्तयोः सूर्यः सम्पदनित्यतां कथयन्निव अस्तं प्राप । अथ 'दवदन्ती श्रान्ता' इति विचिन्त्य, अशोकपल्लवान् छित्वा तस्याः कृते नलस्तल्पं चक्रे । प्रियामुवाच–'देवि ! शयित्वा तल्पं पावनं कुरु, निद्रासमयो दुःखविस्मृतिकारणाय सखा वर्तते' । दवदन्त्यभ्यधात्–'देव ! पश्चिमदिशि अदूरतः केषामपि वासोऽस्तीति मन्ये, यतस्तत्प्रत्ययकारणं गवां हम्भारवं कर्णौ धृत्वा शृणु । किञ्चिदग्रे भूमिमुल्लङ्घ्य तत्र यावः, सुखेन च रात्रिर्निर्गम्यताम्' । तदा नल ऊचे–'हे भीरु ! तत्र तापसानामाश्रमाः सन्ति, ते च मिथ्यादृशः, तेषां सङ्गत्या हि सम्यक्त्वरत्नं विनाशं प्राप्नोति,यथा आरनालेन क्षीरं स्वाभाविकरस-गन्धादिवर्जितं भवति। तेनाऽत्रैव सुखेन स्वपिहि, तत्संमुखं मनो मा कृथाः, अहमङ्गरक्षक इव तव प्राहरिको भवामि' । ततस्तत्र पल्लवशय्यायां स्वकीयसंव्यानार्धं नलोऽक्षिपत् । अर्हन्तं देवं वन्दित्वा पञ्चनमस्कृतिं च स्मृत्वा दवदन्त्यशेत । ततस्तस्यां

१ काञ्जिकेन ।

निद्रायमाणायां सत्यां नलश्चिन्तां चक्रे—'येषां श्वशुरः शरणं ते जगति नराधमाः, तदहं कथं दवदन्त्याः पितुर्गृहे व्रजामि ?। तद् वज्रमयं हृदयं विधाय प्रेयसीमप्यत्र त्यक्त्वाऽन्यत्र स्वेच्छया आत्मानमादाय रङ्कवद् गच्छामि !, अस्याश्च मम प्रियायाः शीलप्रभावशाश्वतमन्त्रात् कश्चिदुपद्रवो न स्यात्'। इति विचार्य च्छुरीमाकृष्य नलः स्वसंव्यानार्धमच्छिदत्, दवदन्त्या वस्त्रे च स्वरुधिरेणाक्षराणि लिलेख । तच्चेदं श्लोकद्वयम्—

"विदर्भेष्वेष यात्यध्वा वटाऽलङ्कृतया दिशा । कोशलेषु च तद्वामस्तयोरेकेन केनचित् ॥ १ ॥

गच्छेः स्वच्छाशये ! वेश्म पितुर्वा श्वशुरस्य वा । अहं तु क्वापि न स्थातुमुत्सहे हे विवेकिनि !" ॥ २ ॥

एवमक्षराणि लिखित्वा नलोऽशब्दं रुदन् अग्रतश्चौरवद् मन्दं मन्दं गन्तुमारेभे । सुप्तां स्वप्रियां वलितकन्धरोऽपश्यत्, तावदग्रे ययौ यावत् साऽदृश्यत्वमियाय । पश्चाद् मनसि सोऽचिन्तयत्—'तां बालामनाथां महारण्ये सुप्तां यदि व्याघ्र-सिंहादयो भक्षयेयुस्तदा का गतिः ?। तस्माद् निशां लोचनविषयीकृत्य तामहं रक्षामि, प्रातःकाले एषा यथारुचि मत्कथितमार्गयोर्यातु' । इति चिन्तयित्वा तैरेव पादैः पतितार्थग्रहणाय चिन्तातुरः कोऽपि पुमानिव नलो वलितः । तत्र च स्वप्रियां भूलुठितां दृष्ट्वा स पुनरप्यचिन्तयत्—'अहो ! नलस्यान्तःपुरम् असूर्यम्पश्यमपि अत्रैकवस्त्रम् एकाक्येव च मार्गे स्वपिति !। हा हा ! मम कर्मणां दोषेणेयं कुलीना सती एवंविधां दशां प्रविवेश । अहं हताशः किं करोमि ?। मयि समीपस्थेऽपि उन्मत्तवद् अनाथवद्वाऽसौ गुणपात्रं भूमौ शेते !, तन्मां हि धिग् धिक् । अथ च मयैकाकिन्यसौ

मुक्ता प्रबुद्धा[1] सती मया सह स्पर्द्धयेव जीवितेनापि मोक्ष्यते, तदेनां भक्तां वञ्चित्वाऽहं नान्यत्र गन्तुमुत्सहे, तस्मान्मे जीवितं मरणं वाऽनया सार्धं भवतु । अथवाऽनेकदुःखानां पात्रं नरकोपमेऽरण्ये नारकिक इवैक एवाऽहं भवामि, इयं च प्रिया मया वस्त्रलिपीकृतामाज्ञां ज्ञात्वा स्वयं स्वजनगृहे गत्वा कुशलिनी स्थास्यति' । इति निश्चयं कृत्वा तत्र रात्रिमतिक्रम्य च नलो निजपत्न्याः प्रबोधसमये त्वरितक्रमं तिरोऽधात् । अथ दवदन्ती निशाशेषे एवं स्वप्नमपश्यत्–'अहं फलिते पुष्प-पत्रसहिते सहकारे आरुह्य भ्रमरशब्दान् शृण्वती तत्फलान्यभक्षयम् । स वृक्षोऽकस्माद् वनगजेनोदमूलि[2], ततोऽहं पक्षिणोऽण्ड इव पृथिव्यां पतिता' । इति स्वप्नं दृष्ट्वा दवदन्ती तत्कालं प्रबुद्धा सती नलं पुरोऽपश्यन्ती यूथाद्वियोगिता मृगीव दिशां विलोकनमकरोत् । अचिन्तयच्च–'माम् अशरण्यां प्रेयानपि हा हा ! मुमोच । यद्वा मम प्राणेशो मुखधावनाय निशाशेषे क्वापि जलस्थाने जलानयनाय गतो भविष्यति । यद्वा कयाचिदपि विद्याधर्या तद्रूपमोहितया उपरुध्य रमयितुं नीतः, तया च कस्यांचित्कलायां स मम वल्लभो लोभं प्रापितो यद्यापि नागच्छति । इमे वृक्षास्ते एव, पर्वता अपि ते, अरण्यमपि तत्, सा च पृथ्वी, परमेकं कमलनयनं नलं न पश्यामि । एवं चिन्तां गता सा समस्ता दिशो दर्शं दर्शं[3] प्राणेशमपश्यन्ती स्वस्वप्नं व्यचारयत्–'सहकारो यो मया दृष्टः स नलराजः, पुष्प-फलादिकं तु राज्यं, फलास्वादश्च राज्यसुखं, भ्रमरा मम परिजनः । यश्च

१ जागरिता । २ उन्मूलितः । ३ दृष्ट्वा दृष्ट्वा ।

वनगजेन सहकार उन्मूलितः स मम भर्ता दुष्टेन दैवेन राज्यादुत्थाप्य प्रावास्यत, यच्चाऽहं वृक्षात्पतिता तत्तु नलाद् भ्रष्टा। अनेन स्वप्नेन मम नलो दुर्लभदर्शनो भावी'। एवं स्वप्नार्थं निर्णीय सा धीमती दध्यौ— 'न राज्यं न भर्ता, ममेदं द्वयमपि कर्मदोषेणापतितम्'। ततः सा मुक्तकण्ठं व्यलपत्, यतो दुर्दशापतितानां नारीणां धैर्यं कुतो भवेत् ?। 'हे स्वामिन् ! मन्मनःकमलमधुकर ! मां किमत्याक्षीः ?, तव किमहं भाराऽभवम् ?, स्वकीया कञ्चुलिका न हि कदाचित् सर्पस्य भाराय जायते। यद्वा क्वचिद्वल्लीवने हास्येन च्छन्नस्थितोऽभूस्तत्प्रकटीभव, न हि अतीवहास्यमपि सुखदम्। हे वनदेवताः ! युष्मान् प्रार्थये मह्यं प्रसीदत, मम प्राणेशं नलं दर्शयत, अथवा तत्पवित्रितमार्गं दर्शयत। हे धरित्रि ! पक्वं चिर्भटकमिव त्वं द्विधा भव, त्वद्दत्तविवरेणाऽहं प्रविश्य निर्वृतिं प्राप्नोमि'। एवं विविधविलापैर्विलपन्ती रुदती च दवदन्ती नयनाश्रुजलैः सारणीपानीयैरिवाऽरण्यवृक्षान् सिषेच। जले स्थले वृक्षच्छायायाम् अरण्ये पर्वते सर्वत्र नलं विना ज्वरार्ताया इव तस्या निर्वृतिलवोऽपि नाऽभवत्। अथाऽटव्यां भ्रमन्ती सा संव्यानाञ्चलेऽक्षराणि दृष्ट्वा, विकसन्नयनकमला हर्षेण वाचयामास। दध्यौ च—'अहं निश्चितं तन्मनःसम्पूर्णसरोवरहंस्यस्मि, यद्येवंविधा न स्यां तदा कुतो ममादेशप्रसादास्पदत्वम् ?। अहमेतं भर्तुरादेशं गुरुवचनतोऽधिकं मन्ये, तदादेशं कुर्वत्या मम सुखं भविष्यत्येव, तत् पितुर्गृहे व्रजामि। परं पतिं विना तद्गृहमपि स्त्रीणां पराभवायैव स्यात्। अथ प्रथमं पत्या सहाऽपि मया पितृगृहं यियासितं, तदद्य विशेषतः पत्यादेशे वशवर्तिनी

पितुर्गृहं व्रजामि'। इति निश्चयं कृत्वा सा वटमार्गेण गन्तुं प्रचक्रमे। मार्गे व्यात्तमुखा व्याघ्रा भक्षणायोत्थिता अपि अग्नेरिव तस्याः सत्याः समीपमागन्तुं न समर्था अभवन्। पुनस्तस्यास्त्वरितं गच्छन्त्या वल्मीकमथनप्रादुर्भूता महापन्नगा मूर्ताया जाङ्गुल्या इव नाऽभ्यसर्पन्। ये स्वच्छायामपि अन्यगजशङ्कया भिन्दन्ति ते मत्ता गजा अपि दवदन्त्याः सिंह्या इव दूरे ययुः। पुनस्तस्या मार्गे व्रजन्त्या अन्येऽप्युपद्रवा न प्राभूवन्, यतस्तासां स्त्रीणां सर्वत्र कुशलं याः पतिव्रताः स्युः। सा भिल्लवधूवद् अतीवविसंस्थुलकेशा, तत्कालं स्नातेव जलार्द्रा, दवत्रस्ता हस्तिनीव त्वरितं त्वरितं यान्ती मार्गे महर्द्धिकमेकं सार्थमावासितं ददर्श। अचिन्तयच्च—'यदि पुण्येन कश्चिदपि सार्थः प्राप्येत तदा सोऽरण्यसमुद्रे पोतवत् स्यात्'। एवं चिन्तयन्ती सा स्वस्थीभूय तस्थौ तावत् परितश्चौराः सार्थं सुरसेनामसुरा इव रुरुधुः। तां चौरसेनां चौरमयीम् ईतिमिवाऽऽयान्तीं दृष्ट्वा सार्थलोका भयं प्रापुः, यतो धनिनां हि सुलभमेव भयम्। तदा दवदन्ती तत्कुलदेवीव वाचमुवाच—'हंहो! लोका! मा भैष्ट मा भैष्ट'। अथ दवदन्ती चौरान् कथयामास—'रे रे दुराशया! व्रजत व्रजत, अमुष्मिन् सार्थे मया रक्ष्यमाणे यूयमनर्थमवाप्स्यथ'। एवं वदन्तीमपि दवदन्तीं भूतग्रस्तां वातूलामिव च ज्ञात्वा ते चौरा नाऽजीगणन्। ततो भीमरथसुता सार्थहितं वाञ्छन्ती चौरमदभञ्जकान् हुङ्कारान् मुमोच। तत्कालं बधिरीकृतारण्यैस्तस्या हुङ्कारैश्चौरा धनुर्नादेन काका इव

---

१ विस्तारिताननाः। २ वल्मीकः शक्रमूर्द्धा, भाषायाम् 'राफडो'। ३ ईतिरुपद्रवः।

पलायांचक्रुः। तदा सार्थलोक इत्यवदत्—'एषा काऽप्यस्मत्पुण्यैराकृष्टा खलु देवता, अस्मान् चौरेभ्योऽरक्षत्'। सार्थवाहोऽपि तां जननीमिव भक्त्या प्रणम्य पप्रच्छ—'हे महानुभावे! त्वं किं महारण्ये परिभ्रमसि?, का चाऽसि?'। साऽपि साश्रुदृग् बान्धवायेव सार्थपतये आत्मनो नलद्यूतात् सर्वं वृत्तान्तं कथयामास। सार्थवाह उवाच—'हे महासति! त्वं नलस्य महाराजस्य पत्नी मम पूज्याऽसि, अद्याहं पुण्यभाक्। तस्करेभ्यो रक्षणाद् वयं त्वयोपकारक्रीताः स्मः, तद् ममावासं पवित्रं कुरु, त्वयि यत्क्रियते तत्स्तोकमेव'। एवं सार्थवाह उक्त्वा निजपटगृहे नीत्वा देवतामिवाऽऽराधयन् तां दवदन्तीं विश्रामयामास। एतस्मिन् समयेऽखण्डधारं मेघो वर्षितुं लग्नः। स्थाने स्थाने प्रवहद्भिः प्रवाहैररण्यं जलाद्वैतमजायत, सर्वतोऽरण्ये वाराहीदोहददायी पङ्कोऽभवत्। त्रिरात्रमनवच्छिन्नोत्कटा च वृष्टिरभूत्। दवदन्ती तु पितुर्गृहे प्रासेव तत्र यथासुखमस्थात्। अथ मेघे वर्षे वर्षे स्थिते सा सार्थं हित्वा पुनरपि प्राग्वद् एकाकिनी ततः स्थानान्निर्ययौ। नलप्रवासदिनात् सा भीमरथपुत्री चतुर्थप्रभृतितपोलीना शनैः शनैर्मार्गमत्यगात्। अग्रे गच्छन्ती दवदन्ती जिह्वाज्वालाविकरालवदनं, भुजङ्गमिव दारुणं, तालप्रमाणचरणधारिणम्, अमावास्याऽन्धकारकृष्णकायं कज्जलनिर्मितमिव!, शार्दूलचर्मसंव्यानसंयुक्तं भीषणेभ्योऽपि महाभीषणं यमपुत्रमिवैकं राक्षसमद्राक्षीत्। स राक्षसस्तामुवाच—'अरे मानुषि! बुभुक्षाक्षामकुक्षेर्मम चिरकालाद् भक्ष्यमुपस्थितम्, तेन त्वां त्वरितं भक्षयिष्यामि'। इति श्रुत्वा भीतापि सा धैर्यमालम्ब्याऽवदत्—रे रे राक्षस!

मदीयं वचनं श्रुत्वा यथारुचि त्वमाचरेः । परमाऽर्हद्धर्मवासितमनसो मम मरणभीतिर्नास्ति, परं त्वं परस्त्रियं मा स्पृश, यदि स्प्रक्ष्यसि तदा न नन्दिष्यसि, मनसि क्षणं विमृश'। इति तस्या धैर्यवचनं निशम्य हृष्टो राक्षस उवाच–'हे भद्रे ! तुष्टोऽस्मि, तव किमुपकारं करोमि ?'। साऽप्यूचे–'भद्र ! यदि तुष्टोऽसि तर्हि पृच्छामि–कदा मम पत्या समं सङ्गमः ?'। सोऽप्यवधिज्ञानेन ज्ञात्वा तस्यै कथयामास–'हे यशस्विनि ! प्रवासदिवसाद् द्वादशवर्षानन्तरं तव पत्या सह संयोगो भावी । पितृगृहे स्थितायास्तव स मिलिष्यतीति प्रत्ययकारणं मे वचनं मनसि धार्यम् । सम्प्रति चित्तादुद्वेगं मुञ्च । यदि मां कथयेस्तदा त्वां तातगृहे नयनार्धनिमेषेण नयामि, मार्गे आयासं मा यासीः'। तदा सा कथयामास–'अहं नलागमनकथनात् कृतकृत्याऽस्मि, परं परपुरुषेण समं न यामि, तुभ्यं स्वस्ति भवतु, व्रज'। ततः स निजं ज्योतिर्मयं रूपं दर्शयित्वा गगनतले विद्युत्पुञ्ज इव क्षणादुत्पपात । अथ भर्तुर्द्वादशवर्षीं प्रवासं ज्ञात्वा दवदन्ती सतीत्वपादपपल्लवान् एवमभिग्रहांश्चकार–'यावन्नलो न मिलिष्यति तावद् रक्तवस्त्र–ताम्बूला-ऽऽभरण-विलेपनविकृतीर्नाऽऽदास्ये'। अथैकस्य पर्वतस्य कन्दरां प्राप्य सा वर्षाकालातिक्रमणाय तत्रैवाऽवस्थितिमकरोत् । श्रीशान्तिनाथस्य मृत्तिकामयं बिम्बं स्वयं निर्माय गुहाकोणे स्थापयामास । तद्बिम्बं त्रिसन्ध्यं भक्त्या स्वयं कुसुमानि समानीय सा पूजयामास । चतुर्थप्रभृतितपःप्रान्ते सा परमार्हती बीजरहितैर्विहितैः प्रासुकफलैः पारणमकृत। अथ सार्थवाहो नलप्रियाम् अपश्यन् तस्या अनुपदं 'तस्याः कल्याणं भवतु' इति चिन्त-

यन्नागात्। तस्यां गुहायामागतः सन् दवदन्तीमर्हद्विम्बं पूजयन्तीं ददर्श। तां क्षेमवतीं दृष्ट्वा सार्थवाहो विस्मयविकस्वरनयनो नत्वा पृथिव्यामुपाविशत्। साऽप्यर्हत्पूजां सम्पूर्णीकृत्य स्वागतप्रश्नपूर्वकं मधुरगिरा तं वार्तयामास। तदा तच्छब्दमाकर्ण्याऽदूरवासिनः केऽपि तापसास्तत्र त्वरितमाजग्मुः, उत्कर्णाश्च मृगा इव तस्थुः। ततश्च मेघो महतीभिर्धाराभिर्वर्षितुं लग्नः। भल्लीभिरिव जलधाराभिराहन्यमानास्ते तापसाः प्रोचिरे–'सम्प्रति क गच्छामः ?, इदं जलं क वञ्च्यताम् ?'। तदा तान् जलभयद्रुतान् दृष्ट्वा सा सती 'मा भैष्ट मा भैष्ट' इत्युत्कृष्टवाचमुवाच। तेषां च परिधौ कुण्डं कृत्वा सा सतीधुरन्धरा पुनरपीति मनोहरवाचं कथयामास–'यद्यहं सत्यस्मि, यदि परमार्हत्यस्मि, यदि च सरलचित्ताऽस्मि तदस्मात्कुण्डादन्यत्र मेघो वर्षतु'। तदा तस्याः सतीत्वमाहात्म्यात् तत्र कुण्डे धृतच्छत्रे इव जललवलेशोऽपि नाऽपतत्। तं चमत्कारं दृष्ट्वा सर्वेऽप्यचिन्तयन्–'काऽप्येषा ननु देवी, मानुष्यास्तु नेदृशं रूपं न चेदृशी शक्तिर्भवेत्'। ततस्तां वसन्तसार्थवाहः पप्रच्छ–'हे भद्रे ! कथय, त्वयाऽयं को देवः पूज्यते ?'। सा सार्थवाहाय जगाद–'अयं देवोऽर्हन् त्रैलोक्यनाथः परमेश्वरो वाञ्छितार्थदायी। अमुं देवमाराधयन्त्यहमत्र निर्भया तिष्ठामि, एतत्प्रभावाद् व्याघ्रादयो मम नो पराभवन्ति'। इत्याद्यर्हत्स्वरूपं कथयित्वा, अहिंसामूलमार्हतं धर्मं सार्थवाहाय सा कथयामास। तं धर्मं च वसन्तोऽङ्गीचकार, 'धर्मकामधेनुर्मया भाग्येन दृष्टाऽसि' इत्यवदच्च। ते तापसा अपि तद्वचनेन जिनधर्मं निःसन्देहं प्रत्यपद्यन्त, निजं तापसधर्मं चाऽनिन्दन्। वसन्तसार्थेशस्तत्रैव पुरम्

अवासयत् । अत्र तापसपञ्चशती प्रबुद्धेति हेतुना तत्पुरं 'तापसपुरम्' इति सर्वत्र प्रसिद्धमभूत् । तत्र च पुरे स्वार्थज्ञः सार्थवाहः स्वकीयं धनं कृतार्थयन् श्रीशान्तिनाथस्य चैत्यमकारयत् । स सार्थवाहस्ते समस्तास्तापसास्तत्पुरलोकाश्च सर्वेऽप्यर्हद्धर्मतत्पराः कियन्तं समयं गमयामासुः ।

"अन्यदा रात्रौ नलप्रिया पर्वतशिखरे उद्योतं ददर्श, गगनादागच्छत उत्पततश्च सुरा-ऽसुर-विद्याधरानपि व्यलोकयत् । तेषां जयजयशब्दैः प्रबुद्धास्ते वणिजस्तापसाश्च विस्मयविलोकनवाञ्छया तां सतीमग्रे कृत्वा तस्मिन् पर्वते आरोहणं चक्रुः । तत्रोत्पन्नकेवलज्ञानस्य सिंहकेसरिसाधोः केवलमहिमानं सुरैः प्रारब्धमपश्यन् । द्वादशावर्तपूर्वकं तं महामुनिं वन्दित्वा तच्चरणसमीपे सतीसहितास्ते सर्वेऽपि न्यपदन् । तदा तस्य साधोर्गुरुर्यशोभद्रसूरिस्तत्राऽऽगात्, तं स्वशिष्यमुत्पन्नकेवलज्ञानं ज्ञात्वा वन्दित्वा चाऽग्रे न्यपदत् । अथ करुणारससागरः सिंहकेसरिकेवल्यपि धर्मदेशनां विदधे–'भो भव्यजनाः ! संसारे परिभ्रमतां प्राणिनां मानुष्यं दुर्लभं, तत् प्राप्य सफलं कर्तव्यम् । मनुष्यभवस्य फलं जीवदयामूलं जिनधर्ममङ्गीकुर्वताम्'। कर्णामृतसदृशमेवं धर्ममाख्याय स महर्षिस्तापसकुलपतिसंशयनिराकरणायोचे–'भोस्तापसाधिपते ! अनया दवदन्त्या यस्तव धर्मः कथितः स तथैव ज्ञेयो, नान्यथेयं जिनधर्मरता महासती कथयति । अनया स्वसतीत्वमाहात्म्यतः कुण्डरेखा कृता, वर्षाजलपराभवो भवतां नाभवत्, तेनेयं दृष्टप्रत्यया महानुभावाऽस्ति । अस्याः सतीत्वेनाऽऽर्हतीत्वेन च सदाऽरण्येऽपि देवताः सान्निध्यकारिण्यः सन्ति, ततोऽस्या नोप-

द्रवाः पराभवितुं समर्थाः । प्राग् अस्य सार्थवाहस्य सार्थश्चौरेभ्योऽनया महासत्या हुङ्कारमात्रेण रक्षितोऽभवत्, अतः परं महान् कः प्रभावः ?'। एवं केवलिना वर्ण्यमानायां तस्यां, तत्र कश्चिदेको महर्द्धिकदेव आगात् । स केवलिनं वन्दित्वा दवदन्तीमूचे–"हे भद्रे! अमुष्मिन् तपोवनेऽहं कुलपतेः कर्परनामा शिष्यस्तपस्तेजोदुष्प्रेक्ष्योऽभवम् । पञ्चाग्निसाधकमपि मां ते तपोवनतापसा नाऽपूजयन्, वचसाऽपि च नाऽभ्यनन्दयन् । ततोऽहमभिमानधनस्तत्तपोवनं मुक्त्वा क्रोधरक्षसाऽऽविष्टस्त्वरितमन्यत्र गतवान् । निविडतिमिरायां रात्रौ व्रजन्नहं गिरिकन्दरायां पतितः । गिरिदन्तास्फालितमुखस्य मम सर्वेऽपि दन्ता जीर्णशुक्तिपुटवत्तदा सहस्रधा व्यशीर्यन्त । अहं सप्तरात्रं दन्तपतनव्यथातुरस्तथैवाऽस्थां, परं दुःस्वप्नस्येव मम वार्तामपि ते तापसा नो चक्रुः, प्रत्युत गृहात्सर्प इव तस्मात्स्थानान्मयि गते तेषामत्यन्तं सुखमभूत् । ततस्तेषामुपरि मम प्रदीपनवह्निसमानो दुःखानुबन्धकः क्रोधः प्रादुर्बभूव । क्रोधेन जाज्वल्यमानः पञ्चत्वं प्राप्याऽत्रैव तापसारण्येऽहं महापन्नगोऽभवम् । अन्यदाऽहं पतिवियोगदुःखिताया मार्गे व्रजन्त्यास्तव दशनायाऽधाविषम्, तदा त्वया मद्गतिरोधको नमस्कारः पठितः । मत्कर्णपतितैर्नमस्काराक्षरैस्तत्कालं केनाऽपि संदंशकेन[1] धृत इवाऽहमभिगन्तुं नाऽशक्नवम् । ततो हतशक्तिः पुनः कथमप्येकस्यां दर्यां प्राविशं, तत्र च स्थितो भेकादीन् जीवान् भक्षयन् अजीवम् । हे परमार्हति ! अन्यदा घने[2] वर्षति त्वया तापसा-

१ संदंशकः सर्पग्रहणाय काष्ठयन्त्रम्–भाषायां 'सांडसो'। २ मेघे ।

नामग्रे इमं धर्मं कथ्यमानमश्रौषम्–'यो जीवान् मारयति स संसारे सर्वदा मरुस्थल्यां पान्थवद् दुःखानि प्राप्नोति'। तच्छ्रुत्वाऽचिन्तयम्–'अहं सदापि जीवहिंसातत्परः सर्पोऽस्मि, ततो मम का गतिर्भविष्यति ?'। एवमूहापोहाभ्यां मया ज्ञातं यद्–'इमे तापसा मया क्वापि दृष्टाः'। एवं पुनः पुनरचिन्तयं तदा मे निर्मलं जातिस्मरणमुत्पन्नम्। ततः कल्यकृतं कार्यमिव पूर्वभवमस्मार्षं तावद् मम महद्वैराग्यमुत्पन्नम्, तेन च वैराग्येणाऽनशनमकार्षम्। ततो मृत्वा सौधर्मकल्पे सुरोऽभूवम्, सोऽहं कुसुमसमृद्धे विमाने कुसुमप्रभनामा देवोऽस्मि, त्वत्प्रसादात् सुरसुखानि भुञ्जानः कालं निर्गमयामि। यदि तव धर्मवचनं मत्कर्णे पतितं नाऽभविष्यत् तदा पापपङ्कमहावराहस्य मे का गतिरभविष्यत् ?। सम्प्रति अवधिज्ञानेनोपकारिणीं ज्ञात्वा त्वां द्रष्टुमहमागमम्, अतः परं तेऽहं धर्मपुत्रः"। एवं स्वस्वरूपं दवदन्त्या ज्ञापयित्वा, अथ स देवस्तान् तापसान् ग्रामागतबान्धवानिव बन्धुरगिरोवाच–'भोस्तापसाः ! मम पूर्वभवसत्कं तत्कोपाचरणमपराधं क्षमध्वं, प्रपन्नं च श्रावकधर्मं निधानवत्पालयत'। इत्युक्त्वा तं सर्पकायं गिरेः कन्दरादाकृष्य नन्दिवृक्षे चोल्लम्ब्य स सुरः पुनरपि तापसानुवाच–'यः कोऽपि जनः कोपं करोति स कोपफलेनेदृशो भुजङ्गो भवेद्, यथा प्रागहं कर्परनामा'। इति श्रुत्वा पूर्वमपि सम्यक्त्वधरः कुलपतिस्तदा भाग्योदयेन विशेषेण महद्वैराग्यं प्रतिपन्नवान्। ततः केवलिनं वन्दित्वा स तापसपतिर्व्रतं ययाचे। केवल्यूचे–'एष यशोभद्रसूरिर्मम गुरुस्तव व्रतं दास्यति'। ततो विस्मयमापन्नः कुलपतिस्तं केवलिमुनिमपृच्छत्–

'भगवन् ! त्वं प्रव्रज्यां कथं गृहीतवानसि ?' । केवल्याख्यत्—"कोशलापुर्यां नलनृपाऽनुजः कूबरनृपः, तस्याऽहं पुत्रः । सङ्गानगरीपतिः केसरी राजा स्वपुत्रीं बन्धुमतीं ममाऽयच्छत् । पितुराज्ञया तत्र गत्वा तामहं पर्यणैषं, नवपरिणीतां गृहीत्वा स्वपुरीं प्रत्यचालिषम् । मार्गे गच्छता मयाऽनेकशिष्यपरिवृतोऽयं गुरुर्दृष्टः, भक्त्या वन्दितः, कर्णामृतसमाना देशना च श्रुता । देशनान्ते मया पृष्टम्—'हे स्वामिन् ! मम कियदायुः ?' । तदा स उपयोगं दत्त्वा पञ्चैव दिनान्यवोचत् । आसन्नमरणं ज्ञात्वाऽहमतीवाऽभैषम्, तदा मां सूरिराह—'वत्स ! मा भैषीः, दीक्षां गृहाण । एकदिनदीक्षाऽप्यवश्यं स्वर्ग-शिवसुखदाऽस्ति' । ततोऽस्य गुरोः समीपेऽहं प्रव्रजितः, अस्याज्ञया चाऽहमिहागमम् । शुक्लध्यानस्थितश्च घातिकर्मक्षयात् कैवल्यसुखदं केवलज्ञानमासदम्" । इत्युक्त्वा योगनिरोधं कुर्वन् सिंहकेसरी केवली चत्वारि भवोपग्राहि-कर्माणि हत्वा परमपदमगात् । तस्य केवलिनः शरीरं पवित्रक्षेत्रे सुरैर्नीत्वाऽग्निसंस्कारपात्रीचक्रे । अथ स यथार्थनामा विमलमतिकुलपतिः श्रीयशोभद्रसूरिसमीपे दीक्षामग्रहीत् । दवदन्त्यपि तत्कालं तं महर्षिं बभाषे—'भगवन् ! ममापि मुक्तिमातरं दीक्षां देहि' । तदा यशोभद्रसूरिस्तामवदत्—'हे दवदन्ति ! अद्यापि तव नलेन सह भोगा भोक्तव्याः सन्ति, तेन हेतुना सम्प्रति व्रतं नाऽर्हसि' । अथ रात्रौ विभातायां गुरुः पर्वतादुत्तीर्य तं तापसपुरं पादपद्मैः पवित्रयामास । तत्र श्रीशान्तिनाथचैत्यं प्रतिष्ठाप्य, पौरलोकानां सम्य-क्त्वारोपणं चकार । मलिनाङ्गवस्त्रा धर्मध्यानलीना भिक्षुणीवत् सप्तवर्षी तत्र गुहायां नलप्रियाऽस्थात् ।

अन्यदैकः पान्थस्तस्याः कथयामास यद्—'हे दवदन्ति ! मयाऽमुकस्थानेऽद्य तव पतिर्दृष्टः' । सा तु तत्कालमेवं श्रुत्वा रोमाञ्चकञ्चुकिताऽभवत् । 'कोऽयम् आप्यायनां मम करोति ?' इति ज्ञातुं भीमरथसुता शब्दवेधिवाणवत् तच्छन्दमन्वधावत, परं गुहामध्याद् आकर्षणप्रतिभूरिव स तां गुहाया आकृष्य क्वचिदपि तिरोदधे । सा तं पान्थं न ददर्श, तां गुहामप्यत्यजत् [1], इत्युभयभ्रष्टा दैवयोगेन महारण्ये पतिता सा क्वचिदस्थात्, उपाविशत्, पृथिव्यां दुःखेन व्यलुठत्, भूयो भूयो विलापं रोदनं च चकार । 'अहं किं करोमि ?, क्व गच्छामि ?, इति विमृशन्ती तामेव गुहामादरेण यावद्गन्तुमारेभे तावत् सैकया राक्षस्या दृष्टा । तया प्रसारितवदनया 'खादिष्यामि' इत्यभाष्यत, तदा सती भैम्यवोचत्–'हे राक्षसि ! यदि मम मनसि नलो, नान्यो नरस्तदा त्वं सतीत्वप्रभावेण हताशा भव' । इति वचनं निशम्य सा राक्षसी शीलप्रभावेण तच्चिखादिषामत्यजत् [2], तां च प्रणम्य स्वप्नागतेव सा राक्षसी क्षणादपि अदर्शीबभूव । पुनरपि सा सती नलवल्लभाऽग्रे यान्ती पानीयाकारतरङ्गीभूतवालुकाकणामेकां गिरिनदीं जलरहितां ददर्श, ततश्च तृषाक्रान्ता सत्यदोऽवदत्–'यदि मम मानसं सम्यग्दर्शनेनाऽधिवासितं स्यात्तदाऽत्र गङ्गानिर्मलं जलमस्तु' इत्युक्त्वा स्वपार्ष्णिप्रहारेण भूपीठं जघान । तदा तत्कालमिन्द्रजालनदीव पूर्णपानीया नद्यभवत् । तदा च दवदन्ती तज्जलं हस्तिनीव यथारुचि पपौ । ततोऽपि गच्छन्ती सा परिश्रमाधिक्यमुपेयुषी एकस्य वटस्याऽधो

१ प्रीणनम्–वर्द्धापनाम् । २ खादितुमिच्छा चिखादिषा ।

वटवासिदेवीवोपाविशत्। अथ सार्थादागताः पान्थास्तां तथास्थामद्राक्षुः, ऊचुश्च–'हे भद्रे ! त्वं काऽसि ?, अस्माकं तु देवीव प्रतिभासि'। तदा सोचे–'अहं मानुष्यस्मि, सार्थभ्रष्टाऽरण्ये वसामि, तापसपुरे च यियासुः, तन्मां मार्गे नियुग्ध्वम्'। तेऽवोचन्–'यत्र सूर्योऽस्तं याति तां दिशं त्वमाश्रयेः, तव मार्गं दर्शयितुं वयं गन्तुमुत्सुका नेश्महे। जलं गृहीत्वा स्वसार्थे यास्यामः, स चेतः समीपतरवर्त्यस्ति, यदि तत्रैषि तदा त्वां क्वाऽपि नगरे नेष्यामः'। इति श्रुत्वा हृष्टा सा तं सार्थं तैः सममगात्। तत्र करुणापरो धनदेवसार्थेशस्तामपृच्छत्–'त्वं काऽसि ?, कुतश्चात्राऽऽगाः ?'। तदा सोचे–'अहं वणिक्पुत्री भर्त्रा सह पितुर्गृहे चलिताऽभूवम्, परं निशि सुप्ता तेन मार्गे त्यक्ताऽस्मि। सम्प्रति त्वदीयैः पुरुषैरत्र सहोदरैरिवाऽहमानीता, तन्मां हे महाभाग ! कुत्रचिद् वसति स्थानके नय'। सार्थेशो जगाद–'हे वत्से ! अहमचलपुरे यास्यामि, त्वमप्यागच्छ, त्वां हि पुष्पवन्नेष्यामि'। इत्युक्त्वा तां स्वसुतामिव धर्मी सार्थपतिः सुन्दरयानेऽधिरोप्य त्वरितं गन्तुं प्रास्थित। अथैकस्मिन् गिरिनिकुञ्जे निर्झरजलसंयुक्ते सार्थेशः सार्थमावासयत्। तत्र सा सती निशि सुखसुप्ता केनचित्सार्थवर्तिपुरुषेण नमस्कारं महामन्त्रं पठ्यमानमशृणोत्। तदा सा सार्थवाहमुवाच–'नमस्कारं पठन्नसौ मम साधर्मिकः, तदमुं त्वदाज्ञयाऽहं दिदृक्षे'। सार्थेशोऽपि पितेव तस्या वाञ्छां पूरयितुं तां गृहीत्वा तत्साधर्मिकसमीपं ययौ। बान्धवमिव तं श्राद्धं चैत्यवन्दनां कुर्वाणं पटगृहस्थम् अङ्गिनं शममिव सा ददर्श। तत्र च तन्महाश्राद्धानुमोदनाश्रुपूर्णलोचना आचैत्यवन्दनमस्थात्।

तेन च श्राद्धेन वन्द्यमानं कृष्णरत्नवर्णं पटालिखितमार्हतबिम्बं ददर्श, तच्च बिम्बं स्वयमपि ववन्दे, चैत्यवन्दनप्रान्ते बहुमानपूर्वकं सा पप्रच्छ—'भ्रातः! कस्य जिनस्येदं बिम्बम्?'। तदा स श्रावको जगाद—"हे धर्मशीले! इदं बिम्बं भविष्यत एकोनविंशस्य तीर्थङ्करस्य मल्लिनाथस्य ज्ञेयम्। अहं भविष्यतोऽर्हतो बिम्बं यत्कारणात् पूजयामि तदद्य हे कल्याणि! मम कल्याणकारणं शृणु—'काञ्चीपुर्यामहं वणिक्। तत्राऽन्यदा ज्ञानवान् धर्मगुप्तो मुनिरागात्, स रतिवल्लभवनखण्डे समवासार्षीत्। तं वन्दित्वाऽहमपृच्छम्—'हे भगवन्! कस्य तीर्थे मम मुक्तिर्भाविनी?'। तदा स आख्यत्—'मल्लिनाथस्य तीर्थे सुरलोकच्युतस्त्वं मिथिलानगर्यां प्रसन्नचन्द्रो राजा भविष्यसि। एकोनविंशतीर्थंकरस्य मल्लिनाथस्य दर्शनं प्राप्य प्राप्तकेवलज्ञानस्त्वं मुक्तिं गमिष्यसि'। हे धर्मज्ञे! तत्प्रभृति मल्लिनाथेऽहमुत्पन्नमहाभक्तिकस्तद्बिम्बं पटे आलेख्य पूजयामि"। इति स्ववृत्तान्तं कथयित्वा स श्रावकस्तां पप्रच्छ—'हे पुण्यवति! धर्मबन्धोर्ममाख्याहि—त्वं काऽसि?'। तदा तस्मै धनदेवसार्थवाहस्तया कथितं सर्वं पतिवियोगादिकं वृत्तान्तम् उदश्रुदृग् आख्यत्। तच्छ्रुत्वा स श्रावकोऽपि बाष्पायितलोचनोऽवदत्—'महानुभावे! मा शोचीः, ईदृशं दुःखकारणं तव कर्मोदितम्। परमयं सार्थवाहस्तव पिता, अहं तव भ्राता, तदाशु सुखं भविष्यत्येव'। अथ प्रभाते सार्थवाहोऽचलपुरनगरं प्राप। तत्र तां सतीं स सार्थेशो मुमोच, स्वयं त्वन्यतोऽगात्। अथ सा तृषिता नगरद्वारवाप्यां प्रविवेश, तदा तत्र पानीयहारिणीभिर्मूर्ता जलदेवतेव लक्षिता। यावत् सा वाप्यां प्रविष्टा

तावत्तस्या वामपादो गोधया जलसीमनि जग्रसे, यतो दुःखिनां दुःखं तन्मित्रभावादिवागच्छति । साऽपि तदा नमस्कारत्रितयमपाठीत्, तदा तत्प्रभावेण तस्याः पादो गोधया मुक्तः । ततो मुख-चरण-हस्तादि प्रक्षाल्य, तज्जलं च पीत्वा, सा मन्दं मन्दं मरालीव वाप्या वहिर्निरगात् । श्रान्ता वापीतटतरुतले निषण्णा शीलरत्नकरण्डिका सा दृशाऽचलपुरं पावनीचकार । तत्र ऋतुपर्णनृपः, तस्य चन्द्रयशाः प्रिया, तस्या दास्यो मस्तकन्यस्तकनकघटाः परस्परं हास्यतत्परा जलभरणाय तस्यां वाप्यामाययुः । तास्तां प्राप्तदुर्दशामपि देवीमिव ददृशुः, यतः कर्दममग्नाऽपि कमलिनी कमलिन्येव । तस्या रूपं पश्यन्त्यस्ताः सविस्मया वाप्यां मन्दं मन्दं प्रवेशं चक्रुः, मन्दं मन्दं च वहिर्निर्ययुः । गत्वा च तां तथारूपवतीं स्वस्वामिन्यै कथयामासुः । चन्द्रयशा अपि ताः प्रत्यूचे—'तामिहानयत, मम सुतायाश्चन्द्रवत्याः सा भगिनीव भविष्यति' । ततस्ता द्रुतं तस्मिन् वापीतटे आययुः, तां च पुराऽभिमुखां लक्ष्मीमिव ददृशुः । ऊचुश्च—"हे सुभगे ! अमुष्मिन्नगरे ऋतुपर्णनृपस्य राज्ञी चन्द्रयशास्त्वां गौरवादाकारयति, कथयति च—'त्वं चन्द्रवतीव मम पुत्री' । भद्रे! तदेहि, दुःखेभ्यो जलाञ्जलिं देहि । अत्र त्वं शून्यचित्ता तिष्ठन्ती दुरात्मभिर्व्यन्तरादिभिश्छलं प्राप्याऽऽविष्टा सती अनर्थमवाप्स्यसि" । एवं चन्द्रयशोवचनैरार्द्रमानसा पुत्रीत्वस्नेहक्रीतेव सा ततोऽचालीत् । 'स्वामिन्या धर्मसुता त्वमस्माकमपि स्वामिन्यसि' इति ताभिर्विनयवक्त्रीभिः सा नृपगृहेऽनीयत । 'चन्द्रयशा मम मातृष्वसा' इति दवदन्ती न विवेद । चन्द्रयशास्तु 'दवदन्ती मम जामेयी

अस्ति' इति विवेद, परं बाल्यदृष्टां तां नोपालक्षयत्। तथापि राज्ञी तां दूरादपि पुत्रीस्नेहेन ददर्श, यत इष्टा-ऽनिष्टनिर्णयेऽन्तःकरणं प्रमाणम्। ततश्चन्द्रयशसा नलप्रियाऽतीवालिङ्गिता, अश्रूणि वर्षन्ती दवदन्ती प्रीतिक्रीता राज्ञ्याः पादपद्मौ अवन्दत। चन्द्रयशसा पृष्टा–'त्वं काऽसि ?'। तस्या अग्रेऽपि सार्थवाहाय यत्पुरा कथितं तत्सर्वं सा जगाद। ततो दवदन्तीं चन्द्रयशा अभाषत–'हे कल्याणि! मम गृहे चन्द्रवतीव सुखेन तिष्ठ'। अन्यदा देवी चन्द्रयशाश्चन्द्रवतीमूचे–'मम जामेय्या दवदन्त्याः सदृशीयं तव भगिनी, परं तस्यास्तु एवंविधमागमनं क्वचिन्न सम्भाव्यते। सा ह्यस्मत्स्वामिनलनृपप्रियाऽस्ति। स नलस्तु इतश्चतुश्चत्वारिंशदधिकशतयोजनदूरायां कोशलापुर्यां राज्यं करोति, अतस्तस्याः कथमत्रागमनम् ?, ईदृशी दशा च कुतः ?'। सा चन्द्रयशा नगराद्बहिर्दीना-ऽनाथादिभ्यो दानं ददौ। तामन्येद्युर्दवदन्ती जगाद–'हे मातः! अत्राहं दानं ददामि, यदि कदाचिद् मम पतिर्याचकवेषेणागच्छेत्'। तदा चन्द्रयशसा-ऽनुज्ञाता दवदन्ती तत्प्रभृति पत्याशया दानं ददौ। प्रतिदिनं दानार्थिनः प्रत्येकं साऽपृच्छत्–'ईदृग्रूपः पुमान् कोऽपि किं युष्माभिर्दृष्टः ?'। अन्यदा दानशालायां स्थिता सा वाद्यमानाग्रकुवाद्यम् एकं चौरं वध्यभूम्यामारक्षैर्बद्धा नीयमानं ददर्श। तदा तानारक्षानपृच्छत्–'अमुना किमपराद्धं यदेष वधस्थाने भवद्भिर्नीयते ?'। तेऽप्यवोचन्–'एष चौरश्चन्द्रवतीदेव्या रत्नकरण्डं जह्रे, तेन कर्मणाऽसौ वध्यः'। चौरो दवदन्तीं नत्वोचे—'देवि! त्वयाऽहं दृष्टोऽस्मि, अतः कथं मरणं प्राप्स्यामि ?; त्वं मे शरणं भव'। तदा

भैमी तानारक्षान् आगमय्य चौरं जगाद–'भो भो! मा भैषीः, तव जीवितव्येन कुशलं भविष्यति' । इत्युक्त्वा दवदन्ती कथयितुं लग्ना–'यद्यहं सत्यस्मि तदाऽस्य वन्धनानि परितस्त्रुट्यन्तु' इति कथयित्वा भृङ्गारजलेन च्छटात्रयं चौराय ददौ, तत्कालं वन्धनानि परितस्तुत्रुटुः । अथ कलकले उत्थिते 'किमेतद् ?' इति चिन्तयन् ऋतुपर्णनृपस्तत्र सपरिवार आजगाम । विस्मयविकस्वरलोचनश्च दवदन्तीमवदत्–'हे पुत्रि! सर्वत्राऽयं राजधर्मो यद्दुष्टनिग्रहः शिष्टपालनं च । राजा पृथ्व्याः करं गृह्णन् तां चौराद्युपद्रवाद् रक्षेत्, अन्यथा स चौरादीनां पापेन स्वयं लिप्येत । तद् यद्यमुं रत्नतस्करमहं न निगृह्णामि तदा परधनाऽपहरणाय सर्वोऽपि लोको निर्भयो यत्नवान् स्यात्' । ततो दवदन्त्यूचे—'तात ! मयि पश्यन्त्यां यद्येष प्राणी मार्येत तदा मम श्राविकायाः कृपालुता कीदृशी ?, तेन कारणेनाऽस्यापराधः क्षम्यताम् । एष मम शरणाश्रितः, अस्याऽऽर्त्तिर्मय्यपि दुष्टरोग इव सङ्क्रान्ताऽस्ति' । एवं तस्या महासत्या अत्याग्रहाद् ऋतुपर्णनृपस्तं चौरं मुमोच । मुक्तमात्रश्चौरः 'त्वं मे माता' इति दवदन्तीं भूतलरजसा स्वललाटं तिलकयन् प्रतिपेदे । तां प्राणदानोपकारामहर्निशम् अविस्मरन् चौरो दिने दिने प्रणामं चक्रे । अन्यदा नलप्रिया तं पप्रच्छ–'त्वं कोऽसि ?, कुत आगतोऽसि ?, सर्वं स्ववृत्तान्तमपशङ्कं कथय' । तदा स आख्यत्–"तापसपुरे महर्द्धिकस्य वसन्तसार्थवाहस्य पिङ्गलनामाऽहं दासः । व्यसनैः पराभूतेन मया तस्यैव गृहे खात्रं खनित्वा कोशसारमग्राहि । लोप्त्रकरश्चाऽहं प्राणत्राणतत्परो नष्टो मार्गे लुण्टाकैर्लुण्टितः, यतो

दुष्टानां कियत्कल्याणं भवेत् ?। अथाऽत्रागत्य ऋतुपर्णनृपमहम् असेविषि, यतः को मनस्वी सेवां कुर्यात् ?, अथ कुर्याच्चेत् तर्हि भूपतेः। ततो राजमन्दिरे सञ्चरता मयाऽधर्मबुद्धिना चन्द्रवतीदेव्या रत्नकरण्डो दृष्टः। तं रत्नकरण्डं दृष्ट्वा मे मनश्चलितम्। आचरणमुत्तरीयं कृत्वा हृत्वा च ततो निरगाम्। तत ऋतुपर्णराजेन कैश्चिच्चौरेङ्गितैर्लक्षितोऽहमारक्षेभ्यो वधाय दत्तः। तैश्च वध्यभूमौ नीयमानोऽहं हे महासति ! त्वामद्राक्षम्। दूरादपि तव शरणं मया कृतं, त्वया च वध्यत्वमागतश्छाग इव मोचितोऽस्मि। अन्यच्च, स्वामिनि ! तापसपुरात् त्वयि गतायां विन्ध्याचलवियोगी गज इव वसन्तसार्थवाहो भोजनं जहौ, सप्तरात्रमुपोषितश्च यशोभद्रसूरिणा प्रतिबोधितोऽष्टमे दिने बुभुजे। अन्यदा महामूल्यं प्राभृतकं गृहीत्वा वसन्तः कूबरनृपं द्रष्टुं जगाम। तेन प्राभृतकेन तुष्टो राजा कूबरस्तस्मै तापसपुरराज्यं छत्र-चामरसहितं ददौ, तं च सार्थेशं सामन्तपदे कृत्वा तस्य 'वसन्तश्रीशेखर' इति नामान्तरं राजा चक्रे। पश्चाद् वसन्तश्रीशेखरो राज्ञा विसृष्टः सन् वाद्यमानया भम्भया तापसपुरे आगात्, राज्यं चाऽपालयत्"। इति तन्मुखान्निशम्य हृष्टा दवदन्ती तं चौरमूचे-'वत्स ! त्वया पूर्वं दुष्कर्म कृतम्, अधुना प्रव्रज्यां गृहीत्वा दुष्कर्म क्षिप'। सोऽपि 'मातुरादेशः प्रमाणम्' इत्युवाच। तदा तत्र साधुद्वितयमागतम्, दवदन्त्या दोषरहिताहारेण भक्त्या प्रत्यलाभि। ततस्तौ साधू प्रति सा सती जगाद-'हे भगवन्तौ ! अयं पुमान्

यदि योग्यस्तदेतस्य व्रतदानं दत्त्वा प्रसीदतम्'। ताभ्यां 'योग्योऽयम्' इति कथिते पिङ्गलो दीक्षामयाचत। ततो देवभवने गत्वा स शीघ्रं प्रव्राजितः।

"अथान्यदा राजा भीमरथोऽश्रौषीद् यद्—'लघुभ्रात्रा कूवरेण द्यूते हारितराज्यलक्ष्मीर्नलः प्रवासितः। स दवदन्तीं गृहीत्वा महाटवीं प्रविवेश। न ज्ञायते क्व गतः?, किं जीवति अथवा मृतः?'। राज्ञी पुष्पदन्त्यपि तद् राज्ञो मुखाच्छ्रुत्वाऽतीवाऽरुदत्, यतो न स्त्रीणां दुःखे आगते लोचनजलं दूरे, समीपवर्त्येव। ततश्च हरिमित्रनामा स्वाम्यादेशपटू राजबटुर्नल-दवदन्तीशुद्धिहेतवे भीमरथनृपेण न्ययोज्यत। स च नलं स्वस्वामिसुतां दवदन्तीं च सर्वत्र शोधयन् अचलपुरे ययौ, नृपसभायां च प्राविक्षत्। तं हरिमित्रं नृपस्य पुरत उपविष्टं चन्द्रयशाः पप्रच्छ—'हे भद्र! पुष्पदन्त्यास्तदीयजनस्य च क्षेममस्ति?'। स आख्यत्—'देवि! पुष्पदन्त्या देव्याः कुशलं सदोदितमेवाऽस्ति, परं नलस्य दवदन्त्याश्च कुशलं चिन्त्यम्'। तदा चन्द्रयशा जगाद—'भो राजबटो! किं ब्रवीषि?'। तदानीं स नल-दवदन्त्योर्द्यूतादारभ्याऽत्यन्तदुःखदां सकलां कथां कथयामास। ततश्चन्द्रयशसि रुदत्यां दुःखवार्तादुःखितः सर्वो जनोऽपि रुरोद। राज्ञीसंयुक्तं सकलं जनं दुःखातुरं प्रेक्ष्य बुभुक्षाक्षामकुक्षिको बटुर्दानशालां ययौ। तत्र भोजनार्थमुपविष्टः स दानशालाधिकारिणीं स्वस्वामिसुतां दवदन्तीमुपलक्षयति स्म। ततो रोमाञ्चमुद्वहन् दवदन्त्याः पादौ ववन्दे, विस्मृतबुभुक्षश्च विकसितनयनस्तां जगाद—'देवि! तव केयमवस्था?, अद्य भाग्येन जीवन्ती

दृष्टा, सम्प्रति सर्वेभ्यः स्वस्त्यभवत्'। इत्युक्त्वा स त्वरितं चन्द्रयशोदेव्यै वर्धापनिकां ददौ यत्–'तव दानशालायां दवदन्त्यस्ति'। तच्छ्रुत्वा चन्द्रयशा अतिवेगेन दानशालायां गत्वा रोमाञ्चकञ्चुकिता दवदन्तीम् आलिलिङ्ग, यथा राजहंसी कमलिनीमालिङ्गति। ऊचे च–"हे वत्से! मां धिग् धिग् ययाऽद्वितीयैः सामुद्रिकलक्षणैरन्विताऽपि त्वं नोपलक्षिता। त्वया कथमात्मगोपनं कृत्वाऽहं वञ्चिता ?, अनघे! यदि दैवयोगाद्दुर्दशाऽऽगच्छेत् तथापि मातृकुले का लज्जा ?। पुत्रि! किं त्वया नलो मुक्तोऽथवा तेन त्वं मुक्ता ?। नूनं तेन त्वं मुक्ताऽसि, त्वं तु सती तं न मुञ्चेः। यदि त्वयापि दुर्दशापतितो नलो मुच्येत तदा निश्चितं पश्चिमदिशि दिवाकर उदयेत। रे नल! इमां कथमत्याक्षीः ?, मम समीपे कथं नाऽमुञ्चः ?, किं तवेदं कुलोचितं यद् महासती दयिता एकाकिनी त्यक्ता ?। हे वत्से! तवाऽहं दुःखं गृह्णामि, ममाऽपराधं सहस्व यत्त्वं नोपलक्षिता। हे सति! तमःसर्पगरुडसमानस्तव तिलको यो भाले सहजोद्भवः स क ?"। इति कथयित्वा स्ववदननिष्ठीवनेन तस्या भालममार्जयत्। तत्कालमभ्युत्तीर्णः सुवर्णपिण्ड इव मेघमुक्तश्च सूर्य इव तस्यास्तिलकोऽत्यन्तं दिद्युते। ततश्चन्द्रयशा देवी स्वपाणिभ्यां दवदन्तीमस्नपयत्। ततो मातृष्वस्राऽर्पितानि अतिमनोज्ञानि धवलानि वस्त्राणि दवदन्ती परिदधे। प्रीता हर्षसलिलदीर्घिका चन्द्रयशा देवी दवदन्तीं करेण गृहीत्वा नृपान्तिके निषसाद। तदा च सूर्योऽस्तं ययौ, सूच्याऽप्यभेद्येन तमसा सर्वमाकाशं व्याप्तम्; परं नृपसभायां तत्तमो दवदन्तीतिलकतेजोभिर्वेत्रपाणिभि-

रिव स्खलितं न प्रविवेश । नृपतिश्चन्द्रयशोदेवीमुवाच–'सूर्योऽस्तमियाय, इह दीपो नास्ति, वह्निरपि नास्ति, तथापि दिवसे इवोद्द्योत एष किम् ?'। सोवाच—'स्वामिन्! एतस्या दवदन्त्या जन्मना सहोत्पन्नस्तिलकस्तेजःपुञ्ज इवाऽस्ति, तस्य माहात्म्येनैष उद्द्योतः सूर्य-दीपक-रत्नानि विनापि दृश्यते'। तदा कौतुकेन राजा स्वकरेण तत्तिलकं प्यधात् तावद् गिरिगुहासदृशा सभा त्वरितं जाता। ततः करमपसार्य प्रीत्या तां राज्यभ्रंशादिकथां पप्रच्छ। दवदन्त्यपि अधोमुखी रुदती नल-कूबरद्यूतादारभ्य सर्ववृत्तान्तं कथयामास। राजा स्वोत्तरीयवस्त्रेण तस्याश्चक्षुषी संमार्ज्योवाच—'सुते ! त्वं मा रोदीः, विधेः कोऽपि बलवान्नास्ति'।

"अत्रान्तरे गगनात् कश्चिद्देव उत्तीर्य तत्र पर्षद्यागात्। रचिताञ्जलिश्च भीमरथपुत्रीमुवाच–"मातः! पिङ्गलकचौरोऽहं तवाज्ञया तदा प्रव्रज्य, विहरन् कदापि तापसपुरेऽगाम्, श्मशानमध्ये च प्रतिमयाऽस्थाम्। अथ चिताया उत्थितो दवानलो दूरं प्रासरत्, तेन दवानलेन दह्यमानोऽहं धर्मध्यानतत्परो मृत्वा पिङ्गलनामा देवोऽभूवम्। ततोऽवधिज्ञानेनाऽज्ञासिषं यत्–'त्वया वधाद् रक्षितः प्रव्रज्यां ग्राहितः, तत्प्रभावात् सुरसम्पद्भोक्ताऽहमभवम्'। हे स्वामिनि! मां महापापिष्ठं तदा त्वं यद्युपैक्षिष्यथास्तदाऽप्राप्तधर्मो मृत्वा नरकेऽयास्यम्। हे दवदन्ति ! त्वत्प्रसादेन देवसमृद्धिमासदं तेन कारणेन त्वां द्रष्टुमागच्छम्। त्वं चिरकालं विजयस्व"। इत्युक्त्वा सप्तकोटिकनकघनं वर्षयित्वा स सुरस्तिरोऽधात्। इत्थं साक्षाज्जिनधर्मफलं प्रेक्ष्य ऋतुपर्णनृपोऽपि आर्हतधर्मं प्रपेदे। अथ सम्प्राप्ताऽवसरो हरिमित्रो नृपमूचे–

'देव ! दवदन्तीं पितुर्गृहे गमनायाऽऽदिश, एतस्या विरहस्तस्य चिराद्वर्तते'। चन्द्रयशसाऽप्येवमुक्तो राजा 'एवं भवतु' इति कथयित्वा दवदन्तीं कुण्डिनपुरं प्रति सेनया सममादिशत्। तामागच्छन्तीं श्रुत्वा राजा भीमरथोऽतीवस्नेहेनाऽभ्यागात् । पितरि दृष्टमात्रेऽपि चरणचारिणी दवदन्ती विकस्वरनयना हर्षेण त्वरितं धावित्वा तत्पादपद्मयोरपतत्। तयोः पितृ-पुत्र्योश्चिरान्मिलितयोः पतद्भिर्नयनसलिलैर्भूमिर्भूरिकर्दमाऽभूत्। निजसुतां समायातां ज्ञात्वा पुष्पदन्ती राज्ञी सहसात्कारं स्नेहरोमाञ्चकञ्चुकिताऽऽलिङ्गति स्म, यथा जान्हवी यमुनां मिलति। तद्गले लगित्वा नलवल्लभा मुक्तकण्ठमरोदीत्; यत इष्टे दृष्टे प्राणिनां दुःखं नवमिव भवति। ततस्तत्क्षणं जलेन मुखाम्भोजानि प्रक्षाल्य ते परस्परं दुःखप्रकटनपूर्वं वार्तयामासुः। पुष्पदन्ती दवदन्तीं स्वोत्सङ्गे आरोप्य जगाद्—'हे आयुष्मति ! त्वं भाग्येन दृष्टाऽसि, अद्याप्यस्माकं खलु भाग्यं जागर्ति। त्वं सुखेनाऽस्मद्गृहे कालं गमयन्ती चिरादपि पतिं द्रक्ष्यसि, यतो जीवन् प्राणी भद्रशतानि पश्यति'। अथ हरिमित्रराजबटवे राजा भीमरथस्तुष्टो ग्रामपञ्चशतीं दत्तवान्, ऊचे च—'नलागमे तुभ्यं राज्यार्धमपि दास्ये'। ततः पुरे गत्वा राजा महान्तं दवदन्त्यागमनोत्सवं चक्रे, सप्त दिनानि देवार्चां गुर्वर्चां च विशेषतोऽकरोत्। अष्टमे दिवसे राजा पुत्रीं जगाद—'वत्से ! तथा करिष्ये यथा नलः स्वयमेवाऽत्रागमिष्यति, अतश्चिन्तां मा कार्षीः, सुखेन तिष्ठ, शनैः शनैः सर्वं भव्यं भावि'। ततो दवदन्ती तत्र पितृगृहे महानन्देनाऽस्थात्।

अथ नलसम्बन्धः—"तदा दवदन्तीं मुक्त्वा नलोऽरण्ये भ्रमन् एकतो वनकक्षाद् उत्थितं धूममपश्यत्। सोऽञ्जनश्यामो धूमो गगनतलं पूरयितुं चन्द्र-रवि-नक्षत्रादीनि वा श्यामानि रचयितुमिव ऊर्ध्वं व्रजति, अथवाऽच्छिन्नपक्षः कोऽपि पर्वत आकाशे याति !, इति भ्रमोत्पादकः। क्षणात् स धूमो ज्वालामालाविकरालः सर्वत्र प्रसृतः। दह्यमानवंशानां त्रटत्रटिति शब्दं श्वापदानामाक्रन्दं च नलः शुश्राव। ततो दावानले जाज्वल्यमाने मानुषं शब्दमश्रौषीद्—'हे इक्ष्वाकुवंशतिलकनलनृप! क्षत्रियोत्तम! मां रक्ष रक्ष। यद्यपि त्वं पुंव्रतेन निष्कारणोपकर्ताऽसि, तथापि राजन्! तुभ्यमहमुपकरिष्ये'। ततस्तं शब्दमभिव्रजन्नलो वल्लीगहनमध्यगतमेकं महापन्नगं 'रक्ष रक्ष' इति वदन्तमद्राक्षीत्। तं नलः पप्रच्छ—'हे भुजङ्गम! त्वं मम नाम वंशं च कथं जानासि ?, कथं च ते मानुषी भाषा ?'। तदा स आख्यत्—'अहं पूर्वजन्मनि मनुष्योऽभवं, कर्मणा सर्पो जातोऽस्मि, तज्जन्माभ्यासतो मम मानुषी भाषाऽऽयाति। यशोनिधान! मम महोज्ज्वलमवधिज्ञानमस्ति, तेन त्वां त्वन्नाम त्वद्वंशं च जानामि'। तत उत्पन्नानुकम्पो नलः कम्पमानस्य भुजङ्गस्य कर्षणाय वल्लीवनोपरि निजपटीमक्षिपत्। राज्ञस्तदुत्तरीयाञ्चलं प्राप्य पन्नगो बालकेन मुद्रिकामिव स्वशरीरेणाऽवेष्टयत्। तन्निजमुत्तरीयं पन्नगेनाक्रान्तं नल उदपानाद् रज्जुमिवाऽऽचकर्ष। ततो वह्निरहिते उषरप्रदेशे गत्वा त्वरितं मुमुक्षुं भूपालं स पन्नगः करेऽदशत्, तदा स्वेदबिन्दुमिव तं

१ कूपात्।

भुजङ्गं पृथ्वीतले आच्छोट्य नलो जगाद—'भो भो ! उपकारकारिणो मम साधु त्वयोपकृतम् !, यो हि दुग्धं पाययति सोऽपि त्वज्ज्वाला दश्यते !' । एवं विवदतो नलस्याङ्गे प्रसर्पता विषेण शरीरं कुब्जतां प्रपेदे । आशीविषविषग्रस्तो नलः प्रेतवत् पिङ्गलकेश, उष्ट्रवल्लम्बौष्ठः, रङ्कवत् सूक्ष्मपाणि-पादः स्थूलोदरश्च, एवं सर्वाङ्गेऽपि बीभत्सविकृताकारधारी नटवत् क्षणाद् बभूव । ततोऽचिन्तयत्—'अमुना रूपेण मम जीवितं मिथ्या, तत् परलोकोपकारिणी दीक्षां गृह्णामि' । एवं चिन्तातुरस्य नलस्य चिन्तयतः स सर्पोऽहिरूपं त्यक्त्वा दिव्याभरण-वस्त्रधारी तेजःपुञ्जो महान् सुरोऽभवत् । ऊचे च—'हे नल ! त्वं मा विषीद, अहं तव पिता निषधोऽस्मि । तुभ्यं तदा राज्यं दत्त्वाऽहं दीक्षां गृहीतवान्, दीक्षाप्रसादेन ब्रह्मलोके देवोऽभवम्, अवधिज्ञानेन च दुर्दशां प्राप्तं त्वामद्राक्षम् । मया मायासर्पीभूय तवाङ्गेषु विरूपता कृता तत्केवलं कट्वौषधपानवद् उपकाराय मन्यस्व, यतस्त्वया ये राजानः स्वसेवकीकृतास्ते तव शत्रवो वैरूप्याऽनुपलक्ष्यं त्वां न सम्प्रत्युपद्रोष्यन्ति । इदानीं प्रव्रज्यामनोरथं मा कार्षीः, यतस्तव भोगाश्चिरं भोक्तव्याः सन्ति । दीक्षासमयं ते कथयिष्यामि, अतोऽधुना सुस्थितो भव । पुत्र ! इदं बिल्वफलं रत्नकरण्डकं च गृहाण, यत्नेन च रक्षेः । त्वं यदा स्वरूपार्थी भवेस्तदेदं फलं स्फोटयेः, तदन्तरे देवदूष्याणि द्रक्ष्यसि । तदैव च रत्नकरण्डकमप्युद्घाटयेः, तत्र तु हारादीनि भूषणानि द्रक्ष्यसि । तत्कालं परिहितैस्तैर्वस्त्रैर्भूषणैश्च तदैव देवाकारं निजं रूपं प्राप्स्यसि' । इति श्रुत्वा हृष्टो नलस्तं पप्रच्छ—'तात ! तव स्नुषा यत्र मुक्ता

तत्राऽस्ति अथवा क्वचिदन्यतो गता ?' । देवोऽपि ततः स्थानाद्गमनं यावत् कुण्डिनपुरे आगमनं, सर्वमपि दवदन्त्या वृत्तान्तं कथयामास । नलं च जगाद–'वत्स ! किमरण्ये भ्रमसि ?, यत्र तव गन्तुमिच्छा तत्र स्थाने नयामि' । तदा नल ऊचे–'तात ! मां सुसुमारपुरे मुञ्च' । देवोऽपि नयननिमेषमात्रेण तथा विधाय स्वस्थानेऽगमत् । अथ कुब्जो नलस्तत्पुरसमीपवर्तिनि नन्दनवने सिद्धायतनसदृशमेकं प्रासादं ददर्श । तत्र प्रविशन् तन्मध्ये नमिनाथस्य प्रतिमामपश्यत् । उत्पुलकस्तां वन्दित्वा पुरद्वारेऽगात् । तदवसरे च तत्राऽऽलानस्तम्भमुन्मूल्य मत्तगजश्छुटितो भ्रमन्नभवत् । स च महावायुवत् तरून् बभञ्ज, निषादिनोऽपि न गणयति । तं गजं वशं नेतुमसमर्थो दधिपर्णनृपो दुर्गे चटित्वा उच्चैरुवाच–'यः कश्चिद् मम गजं वश्यं कुर्यात् तस्य वाञ्छितमवश्यं ददामि, किं भोः ! कोऽप्यस्ति गजारोहणसमर्थः ?' । तच्छ्रुत्वा स कुब्जोऽभाषत–'क्व गतः स हस्ती ?, युष्माकं पश्यतां तमहं वशीकुर्वे' । एवं कुब्जे वदति सति स गर्जन् गजस्तमभ्यधावत् । कुब्जोऽपि पद्भ्यां पृथ्वीमस्पृशन्निव गजसम्मुखं धावन् नो भयं प्राप । तदा 'मा मृथा मा मृथाः, अपसर अपसर' इति लोकाः कृपया जगदुः । स तु केसरिवत्त्वरितं ययौ । कुब्जः कन्दुकवत् प्रससार पुनरपससार, पृथ्व्यां पपात लुलोठ च, एवं गजं विप्रतारयन् पुनः पुनः पुच्छं पराक्रमेणाक्रमन् मान्त्रिकः सर्पमिव तं गजं खेदयामास । ततो जातश्रमं गजं विज्ञाय, शीघ्रं सिंहवदुत्पत्य, कण्ठशृङ्खलायां चरणौ स्थापयित्वा स्कन्धमारुरोह; चपेटया च कुम्भस्थलं निघ्नन् तद्ग्रन्थिं दृढयामास ।

ततोऽङ्कुशं नर्तयन् चीत्कारकारिणं तं गजं वाहयामास । अथ सर्वोऽपि जनस्तस्य जयजयारवमुद्घोषयामास । राजा तत्कुब्जगले स्वयं काञ्चनशृङ्खलामक्षिपत् । निर्मदनं कुञ्जरं कृत्वा कुब्ज आलानस्तम्भे निन्ये । ततोऽमलयशाः स कुब्जो नलः प्रणामं कुर्वन् दधिपर्णनृपसमीपे उपाविशत् । अथ दधिपर्णस्तमुवाच–'हे कुब्ज ! किमन्यदपि वेत्सि ?, तथा सम्भवोऽस्ति' । कुब्जो जगाद–'राजन् ! त्वामन्यत् किं दर्शयामि ?, अहं सूर्यपाकरसवतीं वेद्मि, किं तव तस्या विलोकनेच्छाऽस्ति ?' । 'आम्' इत्युक्त्वा, स कौतुकी नृपो गृहं गत्वा तण्डुलादिसर्वसामग्रीमार्पयत् । सोऽपि तां सूर्यातपे मुक्त्वा सूर्यविद्यां संस्मरन् त्वरितं दिव्यां रसवतीं निष्पादयामास । कल्पवृक्षदत्तयेव तया रसवत्या राजा दधिपर्णः सपरीवार आश्चर्यभाग् बुभुजे । श्रमनिराकरणीं परमहर्षदां तां रसवतीमास्वाद्य दधिपर्णनृपोऽवदत्–'ईदृशीं रसवतीं नलो वेत्ति, नाऽन्यः; नलं सेवमानस्य मे एतस्याश्चिरं परिचयः । हे कुब्ज ! तत्किं त्वं नलोऽसि ?, परं विकृताकारधारी नैतादृशः सोऽस्ति ! । द्विशतयोजनदूरस्य तस्य कुतोऽत्रागमनम् ?, भरतार्धस्वामिनश्च तस्यैकाकित्वं कुतः ? । तस्य रूपं च मया सुर-खेचराधिकं दृष्टम्, अतस्त्वं तु नलो नाऽसि' । ततस्तस्मै कुब्जाय तुष्टो राजा वस्त्राभरणादिकं टङ्कलक्षं ग्रामपञ्चशतीं च ददौ । तत्सर्वमपि स जग्राह, परं ग्रामपञ्चशतीं न ललौ । तदा राजोवाच–'कुब्ज ! किं तवाऽन्यदपि ददामि ?' । कुब्जो बभाषे–'तर्हि ममैतद्वाञ्छितं पूरय– त्वद्राज्याद् आखेटकं मद्यपानं च निवारय' । राजाऽपि तस्य वचनं मानयन् स्वशासने आखेटक-मद्यपानयोर्वार्तामपि नि-

राकरोत् । अन्येद्युर्दधिपर्णनृपः कुब्जं रहसि जगाद–'त्वं कोऽसि ?, कुतः स्थानादागतोऽसि ?, क्व वास्तव्योऽसि ?, स्वकीयं सर्ववृत्तान्तं वद' । तदा कुब्जोऽवदत्–'अहं कोशलेश्वरस्य नलराजस्य हुण्डिकनामा सूपकृदस्मि, तत्पार्श्वे च मया कलाः शिक्षिताः । नलोऽनुजन्मना कूबरेण द्यूते जितः सकलां पृथ्वीं हारयामास । ततः स दवदन्तीं गृहीत्वाऽरण्यवासं प्रपेदे, तत्रैव च मृतः! । ततोऽहं त्वन्नगरे आगतोऽस्मि, परं मायाविनं कुपात्रपोषिणं कुनृपं कूबरं न त्वाश्रितः' । दधिपर्णनृपोऽपि तया नलमृत्युवार्तया सपरिवारो हृदि वज्राहत इवाऽतीव चक्रन्द, वाष्पायितनयनश्च नलस्य प्रेतकार्यं चक्रे ! । कुब्जो मनसि गाढं हसितुं लग्नः ! ।

अन्यदा दधिपर्णनृपो दवदन्तीपितुः पार्श्वे केनापि कारणेन दूतं प्रैषीत् । राज्ञा भीमरथेन सत्कृतस्तत्पार्श्वे कतिचिद्दिवसान् सुखं वसन् चतुरशिरोरत्नं स दूतोऽन्यदा प्रस्तावे एवं वार्तामुवाच–'हे स्वामिन् ! मत्स्वामिसमीपे नलराजस्य सूपकारोऽस्ति, स च नलशिक्षितः सूर्यपाकरसवतीं कर्तुं वेत्ति' । तच्छ्रुत्वा चकिता दवदन्ती पितरमभाषत–'तात ! चरं प्रेष्य जानीहि स सूपकृत् कीदृशोऽस्ति । यतः सूर्यपाकरसवतीं नलं विना कोऽप्यन्यो न जानाति । स नल एव गोपितस्वरूपो भविष्यति' । ततः स्वामिकार्यकुशलं कुशलनामानं विप्रमाकार्य, सत्कारपूर्वं राजा भीमरथ आदिदेश–'त्वं सुसुमारपुरे गत्वा तं राजवल्लवं पश्य, स कां कां कलां जानाति, कीदृग्रूपश्चास्ति ?' । 'प्रभोराज्ञा प्रमाणम्' इत्युक्त्वा स

१ राज्ञो–दधिपर्णस्य बल्लवं–सूपकारम् ।

चलितः । सुशकुनैः प्रेर्यमाणः सुसुमारपुरेऽगात् । लोकान् पृच्छन् पृच्छन् कुब्जसमीपे गत्वा निषसाद, सर्वाङ्गविरूपधारिणं च तं दृष्ट्वा विषसाद । मनसि दध्यौ–'क्व नलः क्व चाऽयम् ?, क्व मेरुः क्व च सर्षपकणः ?, दवदन्त्या वृथैव नलभ्रम उत्पन्नोऽस्ति, तथापि सम्यग् निश्चेष्ये' । इति सम्प्रधार्य नलाऽवगुणगर्भितं श्लोकद्वयं स कथयामास । तच्चेदम्—

"निर्घृणानां निस्त्रपाणां, निःसत्त्वानां दुरात्मनाम् । धुर्वंहो नल एवैकः, पत्नीं तत्याज यः सतीम् ॥ १ ॥
सुप्तामेकाकिनीं मुग्धां, विश्वस्तां त्यजतः प्रियाम् । उत्सेहाते कथं पादौ, नैषधेरल्पमेधसः ?" ॥ २ ॥

तदेतत् पुनः पुनः पठ्यमानं श्रुत्वा नलो निजप्रियां स्मरन् अनर्गलं गलन्नयनजलो रुरोद । विप्रेण पृष्टः–'किं रोदिषि ?' । तदा स हुण्डिक उवाच–'तव करुणरसमयं गीतं श्रुत्वा रोदिमि' । अथ कुब्जेन श्लोकार्थं पृष्टो विप्रो द्यूतादारभ्य कुण्डिनपुरे दवदन्त्यागमनावधि सर्वमकथयत् । पुनरप्याख्यत्–"अहो कुब्ज ! सूर्यपाकरसवतीनिष्पादकस्त्वं दधिपर्णनृपदूतेन भीमरथनृपस्याख्यातः । तत 'एवंविधया कलया युक्तो नलो भवति, नान्यः' इति कथयित्वा, दवदन्त्या स्वपितरं भीमरथनृपमभ्यर्थ्य त्वां द्रष्टुमहं प्रेषितोऽस्मि । त्वां दृष्ट्वा चाऽहमचिन्तयम्–'क्व विरूपाकारधारी त्वं कुब्जः क्व च दिव्यरूपभाग् नलः ?, क्व खद्योतः क्व च सूर्यः ?' । ममाऽत्रागच्छतो यानि शकुनानि शुभान्यभवन् तानि सर्वाण्यपि अन्यथा जातानि, यतस्त्वं नलो नाऽसि !" । ततः कुब्जो दवदन्तीं हृदये ध्यायन् अधिकाधिकं च रुदन् तं विप्रमुपरुध्य

स्वगृहेऽनैषीत् । अवदच्च–'हे भद्र ! महासत्या दवदन्त्या महापुंसो नलनृपस्य च कथां कथयतस्तव किं स्वागतं क्रियताम् ?' । इत्युक्त्वा तस्य स्नान-भोजनादिभिरौचितीं विदधे, दधिपर्णनृपदत्तं चाऽऽभरणादिकं ददौ । अथ कुशलः कुशलेन कुण्डिनपुरं ययौ । तत्र च भीमरथाय यथादृष्टं कुब्जं कथयामास, कुब्जो यथा गजं खेदयति स्म तद् दृष्टां सूर्यपाकरसवतीं चाऽऽख्यत्, सुवर्णमालां टङ्कलक्षं वस्त्राभरणादीनि च कुब्जेन दत्तानि अदर्शयत्, निजं श्लोकगानमप्यकथयत् । तन्निशम्य सा सती जगाद–'स नल एवेदृशं वैरूप्यं केनाप्याहारदोषेणाऽथवा कर्मदोषेण प्राप्तो भविष्यति; यतो गजशिक्षायामीदृशं कौशलम्, ईदृशमद्भुतं दानं, सूर्यपाकरसवती च नलं विनाऽन्यस्य कस्यचिन्नास्ति । तात ! तं कुब्जं केनाप्युपायेन इहानय यथाऽहमिङ्गितादिभिर्निरीक्ष्य स्वयं परीक्षे' । भीमरथनृपो जगाद–'पुत्रि ! तव कूटस्वयंवरं प्रारभ्य दधिपर्णनृपाऽऽकारणाय दूतः प्रेष्यते । तव स्वयंवरं श्रुत्वा दधिपर्ण आगमिष्यति, यतः सोऽग्रेऽपि त्वयि लुब्धोऽभवत्, परं त्वया तु नलो वृतः । दधिपर्णेन सार्द्धं स कुब्जोऽप्यागमिष्यति, यतः स चेन्नलस्तदा स्वप्रियामन्यस्मै दीयमानां न सोढा । नलोऽश्वहृदयज्ञाताऽस्ति, स कुब्जो यदि नल एव तदा स स्वयं रथं प्रेरयन् रथाश्वैरेव विज्ञेयः, यतो नलस्य प्रेरयतः सततुरङ्गमा वातवेगा भवन्ति, तुरङ्गमाः किल तुरङ्गमरूपेण मूर्ता वाता इव दृश्यन्ते । हे सुते ! आसन्नदिवसश्चाख्येयः, यस्तदैति स नल एव, यतः कोऽपि स्त्रीपराभवं न सहते, किं पुनर्नलनृपस्य कथनम् ?' । इति निर्णीय भीमरथराजो दूतेन सुसुमार-

पुरस्वामिनं पञ्चमीदिने आकारयत्। दधिपर्णस्तत्र गन्तुमुत्सुकश्चेतसि चिन्तयामास–'दवदन्तीं प्राप्तुमिच्छाऽतीवास्ति, परं साऽतिदूरे, तत्र च श्वः कथं गम्यते ?, किं करोमि ?'। एवं चिन्तयन् स्तोकजले मीन इवाऽरतिं प्राप्तः। तदा कुब्जो दध्यौ–'सती दवदन्ती नान्यं पुरुषं वाञ्छति, अथवेच्छेत्तर्हि तां को हि मयि सत्यपि गृह्णीयात् ?। अहं दधिपर्णं पड्भिर्यामैः कुण्डिनपुरे नयामि, यथाऽनेन समं ममापि प्रासङ्गिकं यानं स्यात्'। इति विचार्य स कुब्जो दधिपर्णमूचे–'मा ताम्य, कारणं कथय; यतोऽज्ञातरोगस्य रोगिणोऽपि चिकित्सा न स्यात्'। दधिपर्णोऽवदत्–'हे कुब्ज! राजा नलो मृतः, पुनरपि कल्ये चैत्रशुक्लपञ्चमीदिने तस्या दवदन्त्याः स्वयंवरो भावी, तस्य च षड् यामा एवाऽन्तरम्, एतस्मिन्नल्पतमे समये कथं मे तत्र गमनं भविष्यति ?। दूतोऽपि येनाध्वना बहुभिर्दिनैरागात् तेनैव मार्गेणाऽहं सार्धदिनेन कथं गच्छामि ?। ततोऽहं मुधा तस्यां लुब्धोऽस्मि'। कुब्जोऽवदत्–'हे राजन्! मा विषीद, त्वामचिरादपि कुण्डिनपुरे नेष्यामि; सतुरङ्गं रथं ममाऽर्पय'। तदा हृष्टेन दधिपर्णेन 'स्वेच्छया गृहाण' इत्युक्तः कुब्जो मनोज्ञं रथं जात्यतुरङ्गौ च जग्राह। दधिपर्णस्तं सर्वतो दक्षं विलोक्य दध्यौ–'एष न सामान्यः पुरुषः, देवोऽथवा विद्याधरो भावी!'। अथ रथं सज्जं कृत्वा कुब्जो नृपमुवाच–'राजन्! रथमारोह, निशात्यये कुण्डिनपुरं नेष्यामि'। तदा राजा स्थगीधरश्छत्रधरश्चामरधारिणौ कुब्जश्चाऽमी षडपि तं रथमारुरुहुः। ततस्तत्सुरदत्तं बिल्वं करण्डकं च कट्यां वस्त्रेण बद्ध्वा, पञ्चनमस्कारं च स्मृत्वा कुब्जो रथमाखेटयत्। नलप्रेर्यमाण-

तुरङ्गः स रथो यथा सुराणां विमानं गगने चलति तथा चचाल । अथ रथवेगवातोद्धुतो दधिपर्णप्रच्छ[1]दोऽपतत्, स च तेन नलस्याऽवतारणे कृत इवाऽदृश्यत ! । तदा कुब्जं दधिपर्णोऽवदत्–'क्षणमेकं रथो धार्यतां यावद्वातेन पक्षिवदुड्डीय गतां पटीमहं गृह्णामि' । इति स यावत्कुब्जं जगाद तावद् रथः पञ्चविंशतियोजनानि गतः ! । स्मयमानः कुब्जोऽवदत्–'नृपते ! तव पटी क्वाऽस्ति ?, पटीपतनाद् योजनानां पञ्चविंशतिरुज्झिता । एते हि मध्यमास्तुरङ्गाः, यदि चोत्तमा भवेयुस्तदा तु एतावता पञ्चाशद्योजनानि व्रजेयुः' । अथ दधिपर्णो दूराद् अनेकफलव्याप्तं विभीतकनामानं वृक्षमपश्यत् । तं दृष्ट्वा सारथिं कुब्जमित्युवाच–'अत्र यावन्ति फलानि तावन्त्यगणयन्नप्यहं जानामि, पश्चाद्व्यावृत्तस्त्वां कौतुकं दर्शयिष्यामि' । तदा कुब्जो[2] जगाद–'हे राजन् ! कालक्षेपात् किं बिभेषि ?, तुरङ्गहृदयज्ञे मयि सारथौ न काऽपि चिन्ता कर्तव्या । एकेन मुष्टिप्रहारेण तव पुरतः सर्वाणि फलानि पातयिष्यामि' । राजोचे–'कुब्ज ! तर्हि त्वं फलानि पातय, अष्टादश सहस्राणि स्युः, कौतुकं पश्य' । कुब्जोऽपि तान्यपातयत्, यथा कथितानि तथैव चाऽभूवन्, नैकं हीनं न वैकमधिकम् । ततः कुब्जो दधिपर्णाय याचितां तुरङ्गहृदयज्ञां विद्यां ददौ, तस्माच्च यथाविधि सङ्ख्याविद्यामाददे । प्रातःकाले कुब्जसारथिः स रथः कुण्डिनपुराभ्यर्णेऽगात्, दधिपर्णो विकसन्मुखोऽभूत् । तदैव च निशाशेषे दवदन्ती स्वप्नमद्राक्षीत्, हर्षभाक् च यथादृष्टं पितुरग्रे कथ-

१ प्रच्छद-उत्तरीयवस्त्रम् । २ कुब्जः सारथिर्यस्य ।

यामास–'हे तात ! मया सुखसुप्तयाऽद्य निशाशेषे निर्वृतिदेवी अदर्शि, तया च कोशलानगर्युद्यानं गगने इहानीतमद्राक्षम् । तस्मिन् पुष्पितं फलितं च सहकारमालोकयम्, तदाज्ञयाऽहं तं सहकारमारूढा, मम हस्ते च तया विकस्वरं कमलमर्पितम् । मयि तत्र चटितायामेकः कश्चित्पक्षी प्रागधिरूढस्त्वरितं धरणीतले पपात' । इति स्वप्नं निशम्य राजा भीमरथोऽप्युवाच–"हे पुत्रि ! अयं स्वप्नः शुभः । तथाहि–'या निर्वृतिर्देवी सा तु तव पुण्यराशिरुद्यतः । यच्च गगने कोशलानगर्युद्यानं दृष्टं तत्ते कोशलैश्वर्यदायि । सहकारारोहणात् शीघ्रं पत्या सह तव सङ्गमो भविष्यति । विकस्वरकमलार्पणात् तव सतीत्वयशःकमलं नलसङ्गमसूर्यविकस्वरं भविष्यति । तत्राग्रेऽधिरूढो यः कश्चित् पक्षी पपात स तु कूबरो राज्यान्निःसन्देहं पतिष्यति' । प्रभातकाले स्वप्नदर्शनात् तवाद्य नलो निश्चितं मिलिष्यति, यतोऽत्र समये हि दृष्टः स्वप्नः शीघ्रफलदायीति स्वप्नपाठकशास्त्रेषु कथितमस्ति" । अथ तदानीमेव पुरीद्वारं दधिपर्णराजः प्रासः, तमागतं च मङ्गलनामा कश्चित्पुरुषो भीमायाख्यत् । भीमोऽपि तत्संमुखमगात्, मित्रवद् मिलितश्च । स्थानार्पणादिनाऽऽतिथ्यं कृत्वा चैवमूचे–'तव सूपकृत् कुब्जः सूर्यपाकरसवतीं जानाति तां दिदृक्षोर्मम दर्शय, अधुनाऽन्यया वार्तया सृतम्' । तदा दधिपर्णस्तद्रसवतीकृते कुब्जमादिक्षत्, सोऽपि कल्पवृक्ष इव तां क्षणाद् दर्शयामास । ततो दधिपर्णोपरोधेन तत्स्वादं च परीक्षितुं तया रसवत्या सपरीवारो भीमरथो बुभुजे । तदा च तदोदनभृतं स्थालमानाय्य दवदन्त्यपि बुभुजे, तद्रसास्वादाच्च कुब्जं नलमज्ञासीत् । उवाच च–

"मम ज्ञानिसूरिणा प्राक् कथितमासीद् यत्—'सूर्यपाकरसवती इह भरतक्षेत्रे नलस्यैव, नान्यस्य भविष्यति'। अयं कुब्जोऽस्तु वा कुण्टोऽस्तु वा यादृक् तादृगस्तु, तत्र हि किमपि कारणं दृश्यते, परं नल एव, मम संशयो नास्ति। तथा नलस्यैका परीक्षा सूर्यपाकरसवती, अन्याऽपि परीक्षा विद्यते— नलाङ्गुल्याऽप्यहं स्पृष्टा उत्पुलका निश्चितं भवामि। तद् अयं कुब्जो मां तिलकं कुर्वन्निव स्पृशतु, अभिज्ञानान्तरेण यदि सत्य एष भविष्यति तदा नल एव"। तदनन्तरं भीमरथेन कुब्जः पृष्टः—'त्वं नलोऽसि?'। तदा स उवाच—'यूयं सर्वथा भ्रान्ताः स्थ। अहो! देवतारूपो नलः क्व?, अहं पुनर्बीभत्सरूपः क्व?'। अथाऽत्युपरोधतः कुब्जस्तद्वक्षोऽङ्गुल्याऽस्पृक्षत्, तदा तत्कालं कदम्बवृक्षकुसुमवत् सा रोमाञ्चकञ्चुकिताऽभूत्, अत्यानन्देन च तस्याः शरीरं कर्कोटकमिवोत्कण्टकमजायत। ततः सा कथयितुं लग्ना—'हे प्रियतम! तदा सुप्तां विश्वासप्राप्तां मां त्वं गहने वनेऽत्याक्षीः, परं सम्प्रति क्व यास्यसि?, चिराद् दृष्टोऽसि'। इति पुनः पुनरवोचत्। पश्चाद् गृहमध्ये नीत्वा दवदन्त्याऽभ्यर्थितः—'हे स्वामिन्! स्वरूपं प्रकटीकुरु'। कुब्जोऽपि तस्याः स्नेहेन विल्वात् करण्डकाच्च वस्त्रालङ्कारान् आकृष्य, शीघ्रं परिधाय, स्वरूपभाग् अभूत्। ततश्च दवदन्ती यथारूपं स्वप्रियं दृष्ट्वा हर्षनिर्भरेणालिलिङ्ग, यथा वृक्षं वल्ली परिरभते। अथ नलराजं द्वारे आगतं भीमरथराज आलिङ्ग्य, निजसिंहासनेऽध्यासयामास। 'त्वं मम स्वामी, एतत्सर्वमपि तवैव, किं करोमि?, त्वमादिश' एवं वदन् वेत्रीव कृताञ्जलिर्भीमरथो नलस्य पुरतोऽस्थात्। दधि-

पर्णो नलं प्रणम्याऽवदत्–'हे श्रीनलभूपाल! त्वं सदा मम नाथोऽसि । यद् अज्ञानात् त्वयि अकार्यं मयाऽनुष्ठितम्, अविनयश्च कृतः, तं सर्वं ममापराधं क्षमस्व' । अत्रान्तरे स धनदेवः सार्थपतिर्महत्प्राभृतकं गृहीत्वा भीमरथराजं द्रष्टुमागात् । तदा दवदन्ती भीमरथभूपाय कथयित्वा तस्य पूर्वोपकारिणः स्वबान्धवस्येव गौरवमकारयत् । पश्चात् पूर्वोपकारज्ञया नितान्तमुत्कण्ठितया दवदन्त्या ऋतुपर्णनृपः, तस्य प्रिया चन्द्रयशाः, तत्सुता चन्द्रवती, तापसपुरेश्वरो वसन्तश्रीशेखरः सार्थपतिः, सर्वेऽपि तत्र पितृवाचकैराकारिताः । भीमेन नवनवातिथ्यैरतीव सत्क्रियमाणाः प्रीतमनसस्ते एकं मासं तस्थुः । अन्यदा तेषां सर्वेषां भीमसभायां तस्थुषां प्रातः कश्चित्तेजःपुञ्जो देव आकाशादुत्तीर्य आगात् । तां सतीं चोचे–'हे महानुभावे! अहं प्राक् तापसपतिर्विमलमतिनामाऽभवं यस्त्वया प्रतिबोधितः, स मृत्वा सौधर्मदेवलोके श्रीकेसरनामा केसरनामनि विमानेऽभवम् । मिथ्यादृष्टिरप्यहं त्वयाऽर्हद्धर्मे स्थापितः, तस्य धर्मस्येदं माहात्म्यम् । त्वत्प्रसादात् सुरसम्पद्भोक्ताऽहमेषोऽभूवम्' । इत्युक्त्वा स सुरः सप्त कनककोटीः प्रवृष्य स्वां कृतज्ञतां प्रकाश्य क्वचित्तिरोदधे । अथ भीमरथ-दधिपर्ण-ऋतुपर्ण-वसन्तश्रीशेखरा अपरेऽपि च महाबला महीपतयो नलस्य राज्याभिषेकं चक्रुः । ततो नलादेशेन ते राजानः पृथ्व्या अतीव सङ्कीर्णत्वं ददानानि स्वस्वसैन्यानि बहुतराण्यमेलयन् । शुभदिने तै राजभिः सार्द्धम् अतुलबलो नलो निजराज्यलक्ष्मीं जिघृक्षुरयोध्यासम्मुखं चचाल । सैन्यरजोभिः सूर्यमदृश्यीकुर्वन् नलः कैरप्यहोभिरयोध्याया रतिवल्लभमुपवनमभ्यु-

वास। नलमागतं ज्ञात्वा कूबरः कण्ठगतप्राण इवाऽत्यन्तमाकुलोऽभूत् । नलो दूतेन तमाह स्म–'पुनः पाशकै रम्यताम्; त्वदीया श्रीर्ममैवास्तु, अथवा मदीया श्रीस्तवाऽस्तु'। तच्छ्रुत्वा कूबरो रणाशङ्कामपाकृत्य, प्राग्जितकाशित्वाद् हर्षेण पुनर्द्यूतं क्रीडितुं नलेन सममारेभे । अथ भाग्यवान् नलः सर्वां पृथ्वीं जिगाय, कूबरस्तु हारयामास, यतो मनुष्याणां भाग्ये सति विजयः करकमले राजहंसायते। नलेन जितराज्यलक्ष्मीरपि अतिक्रूरोऽपि कूबरः 'अयं मम लघुभ्राता' इति ज्ञात्वा अप्रसादास्पदं नो चक्रे। नलो निजं राज्यमलमकरोत्, कूबरश्च पूर्ववद् युवराजः कृतः। स्वराज्यमासाद्य नलो दवदन्तीसंयुक्तोऽत्युत्कण्ठया सर्वाणि कोशलापुरीचैत्यान्यवन्दत । अथ राज्याभिषेके भरतार्धवासिनः षोडशसहस्रमहीपतयो भक्त्या माङ्गल्यप्राभृतकानि आनिन्यिरे। ततः सर्वैं राजभिः पालिताऽखण्डाज्ञो नलनृपो बहूनि वर्षसहस्राणि भरतार्धं पालयामास ।

"अन्येद्युः स्वर्गाद् दिव्यरूपधारी निषधो देवस्तत्रागात्, विषयसागरमग्नं च नलं प्रत्यबोधयत्–'हे वत्स! भवारण्ये आत्मनोऽपि विवेकधनं विषयचौरैर्लुण्ठ्यमानं त्वमरक्षन् किं पुरुषोऽसि?। मया पुरा तव दीक्षासमयाख्यानं प्रतिपन्नं, तद् इदानीं त्वम् आयुर्वृक्षफलं दीक्षां गृहाण'। इत्युक्त्वा स सुरोऽन्तर्दधे।

"तदा च तत्र जिनसेननामा सूरिरवधिज्ञानी आययौ। ततो नलो दवदन्ती चादरेण वन्दाते, ताभ्यां च स्वप्राग्भवं स सूरिः पृष्टः सन्नेवमुवाच–'हे राजन्! त्वया साधुक्षीरदानाद् राज्यं प्राप्तम्। प्राग्भवे च

क्रोधाद् मुनिर्द्वादश घटीः सार्धाद्वियोजितः, तेन कर्मणा युवयोर्द्वादशवर्षविरहः'। इति श्रुत्वा वैराग्येण पुष्कलनाम्नः पुत्रस्य राज्यं दत्त्वा, तौ दम्पती तत्सूरिसमीपे दीक्षां गृहीत्वा चिरं पालयामासतुः। अन्यदा च नलो भोगार्थं दवदन्त्यां मनोऽकरोत्, तदाऽऽचार्येण परित्यक्तः, पित्रा चागत्य प्रतिबोधितः। व्रतं पालयितुमसमर्थत्वाद् नलोऽनशनं चक्रे, तस्मिन् उत्पन्नानुरागा दवदन्त्यपि तथैवाऽनशनमकरोत्। नलो मृत्वाऽहं कुवेरोऽभूवं, दवदन्ती च मम प्रियाऽभवत्। हे वसुदेव! सा च्युत्वा कनकवत्यभूत्। प्राग्भवपत्नीत्वस्नेहेनाऽतिशयमोहितोऽहम् इहागतोऽस्मि, यतः स्नेहो जन्मशतान्यपि पृष्ठे याति। हे यदुकुलकाननजलधर! इयं तव पत्नी कनकवती अस्मिन्नेव भवे कर्मक्षयं कृत्वा मुक्तिं गमिष्यति। प्राग् महाविदेहक्षेत्रे इन्द्रेण समं वन्दनाय गतस्य मम विमलस्वामितीर्थङ्करेणैतत् कथितमभूत्"। इत्थं कनकवतीप्राग्भवसङ्गतां कथां वसुदेवाय कथयित्वा क्षणाद् धनदस्तिरोदधे।

इति चिररागवशाद् वसुदेवः, कनकवतीमुपयम्य स्वमेव।
खेचररामाभी रममाणः, स च विरराज सुपर्वसमानः॥ १॥

इति श्रीगुणविजयगणिविरचिते श्रीमदरिष्टनेमिचरिते सुललितगद्यबन्धे कनकवतीपरिणयन-
तत्पूर्वभववर्णनो नाम तृतीयः परिच्छेदः॥

---

## ॥ अथ चतुर्थः परिच्छेदः ॥

अन्यदा सूर्पकविद्याधरेण वसुदेवः सुप्तो जह्रे। प्रबोधभाग् वसुदेवो मुष्ट्या जघान तदा स वसुदेवं मुमोच। यादवो गोदावरीनद्यां पतितः, तां तीर्त्वा कोल्लापुरनगरेऽगात्। तत्र पद्मश्रियं राजपुत्रीं परिणीतवान्। ततः स्थानादपि वसुदेवो नीलकण्ठखेचरेण हृतः, ताडनान्मुक्तश्च स चम्पानगरीसरसि पतितः। तदपि तीर्त्वा चम्पापुर्यां मन्त्रिपुत्रीं व्युवाह। ततोऽपि पुनरपि सूर्पकेण हृतः, मुक्तश्च गङ्गाजले पपात। तदपि उत्तीर्य गच्छन् पान्थैः सह पल्लीं ययौ। तत्र पल्लीपतिपुत्रीं जरानाम्नीं परिणिनाय, तस्यां च जराकुमाराभिधः पुत्रोऽभवत्। तदनन्तरं स यादवोऽवन्तिसुन्दरीं, नरद्वेपिणीं, सूरसेनां, जीवयशसम्, अपराश्च सहस्रशो राजपुत्रीरुपयेमे।

अन्यदा तमन्यत्र गच्छन्तं देवतोचे—'मया रुधिरनृपकन्या रोहिणी स्वयंवरे तव दत्ता, त्वया तु तत्र पटहो वाद्यः'। इति तयोक्तो वसुदेवस्तत्कालम् अरिष्टपुरे स्वयंवरमण्डपे जगाम। तत्र जरासन्धप्रमुखेषु राजसूपविष्टेषु रोहिणी कुमारिका साक्षात् पृथ्वीं प्राप्ता रोहिणीव[1] आययौ। तदा ते नृपाः स्वं स्वं रूपं रोचयिषवो विविधां चेष्टां चक्रिरे; परं स्वानुरूपमपश्यन्त्यै तस्यै कोऽपि न रुरुचे। वसुदेवस्तु कृतवेषा-

१ चन्द्रपत्नीव।

न्तरस्तूर्यवादिनां मध्ये स्थित एवं पटहं स्फुटाक्षरं वादयामास–'हे कुरङ्गाक्षि! कुरङ्गीव किं पश्यसि?, एहि एहि, तवानुरूपोऽहं भर्ता त्वत्सङ्गमोत्सुकोऽस्मि'। तच्छ्रुत्वा तन्निरीक्षणाच्च उत्पुलका सा तत्कालं स्वयंवरमालां वसुदेवस्य कण्ठे न्यधात्। तदा राज्ञाम् 'एनं हत हत' इतिभाषिणां कोलाहलः प्रादुर्बभूव। 'अनया कन्यया तौर्यिको[1] वव्रे!' इति गाढं सा हास्यपात्रमभूत्। अथ कोशलानगरीनृपो दन्तवक्रो नामाऽतीव वक्रवचनो रुधिरनृपं सोपहासं नट इवोच्चैरुवाच–'इयं कन्या यदि त्वया पटहवादकाय दित्सिता[2] तदा कुलीना अमी नृपाः किमर्थमाहूताः?। यद्यप्येषा गुणाऽनभिज्ञा तौर्यिकं वृणुते, परं तत्पित्रा नोपेक्षणीयम्; यतो बाल्ये हि अपत्यानां पिता शासिता'। तदा रुधिरराज ऊचे–'हे कोशलेश्वर! तवाऽनेन विचारेण सृतम्, स्वयंवरे तु कन्यकानां वृतो वरः प्रमाणम्'। अथ विदुरनृपो न्यायविदुरो[3] जगाद–'हे नृप! इदं साधु, तथाप्येष वरः कुलादिकं प्रष्टुं युज्यते'। तदा वसुदेवोऽब्रवीत्–'कुलकथने कोऽयं प्रस्तावः?, यस्माद् यादृक् तादृगपि सन् अहमनया वृतः। ममेमां योऽसहिष्णुर्हरिष्यति तस्य तु भुजवीर्यदर्शनेन स्वकुलं कथयिष्यामि'। अथ तस्येदमुद्धतं वचनं निशम्य जरासन्धः क्रुद्धः समुद्रविजयादीन् नृपानित्यादिक्षत्–'प्रथमं तु राजविरोधकृद् अयमधमो रुधिरनृपः, द्वितीयोऽयं पाणविकः पणववादनाद् उन्मत्तः, यतोऽनेन राजकन्या प्राप्ता इतीयताऽपि भो भो भूपालाः! पश्यत न तृप्यति, वातोऽस्तोच्चवृक्षफलप्राप्त्या[4] वामन इव

१ तूर्यनादयिता। २ दातुमिष्टा। ३ न्यायवेत्ता। ४ वायुना अस्त–क्षिप्त यदुन्नतवृक्षफलम्, तस्य प्राप्त्या।

मदेन दृप्यति। तत इमौ रुधिर-तौर्यिकौ शीघ्रं हत'। इति जरासन्धेनोक्तास्ते समुद्रविजयादयो रणेऽसज्जन्। अथ खेचरेन्द्रो दधिमुखः स्वयं सारथीभूय सङ्ग्रामोद्यतं वसुदेवं रथे आरोहयामास, तदा च वेगवतीमात्राऽङ्गारवत्या दत्तानि धनुस्तूणानि महाबलवान् वसुदेव आददे। अथ जरासन्धनृपै रुधिरभूपतिसैन्यं भग्नं, तदा वसुदेवो दधिमुखेन सारथिना वाजिनः प्रेरयामास। तत आदावभ्युत्थितं शत्रुञ्जयं वैरिणं यदुवरोऽजयत्, दन्तवक्रं नृपमभाङ्क्षीत्, शल्यराजं च बभञ्ज। अथ जरासन्धः समुद्रविजयराजं साशङ्कं जगाद–'अयं पाणविकमात्रो न दृश्यते!, परम् अन्यनृपाणामसौ विषमं हन्तव्योऽस्ति। ततः स्वयमुत्थाय एनं मारयस्व। अस्मिन् हते तवैव रोहिणी, सर्वेषां च नृपाणां भङ्गवैलक्ष्यमपाकुरु'। तदा राजा समुद्रविजयोऽप्यूचे–'मम परस्त्रिया सृतं, परं त्वदाज्ञयाऽनेन दोष्मता सममहं योत्स्ये'। इत्युक्त्वा समुद्रविजयो भ्रात्रा सार्धं युयुधे। तयोर्विश्वाश्चर्यकरं शस्त्राशस्त्रि युद्धं चिरं बभूव। 'कोऽप्ययं मत्तोऽपि समर्थः!' इति यावत् समुद्रविजयो दध्यौ तावद् वसुदेवस्तत्पुरः साक्षरं बाणं चिक्षेप। समुद्रविजयस्तं गृहीत्वा तदक्षराणीति अवाचयत्–'तदा छद्मना निर्गतो वसुदेवस्त्वां नमति'। अथ हृष्टः समुद्रविजयो 'वत्स! वत्स!' इति जल्पन् सन्ध्यायां वत्समिलनोत्कण्ठिता गौरिव रथमुत्सृजन् त्वरितं दधावे। वसुदेवोऽपि तत्कालं रथादुत्तीर्य तस्य पादपद्मयोरपतत्, तं च समुद्रविजयराज उद्धृत्य बाहुभ्यां शीघ्रं सस्वजे। 'हे वत्स! त्वं वर्षशतं क्वाऽस्थाः?' इति समुद्रविजयेन पृष्टो वसुदेवः सर्वं स्ववृत्तान्तमादितः कथयामास। तादृक्पराक्रमशालिना भ्रात्रा यथा समुद्र-

विजयो हृष्टस्तथा तेन जामात्रा राजा रुधिरोऽपि हि हर्षाद्वैतमयोऽभवत्। जरासन्धोऽपि स्वसामन्तभ्रातरं ज्ञात्वा उपशान्तकोपोऽभूत्, यतः स्वकीयो गुणाधिकः कस्य हर्षाय न जायते ?। अथ प्रसङ्गमिलितैस्तै राज-स्वजनैः पवित्रदिवसे रोहिणी-वसुदेवयोर्जनितमहोत्सवो विवाहो जज्ञे। ततो रुधिरराजेन पूजिता जरासन्धादयो नृपा जग्मुः, यादवास्तु कंससहितास्तत्र वर्षं यावत् तस्थुः।

अन्यदा रहसि रोहिणीं वसुदेवोऽपृच्छत्–'हे सुन्दरि! कथं त्वया राज्ञो मुक्त्वाऽहं पटहवादकोऽपि वृतः ?'। साऽप्याचख्यौ–"अहं सदा प्रज्ञप्तिविद्याम् आर्चयम्। तया कथितम्–'तव वरो दशमो दशार्हो भावी, स तु त्वया स्वयंवरे पटहवाद्येन ज्ञेयः'। इति तत्प्रत्ययादेव तदा मया त्वं वृतोऽसि"। अन्येद्युः समुद्रविजयप्रभृतिषु सभास्थितेषु काऽप्यर्धजरती आशिषं ददती गगनादवातरत्। सा वसुदेवमुवाच–'अहं वालचन्द्राजननी धनवतीनाम्नी, त्वां पुत्र्याः कृते आकारणायाऽऽगतास्मि। मम वालचन्द्रा-वेगवतीनाम्न्यौ पुत्र्यौ स्तः, ते च दिवानिशं त्वद्विरहविधुरे तिष्ठतः'। तदा वसुदेवः समुद्रविजयराजमुखमैक्षिष्ट। राजा जगाद–'हे भ्रातः! शुभकार्यकरणाय याहि, परं पूर्ववच्चिरं मा स्थाः'। अथ समुद्रविजयं राजानं क्षमयित्वा तया धनवत्या समं वसुदेवो गगनयानेन गगनवल्लभनगरे ययौ। राजा समुद्रविजयोऽपि कंससंयुक्तः स्वकीयपुरमगात्, वसुदेवस्य चागमनमार्गं नित्यमुन्मुखः पश्यन् तस्थौ। अथ पित्रा काञ्चनदंष्ट्रेण विद्याधरस्वामिना कल्पितां वालचन्द्राकन्यां वसुदेवः परिणिनाय।

पाणिग्रहीकृतकलत्रगणं गृहीत्वा, स्थानादथो निजनिजात् सकलं स पूर्वम् ।
विद्याधरैः परिवृतः समलंचकार, श्रीवासशौर्यपुरमिन्द्रसमः क्रमेण ॥ १ ॥
विमलमणिविमानाद् यावदुत्तीर्य बन्धुं, स मिलति समभूत्पूस्तावदत्यन्तहर्षा ।
सुभटनतपदाब्जः श्रीसमुद्रोऽनुजस्या-ऽतनुतरमतनोत्तान्तं परीरम्भमुच्चैः ॥ २ ॥

इति श्रीमत्कनकविजयगणिचरणपङ्कजभ्रमरसदृश-गुणविजयगणिविरचिते श्रीमदरिष्टनेमिचरिते सुललितगद्यबन्धे वसुदेवहिण्डिवर्णनो नाम चतुर्थः परिच्छेदः ॥

## ॥ अथ पञ्चमः परिच्छेदः ॥

इतश्च हस्तिनापुरनगरे कोऽपि श्रेष्ठ्यभूत् । तस्य च ललितनामा पुत्रो मातुरतीव वल्लभोऽस्ति । अन्यदा श्रेष्ठिन्या भृशं सन्तापदायी गर्भो जज्ञे, तया विविधानेकद्रव्यैः पात्यमानोऽपि गर्भो नाऽपतत्, श्रेष्ठिन्याः पुत्रश्च जातः । तया स दास्यै त्यक्तुमर्पितः, श्रेष्ठिना दृष्टः । 'किमेतद् ?' इति दासी पृष्टा जगाद–'असावनिष्टो बालः श्रेष्ठिन्याऽत्याज्यत' । इति तयोक्ते श्रेष्ठी तं गृहीत्वाऽन्यत्र छन्नमवर्धयत् । पिता तस्य बालस्य

'गङ्गदत्त' इति नाम ददौ । मातुश्छन्नं तं सदा ललितोऽपि लालयामास । अन्येद्युर्मधूत्सवे पितरं ललितो जगाद—'हे तात ! अद्य गङ्गदत्तो यदि सह भोज्यते तदा शोभनम्' । श्रेष्ठ्यूचे—'यदि तव माता तं पश्येत्तदा न शोभनम्' । ललितोऽप्यवदत्—'तात ! मातुरदर्शनेऽहं यतिष्ये' । श्रेष्ठिनापि तदाऽनुज्ञाते ललितो गङ्गदत्तं तिरस्करिण्याऽन्तरितं हर्षेण भोजनार्थं न्यपेदयत् । तौ श्रेष्ठि-ललितौ पुरस्तात् स्वयमुपविष्टौ भुञ्जानौ गङ्गदत्ताय च्छन्नं भोज्यं यच्छतः स्म । अथ वायूद्धूतेऽकाण्डपटे तं गङ्गदत्तं श्रेष्ठिनी ददर्श, तत्कालं केशैर्गृहीत्वा कुट्टयित्वा च गृहनिर्धमनेऽक्षिपत् । तदोद्विग्नौ महामती श्रेष्ठि-ललितौ श्रेष्ठिन्याश्छन्नमेव तं गङ्गदत्तं स्नपयित्वाऽबोधयताम् । तदा तत्र साधवो भिक्षार्थमागताः, ताभ्यां च श्रेष्ठिन्यास्तत्पुत्रवैरकारणं पृष्टाः । अथैकः साधुरिति जगाद—

"एकस्मिन् सन्निवेशे भ्रातरौ अभूताम् । तौ काष्ठार्थं बहिरीयतुः । काष्ठैर्गन्त्रीं भृत्वाऽग्रे ज्येष्ठभ्राताऽचलत्, तदा पथि वेल्लन्तीं चक्रलुण्डां महोरगीं ददर्श । तां दृष्ट्वा स गन्त्रीसारथिं लघीयांसं भ्रातरमुवाच—'भ्रातः ! इयं वराकी चक्रलुण्डा गन्त्रीतो रक्षणीया' । तन्निशम्य सा सर्पिणी हृष्टा विश्वासभागभवत् । तत्रागतः कनिष्ठस्तां प्रेक्ष्य एवमवोचत्—'इयं ज्येष्ठेन रक्षिताऽस्ति, तथाप्यहमस्या उपरि एतदस्थिभङ्गस्वरं हर्षेण श्रोतुं गन्त्रीं नेष्ये' । स च क्रूरस्तथाऽकरोत् । तच्छ्रुत्वा साऽपि चक्रलुण्डा 'कोऽप्येष मद्वैरी' इति चिन्त-

१ जवनिकया । २ लुठन्तीम् ।

यन्ती मृत्वा हे श्रेष्ठिन् ! इयं तव भार्या जज्ञे । स ज्येष्ठभ्राताऽस्याः पुत्रो ललितोऽभूत्, प्राग् रक्षितत्वेनाऽतीव वल्लभोऽस्ति । कनिष्ठोऽपि च अस्या एव पुत्रो गङ्गदत्तः पुरातनवैरेणाऽनिष्टो वभूव । वल्लभाऽवल्लभत्वं पूर्वकर्मणाऽभूत्, तत्तु नान्यथा भवति"।

ततो विरक्ताः पिता पुत्रौ च ते त्रयोऽपि दीक्षां जगृहुः । श्रेष्ठि-ललितावुभावपि महाशुक्रदेवलोके जग्मतुः । अथ गङ्गदत्तो मातुरनिष्टतां स्मरन् विश्ववल्लभत्वनिदानं कृत्वा मृत्वा च महाशुक्रे ययौ । ततश्च महाशुक्रच्युतो ललितजीवो वसुदेवभार्याया रोहिण्या उदरेऽवातरत् । रोहिणी निशाशेषे गज-सिंह-चन्द्र-समुद्रान् वलदेवजन्मसूचकान् स्वमुखे प्रविशतः स्वप्नेऽपश्यत् । अथ समये रोहिणी राज्ञी रोहिणीरमणसमानं[1] सुतं सुषुवे । तस्य जन्मोत्सवं मागधादयो राजानश्चक्रुः । सर्वेषां रमणत्वात् पिता तस्य 'राम' इति नाम ददौ । क्रमाच्च सर्वेषां मनांसि रमयन् ववृधे । सर्वाः कला गुरुजनान्तिके रामो जग्राह, किं वहुना ?, आदर्शे प्रतिविम्बमिव तस्मिन् सकलाः कलाः संचक्रमुः । अथाऽन्येद्युर्वसुदेव-कंसादिपरीवारपरिवारिते समुद्रविजयराजे सभोपविष्टे सति स्वच्छन्दो नारदमुनिरागात् । समुद्रविजयादयः सर्वेऽपि अभ्युत्थाय तं पूजयामासुः । तेषां च पूजया हृष्टः प्रीतश्च नारदोऽन्यत्र गन्तुं गगने उत्पपात, यतः स सदा स्वैरचारी । तदा कंसेन 'कोऽसौ ?' इति पृष्टो राजा समुद्रविजय इदमवादीत्—'प्राग् अस्मात्पुराद्बहिर्यज्ञयशास्तापसोऽभवत् । तस्य

१ चन्द्रसदृशम् ।

यज्ञदत्ता भार्या, सुमित्रनामा सुतः। सुमित्रस्य पत्नी नाम्ना सोमयशा अभवत्। जृम्भकदेवानां मध्याद्देवश्च्युत्वा सोमयशःकुक्षौ अवातरत्, स एष नारदः। ते तापसा एकदिवसमुपोष्य द्वितीयदिने वनमुपेत्य सदापि हि उञ्छेन पारयन्ति। तेऽन्यदाऽशोकतरुतले नारदं न्यस्य उञ्छाय ययुः, तदा ते जृम्भकास्तं बालं महाकान्तिं ददृशुः। अवधिज्ञानेन प्राग्मित्रं ज्ञात्वा तदा तदुपरि स्थिताम् अशोकच्छायामस्तम्भयन्, ततः स्वकार्याय ययुः। सिद्धकार्या वलितास्तु तं दृष्ट्वा जगृहुः, स्नेहेन च वैताढ्यपर्वते निन्यिरे। तैः सुरैः स्तम्भितच्छायः सोऽशोकस्तत्प्रभृति 'छायावृक्ष' इति पृथिव्यां ख्यातोऽभवत्। स बालो जृम्भकैर्वैताढ्यगिरिकन्दरायां पालितोऽष्टवार्षिकः सन् प्रज्ञप्तिप्रभृतीर्विद्याः शिक्षितः। ताभिर्विद्याभिः कृत्वा गगनगतिरस्ति। अयम् अस्यामवसर्पिण्यां नवमो नारदश्चरमशरीरी च। इयं नारदोत्पत्तिस्त्रिकालज्ञानवता सुप्रतिष्ठमुनिना मम कथिताऽस्ति। अयं प्रकृत्या कलहप्रियोऽवज्ञातश्च कोपाक्रान्तो भवति, एकत्र स्थाने चाऽनवस्थायी सर्वत्रापि पूजां प्राप्नोति"।

अन्यदा मथुरापुरीगतेन कंसेन स्नेहाद् वसुदेव आकारितः, तदा वसुदेवः समुद्रविजयनृपमनुज्ञाप्य मथुरानगर्यां गतः। तत्रान्यदा कंसो जीवयशःसहितो वसुदेवमूचे–'हे मित्र! मृत्तिकावतीनाम्नी गरीयसी नगरी विद्यते। तस्यां मम पितृव्यो देवकनामा नृपोऽस्ति। तस्य देवकन्योपमा देवकीनाम्नी सुता वर्तते, तां त्वं परिणय। अहमेव तवानुचरोऽस्मि, अतो ममाऽमुष्याः स्नेहप्रार्थनायाः खण्डनं मा कृथाः'।

इत्युक्तो दाक्षिण्यनिधिर्वसुदेवः कंसेन समं मृत्तिकावतीपुरीं प्रति चचाल, मार्गे च नारदमद्राक्षीत् । ताभ्यां वसुदेव-कंसाभ्यां पूजितः प्रीतः सोऽपृच्छत्–'युवां कुतो हेतोः कुत्र चलितौ ?' । तदा वसुदेव उवाच–'मित्रेण कंसेनाऽहं देवकनृपपुत्रीं देवकीं परिणाययितुं चालितोऽस्मि' । नारदो जगाद–'कंसेन साधु आरब्धम्, ईदृशं निर्मायाऽपि अनुरूपाणां योगे विधाताऽपि मूर्खः । हे वसुदेव ! यथा नरेषु त्वं रूपेणोत्कृष्टस्तथा नारीषु निश्चितं सा देवकी रूपरेखाऽस्ति, यतो देवकीं प्रेक्ष्य त्वया परिणीता विद्याधर्योऽपि हि हीनतरा मंस्यन्ते । अस्मिन् योगे कोऽपि विघ्नो मा भूद्, अतो हे वसुदेव ! तत्र गत्वा भवद्गुणान् देवक्यै अहमाख्यामि' । इत्युक्त्वा गगने उत्पत्य स नारदो देवकीगृहं ययौ । तया पूजितश्चाशीर्वादं ददौ–'हे कुमारि ! तव वरो वसुदेवो भवतु' । तदा तया 'वसुदेवः कः ?' इत्युक्तो नारदोऽवदत्–'मन्मथमथनरूपो युवा विद्याधरनारीप्रियो दशमो दशार्हस्त्वया किं न श्रुतः ?, स तु आबालगोपालप्रतीतः । किमन्यत् ?, यस्य रूपेण सौभाग्येन च तुल्या देवादयोऽपि न, स वसुदेवः' । इति कथयित्वा नारदस्तिरोदधे । तद्वचनेन देवक्या हृदये वसुदेवः प्रविवेश । अथ वसुदेव-कंसौ शीघ्रं मृत्तिकावत्यां पुर्यामागतौ । देवकनृपेण पूजितौ, योग्यासने चाऽऽसयित्वा तौ आगमनकारणं पृष्टौ । तदा कंसोऽवादीत्–'वसुदेवायोचितां देवकीं दापयितुमहमत्राऽऽगाम्, इदमागमनकारणम्' । तदा देवको जगाद–'कन्यार्थं वरस्य स्वयमेवागम इत्येष विधिर्न, अतोऽस्मै अहं देवकीं न दास्यामि' । इति श्रुत्वा तौ द्वावपि विलक्षौ निजसैन्यशिबिरमीयतुः ।

देवकस्तु अन्तःपुरं प्राविशत् । अथ देवक्या हर्षेण देवको नमस्कृतः । सोऽपि 'हे पुत्रि ! अनुरूपं वरं लभस्व' इति तस्या आशिषं ददौ । पश्चाद्देवको निजदेव्यै कथयामास–'अद्य कंसो वसुदेवाय देवकीं दापयितुमुद्यतो मां याचितवान्, परमहं तद्विरहासहो देवकीं तस्मै नाऽदाम्' । तच्छ्रुत्वा राज्ञी विषादं प्राप, देवक्यपि च दुःखातुरा रुरोद । अथ तयोर्भावं ज्ञात्वा देवकोऽब्रवीत्–'विषादेन सृतम्, युवां प्रष्टुमहमत्रागमम्' । तदा देव्यूचे–'देवक्या वरो वसुदेव उचितः, अस्या वरणाय पुण्यैरसौ स्वयमेवागात्' । इत्युक्तो देवकस्तु पूर्वापमानितौ कंस-वसुदेवौ मन्त्रिणा तत्कालमानाययामास । पवित्रदिने गीयमानैर्धवलमङ्गलैर्महामहोत्सवेन च तयोर्वसुदेव-देवक्योर्विवाहो जज्ञे । करमोचने राजा देवको वसुदेवाय भूरिशः स्वर्णादि धेनुकोटिसहितं दशगोकुलस्वामिनं नन्दं च ददौ । ततो वसुदेव-कंसौ नन्दसहितौ मथुरापुरीमीयतुः, मित्रविवाहोत्सवकार्यं च कंस आरेभे । अथ पूर्वगृहीतदीक्षः कंसलघुभ्राताऽतिमुक्तमुनिस्तपसा दुर्बलकायः पारणाय कंसगृहे आगात् । तदा जीवयशाः कंसपत्नी मद्यपानोन्मत्ता तं साधुं दृष्ट्वा जजल्प–'देवर ! अस्मिन् महोत्सवे त्वं साधु समागतोऽसि, मया सार्धं नृत्य गाय' इत्यादि तया बहुधा कण्ठे लगित्वा स साधुर्गृहस्थवत् कदर्थितः । सोऽपि ज्ञानी खेदितः सन्नेवं कथयामास–'यन्निमित्तोऽयं महोत्सवः क्रियते तस्य सप्तमो गर्भस्तव पति-पित्रोर्हन्ता भविष्यति' । तद्वचनं भयङ्करं श्रुत्वा जीवयशास्तत्कालं भयकम्पिता गतमद्यपानमदा तं मुनिं मुमोच । सा शीघ्रं गत्वा कंसाय कथयामास । सोऽप्येवं चिन्तयामास–'वज्रमपि

मोघीस्यात् परं मुनिभाषितं नान्यथा भवेत्। अथवा यावत् कोऽपि न जानाति तावत् सप्तापि अनागतान् देवकीगर्भान् वसुदेवं मार्गयामि। यद्ययं याचितो मम सुहृद् वसुदेवो गर्भान् न दास्यति तदाऽन्यमुपायं करिष्ये यथा स्वात्मनः क्षेमं भवेत्'। एवं विचिन्त्य अमदोऽपि मदावस्थां नाटयन् स कंसो वसुदेवसमीपं जगाम, दूराचाऽञ्जलिमकार्षीत्। वसुदेवोऽपि ससम्भ्रममुत्थाय तं यथोचितासने आरोप्य स्वकरेण परामृश्य च जगाद—'मित्र ! त्वं मे प्राणप्रियोऽसि, किञ्चिद्दुःखमना इव च दृश्यसे, ततः कथय, यत्त्वं ब्रवीषि तदहं करोमि'। तदा कंसः कृताञ्जलिरुवाच—'मित्र ! अग्रेऽपि जरासन्धनृपाज्जीवयशोदापनेन त्वयाऽहं कृतार्थः कृतः, अथ भविष्यतः सप्त देवकीगर्भान् जातमात्रान् त्वं ममाऽर्पयेः, इत्यहं साम्प्रतं त्वां याचे'। तच्छ्रुत्वा सरलचित्तो वसुदेवस्तथा प्रतिपन्नवान्। परमार्थाऽनभिज्ञा देवक्यपि एवमब्रवीत्—'हे कंस ! इदमस्तु, वसुदेवपुत्राणां तव पुत्राणां चान्तरं नास्ति। त्वय्यैवाऽऽवयोर्विधात्रेव योगो व्यधायि, तर्हि अद्य किं त्वमनधिकारी वर्तसे यददो व्याकरोषि ?'। वसुदेवोऽपि जगाद—'हे सुभ्रु ! बहुभाषितैः सृतम्, तव जातमात्राः सप्त गर्भाः कंसाय दत्ता भवन्तु'। कंसो मदिरामत्तमिषतो वसुदेवमूचे—'भवताऽयं ममोपरि प्रसादः कृतः'। ततः स उन्मत्तो वसुदेवेन समं मदिरां पीत्वा स्वगृहे ययौ। पश्चाद् वसुदेवोऽतिमुक्तमुनिवृत्तान्तमश्रौषीत्, तदा 'हा ! कंसेन च्छलितोऽस्मि' इति सत्यवाग् अन्वतप्यत।

इतश्च भद्दिलपुरनगरे नागनामा महेभ्यः श्रेष्ठ्यभूत्, तस्य भार्या सुलसा, तौ हि परमश्रावकौ। सुल-

साया वाल्यावस्थायाम् अतिमुक्तश्चारणर्षिरित्याचख्यौ–'असौ वाला मृतवत्सैव भविष्यति' । ततस्तया तपसा हरिणैगमेषी सुर आराधितः, तुष्टश्च। तत्पार्श्वे पुत्रा याचिताः। सोऽप्यवधिज्ञानेन ज्ञात्वा तामिति जगाद–'कंसेन मारणाय मार्गितान् देवकीगर्भान् सुलसे! तव गर्भसंचाराद् अर्पयिष्यामि'। इत्युक्त्वा स स्वशक्त्या देवकी-सुलसे सार्द्धं रजस्वले व्यधात्, सार्द्धं गुर्विण्यौ वभूवतुः, ते सार्द्धं च सुषुवाते। स सुरः सुलसाया मृतं गर्भं देवक्यां संचार्य देवकीगर्भं सुलसायै ददौ। एवं तयोर्देवकी-सुलसयोः षड् गर्भान् स देवः परावर्तयत्। कंसोऽपि तान् मृतान् गर्भान् शिलायां गाढमास्फालयत्। ते षड् देवकीपुत्रास्तु तस्याः सुलसाया गृहे स्वपुत्रवत् स्तनन्धया अवर्धन्त। तेषां चैतानि नामानि–अनीकयशा अनन्तसेनोऽजितसेनो निहतारिर्देवयशाः शत्रुसेनः।

अथैकदा ऋतुस्नाता देवकी निशान्ते गज-सिंह-सूर्य-ध्वज-विमान-पद्मसरोवर-वह्नीन् एतान् सप्त स्वप्नान् वासुदेवजन्मसूचकान् ददर्श। महाशुक्रदेवलोकाद् गङ्गदत्तजीवश्च्युत्वा तस्याः कुक्षौ अवातरत्। आकरभूमी रत्नमिव सा देवकी गर्भं धारयामास। अथ श्रावणाऽसिताष्टमीनिशायां शुभवेलायां देवसान्निध्यसहितं वैरिकुलकाननकुठारसमानं कृष्णं नन्दनवरं सा राज्ञी सुषुवे। तदधिष्ठायिन्यो देवताः स्वशक्त्या कंसमुक्त प्राहरिकपुरुषान् उपभुक्तविषानिव स्वापयामासुः। तदा पतिमाकार्य देवकी जगाद–'प्रियतम! मित्ररूपेणाऽप्यमित्रेण पाप्मना कंसेन त्वं वाचा नियन्त्रितोऽसि। जातं जातं मम सुतमसौ पापिष्ठो हन्ति,

तद् माययाऽप्यमुं महाप्रभावं पुत्रं रक्ष। बालरक्षणाद् मायाऽपि नो पापाय जायते। ततोऽमुं बालं गृहीत्वा नन्दस्य गोकुले मुञ्च, तत्र मातामहगृहे इवाऽसौ वर्धिष्यते'। इति श्रुत्वा तां 'साधु साधु' इति वदन् स्नेहवान् वसुदेवस्तं बालं गृहीत्वा सुप्तप्राहरिकाद् गृहाद् निर्ययौ। तस्य बालस्योपरि देवताश्छत्रं दधुः, पुष्पवृष्टिं चक्रुः, अष्टभिर्दीपैश्च मार्गे उद्द्योतमकार्षुः। पुनर्देवतास्तस्य बालस्य पुरो भूत्वा धवलवृषभरूपेणाऽन्यैरज्ञातं पुर्या द्वाराणि उद्घाटयामासुः। वसुदेवो गोपुरे प्राप्तः। तत्र काष्ठपञ्जरस्थेन उग्रसेनभूभुजा 'किमेतद् ?' इति विस्मयतः पृष्टः, तदा 'अयं कंसस्य क्षयकारी' इत्युक्त्वा वसुदेवस्तं बालमुग्रसेननृपाय दर्शयन् सहर्षमिदं कथयामास—'हे राजन्! अस्मात् त्वद्वैरिनिग्रहो भविष्यति, अस्माच्च तवोदयोऽपि भविता, परं त्वया कस्यापि नाख्येयम्'। तेनापि 'एवं भवतु' इत्युक्ते वसुदेवो नन्दगृहे ययौ। तस्य भार्या यशोदाऽपि तदैव सुतां सुषुवे। वसुदेवः स्वसुतं यशोदायै अर्पयित्वा तत्सुतामानीय देवकीपार्श्वे तत्क्षणात् सुतस्थानेऽमुचत्, ततश्च वसुदेवो निरगात्। ते च कंसपुरुषाः प्रबुद्धाः, 'किं जातम् ?' इति वदन्तस्तत्र तां सुतां ददृशुः। अथ ते तां बालां कंसायार्पयन्। तदा सोऽपि दध्यौ—'यो हि मम मारणाय सप्तमो गर्भो भावी सोऽसौ स्त्रीमात्रमभूत्!, ततोऽहं मुनिवचनं मिथ्या मन्ये, अनया हतया किम् ?'। इति विचार्य स च्छिन्नैकनासापुटां कृत्वा तां बालां देवक्या आर्पयत्।

अथ कृष्णाङ्गत्वात् 'कृष्ण' इति नाम्ना आकारितः स बालो देवीभी रक्ष्यमाणो नन्दगृहे ववृधे। देवकी

तु एकमासे गते वसुदेवमुवाच–'पुत्रं द्रष्टुमहमुत्कण्ठिताऽस्मि, ततस्तत्र गोकुले यास्यामि'। तदा वसुदेव ऊचे–'अकस्मात् त्वं यान्ती कंसेन लक्षिष्यसे, तस्मात् कारणमुत्पाद्य हे सुभगे! तत्र गन्तुं युज्यते। ततो नगुरीभिः सहिता सर्वतो गोपथेन धेनूः पूजयन्ती त्वं गोकुलं गच्छेः'। देवक्यपि तथैवाऽकार्षीत्। तत्र देवकी श्रीवत्सराजितहृदयं मरकतरलशरीरकान्तिं चक्रादिचिह्नकरचरणं विकस्वरपुण्डरीकलोचनं यशोदोत्सङ्गस्थितं हृदयानन्ददायिनं स्वपुत्रं ददर्श। पुत्रविरहाऽसहा सा देवकी गोपूजामिषाद् तत्र नित्यं ययौ, तत्प्रभृति लोके गोपूजाव्रतं प्रवृत्ते।

तदा च सूर्पकस्य शकुनि-पूतनाभिधाने उभे पुत्र्यौ स्वपितुर्वैरेण वसुदेवापकारकरणायाऽसमर्थे शाकिनीवच्छलं लब्ध्वा यशोदा-नन्दरहितम् एकाकिनं कृष्णं हन्तुं तत्र गोकुले ईयतुः। शकुनिः शकटे चटिता तदधःस्थे कृष्णे कटु व्यरौत्, पूतना तु कृष्णमुखे विषलिप्तं स्तनमक्षिपत्। तदा तत्क्षणादपि कृष्णसान्निध्यकारिण्यो देवतास्तेनैव शकटेन ते उभे प्रहृत्याऽमारयन्। पश्चात्तत्रागतो नन्द एकाकिस्थितं कृष्णं, पर्यस्तं तत् शकटं, ते च खेचर्यौ मारिते अपश्यत्। 'अहं मुषितोऽस्मि' इति जल्पंश्च नन्दः कृष्णमुत्सङ्गे निधाय साक्षेपं गोपालान् जगाद–'भो भोः! शकटः कथं पर्यस्तः?, एते च राक्षसाविव रक्तलोचने के?, अयं ममैकाकी वत्सो भाग्येनैवाऽद्य जीवितः'। तदा गोपा अपि जजल्पुः–'हे स्वामिन्! तव बलिना बालेनेदं शकटं पर्यस्तम्, एकेनाऽपि चैते मारिते'। तच्छ्रुत्वा नन्दः केशवं सर्वेष्वङ्गेषु अपश्यत्,

तं चाऽक्षताङ्गं दृष्ट्वा यशोदामिति जगाद—'एकाकिनं सुतं मुक्त्वा कथमन्यकर्मसु यासि ?, अतः परं त्वया कुत्रापि न गन्तव्यम् । स्तोकमपि मुक्तोऽयमद्यैवाऽपायेषु अपतत्, तस्माद् घृतघटेषु लुठत्स्वपि कृष्णमेकाकिनं मुक्त्वाऽतः परं त्वया न कुत्रापि गन्तव्यम् । अन्यकार्यैस्तव सृतम्' । इति श्रुत्वा सा यशोदाऽपि 'हा हा हताऽस्मि' इति वदन्ती करेण हृदयमाघ्नाना तदैत्य कृष्णमाददे । सर्वाङ्गविलोकनपूर्वकं 'पुत्र ! त्वं न क्षतोऽसि ?' इति तं पृच्छन्ती यशोदा शिरसि चुचुम्ब सस्वजे च । ततो नित्यं तं बालमादरेण स्वयमरक्षत् । कृष्णस्तु उत्साहशीलश्छलेनेतस्ततो ययौ ।

अन्यदा कृष्णं दाम्नोदरे बद्ध्वा तद्दामान्तं चोदूखले बद्ध्वा तद्यानभीता यशोदा प्रातिवेश्मिकगृहमगात् । तदा च सूर्पकपुत्रः पितामहसत्कं वैरं स्मरन् तत्रागत्य परस्परम् आसन्नयमलाऽर्जुनतां ययौ, स सोदूखलं कृष्णं पेष्टुं तयोश्चाऽन्तरेऽनयत् । तदा कृष्णदेवताऽर्जुनतरू भङ्क्त्वा तं जघान । ततः 'कलभेनेव कृष्णेन यमलार्जुनौ उन्मूलितौ' इति गोपालमुखान्निशम्य नन्दो यशोदया सममागात् । तौ धूलिधूसरं कृष्णं मोहाद् मस्तके चुचुम्बतुः । तं बालं गोपा उदरे दामबन्धनाद् 'दामोदर' इति कथयामासुः । गोपैर्गोपीभिश्च सोऽतीव प्राणवल्लभो दिवानिशं हृदये उत्सङ्गे मस्तके चारोप्यते स्म । स स्नेहार्द्राभिस्तत्कौतुकं पश्यन्तीभिर्गोपीभिरवार्यमाणश्चपलभावाद् मन्थनीभ्यो म्रक्षणानि जग्राह । कृष्णो व्याहरन् विहरन्

१ आसन्नेऽर्जुनवृक्षयुग्मं व्यकरोत् । २ उदूखलसहितम् ।

प्रहरन् आहरन्नपि च यशोदा-नन्द-गोपानाम् महानन्दायैव बभूव। अपायभीतास्ते तं बालं यान्तं धर्तुं नाऽशकन्, केवलं स्नेहपाशबद्धा अनुययुः। अथ वसुदेवोऽपि तेन शकुनि-पूतने हते, शकटं पर्यस्तं, यमलार्जुनौ च भग्नौ, इत्यशृणोत्। स एवं चेतसि चिन्तयामास—'मया सुतो गोपितोऽपि स्वबलेन प्रथमानोऽस्ति, एष दुष्टः कंसो मा ज्ञासीत्। किञ्चिदपि च ज्ञात्वा सोऽस्मिन् अमङ्गलं करिष्यति, ततः कृष्णस्य साहाय्ये पुत्रेभ्यः कमहं प्रेषयामि ?। ये हि अक्रूरादयः पुत्राः सन्ति ते तु क्रूरबुद्धेः कंसस्य विदिता वर्तन्ते, तद् राममादेष्टुं वरं, यतः सोऽस्याऽविदितोऽस्ति'। एवं निश्चयं कृत्वा वसुदेवः कोशलानगरीतो रामसंयुक्तां रोहिणीमानाय्य संभाष्य च शौर्यपुरनगरे प्रैषीत्। ततः सोऽन्यदा राममाहूय यथातथं कथयित्वा शिक्षां च दत्त्वा पुत्रत्वेन नन्द-यशोदयोरार्पयत्। तौ द्वावपि भ्रातरौ दशधनुस्तुङ्गौ सुन्दररूपधारिणौ मुक्ताऽन्यकार्याभिर्गोपीभिर्विलोक्यमानौ स्वेच्छया रेमाते। कृष्णो गोपोपनीतोपकरणः सदा रामसमीपे धनुर्वेदम् अन्या अपि सकलाः कला अधीते स्म। कदाचित्तौ भ्रातरौ सुहृदौ भूत्वा कदाचिच्च शिष्याचार्यौ भूत्वा एकक्षणमप्यवियोगिनौ विविधां चेष्टां क्रीडां च कुर्वाते स्म। मत्तवृषभान् गच्छतः कृष्णः पुच्छे जग्राह, भ्रातृबलं जानन् राम उदासीन इवाऽपश्यद्, मनसि च चमत्कारं प्राप। यथा यथा हि कृष्णस्तत्र ववृधे तथा तथा तद्विलोकनाद् गोपाङ्गनानां मदनविकारो जज्ञे। तं कृष्णं मध्ये कृत्वा गोप्यो रासम् अरमन्त, वसन्तखेलनं च चक्रुः। यथा भ्रमर्यः कमलं क्षणमपि नो मुञ्चन्ति तथैव तं मनागपि

नाऽमुञ्चन् । यथा तं पश्यन्त्यो गोपस्त्रियो नयने नाऽमीलयन् तथैव 'कृष्ण कृष्ण' इति वदन्त्य ओष्ठपुटे अपि न ह्यमीलयन् । कृष्णे गतचित्तत्वाद् अग्रे पतितान्यपि भाण्डानि अजानत्यो गवां दोहनं कदापि पृथ्व्यां ताश्चक्रुः । कदापि पराङ्मुखं कृष्णं गच्छन्तं सम्मुखीकर्तुं ताः शीघ्रम् अस्थानेऽपि त्रासमनाटयन्, यतः स सदैव सर्वत्र त्रस्तत्राणे तत्पर आसीत् । निर्गुण्डीप्रभृतिपुष्पैर्मालां ग्रथित्वा गोप्यः स्वयं स्वयंवरमालामिव कृष्णकण्ठे आरोपयामासुः । ताः कृष्णात् शिक्षामिषतः प्रसादवचनालापलिप्सवो गीत-नृत्यादौ बुद्धिपूर्वकं स्खलितं चक्रुः । येन केन प्रकारेणाऽगोपितमदनविकारा गोप्यस्तं गोपेन्द्रं कृष्णं जजल्पुः पस्पृशुश्च । मयूरपिच्छविभूषणः कृष्णो गोपीभिरविच्छिन्नं पूर्यमाणश्रुतिर्वाद्यमानवादित्रेण मञ्जुलस्वरेण गानमकरोत् । कदाचित् प्रार्थितः कृष्णोऽगाधजलस्थान्यपि कमलानि हंस इव लीलया तरन् उद्धृत्य गोपीभ्यो ददौ । 'दृष्टोऽयं कृष्णोऽस्माकं चित्तं हरति, अदृष्टश्च जीवितं हरति, हे राम ! तव भ्रातैवंविधोऽस्ति' इति कदाचित् तास्तस्य रामस्योपालम्भं ददुः । कदाचित् पर्वतशिखरस्थितो वेणुं मधुरस्वरं वादयन् नृत्यंश्च रामं हासयामास । कृष्णगोपेन्द्रे नृत्यति सति गोपस्त्रीषु च गायन्तीषु रामो रङ्गाचार्य इव हस्ततालं ददौ । एवं च विविधक्रीडया क्रीडतो राम-कृष्णयोरेकादश वर्षाणि सुषमाकालवत् सुखेन जग्मुः ।

## भगवतः श्रीनेमिनाथस्य जन्म ।

इतश्च शौर्यपुरनगरे समुद्रविजयराजप्रिया शिवादेवी निशाशेषे चतुर्दश महास्वप्नानपश्यत् । तेषां

चैतानि नामानि—गजो वृषभः सिंहो लक्ष्मीः पुष्पमाला चन्द्रः सूर्यो ध्वजः कुम्भः पद्मसरोवरं सागरः सुरविमानं रत्नपुञ्जो निर्धूमवह्निश्चेति। तदा च कार्तिकमासे कृष्णपक्षे द्वादश्यां तिथौ विधौ चित्रानक्षत्रस्थितेऽपराजितचतुर्थाऽनुत्तरविमानात् शङ्खश्च्युत्वा शिवादेवीकुक्षौ अवातरत्। तदाऽन्तर्मुहूर्तं नारकाणामपि सुखमुत्पेदे, जगत्त्रये उद्द्योतो वभूव, अर्हतां कल्याणे हि ईदृशमवश्यं भवत्येव। तत्कालं शिवादेवी प्रबुद्धा तान् स्वप्नान् पत्युः कथयामास। स्वप्नार्थं प्रष्टुमाकारितः क्रोष्टुकिस्तत्रायर्यौ। तत्र चैकश्चारणर्षिस्तदैवागात्। नृपेणोत्थाय स वन्दितः, महासने च न्यपादि। क्रोष्टुकिसहितः स मुनिर्नृपेण स्वप्नफलं पृष्टः। तदा स आख्यत्—'हे राजन्! तव त्रिजगत्पतिस्तीर्थङ्करः सुतो भावी' इत्युक्त्वा स साधुर्जगाम। तौ राजा राज्ञी च सुधारसैः स्नाताविव हर्षं विभराञ्चक्रतुः। शिवादेवी सुखावहं गूढं गर्भं धारयामास। उदरस्थितो गर्भः प्रत्यङ्गमपि लावण्य-सौभाग्योत्कर्षदायी अभूत्। अथ श्रावणमासे शुक्लपञ्चम्यां निशायां चित्रागते चन्द्रे सा देवी मरकतरत्नतुल्यकायकान्तिं शङ्खलाञ्छनशोभितं सुतं सुषुवे। ततः षट्पञ्चाशद्दिक्कुमार्यो निजनिजस्थानेभ्य आगत्य शिवादेवी-जिनेश्वरयोः सूतिकर्माणि चक्रुः। सौधर्मेन्द्र एत्य मातुः समीपे प्रभोः प्रतिविम्बं विमुच्य च पञ्चरूपीभूय एकेन रूपेण स्वामिनमाददे, द्वाभ्यां रूपाभ्यां चामरौ, एकेन रूपेणोज्ज्वलं छत्रं, एकेन च रूपेण प्रभोरग्रे वज्रमुल्लालयन् नर्त्तक इव नृत्यं कुर्वन् परमभक्त्या मेरुशिखरेऽतिपाण्डुकम्बलां शिलां जगाम। स्वामिनं स्वाङ्के आरोप्य तत्राऽधिसिंहासनं शक्रो निषसाद।

अथाऽच्युतप्रमुखा इन्द्रास्त्रिषष्टिरपि भक्त्या जिनाधिपं स्नपयामासुः । ततः शक्रोऽपि ईशानेन्द्राङ्के स्वामिनं स्थापयित्वा विधिपूर्वकमस्नपयत्, दिव्यैः पुष्पादिभिश्च पूजयामास । ततः प्रभोरारात्रिकं कृत्वा नत्वा च कृताञ्जलिरिति स्तोतुं भक्तिनिर्भरेणारेभे—"हे शिवगामिन् शिवादेवीकुक्षिशुक्तिमुक्ताफल! प्रभो! हे शिवाङ्करत्न ! अस्माकं शिवाय भव । हे द्वाविंशतीर्थङ्कर ! करतलगतमोक्षसुखाय ज्ञातसकलपदार्थाय विविधलक्ष्मीनिधानाय तुभ्यं नमोऽस्तु । हे जगद्गुरो ! अयं हरिवंशोऽद्य पवित्रो जातः, भरतभूमिश्चाद्य पवित्राऽभूद्, यत्र चरमशरीरी तीर्थराजस्त्वमवातारीः । हे त्रिभुवनवल्लभ ! वल्लीविताने मेघ इव कृपायास्त्वमेवैक आधारः, ब्रह्मचर्यस्यैकं स्थानकम्, ऐश्वर्यस्य चैक आश्रयस्त्वमेवाऽसि । हे जगत्पते ! भवतो दर्शनेनाऽपि निश्चितं प्राणिनां मोहविध्वंसाद् देशनाकर्म सिध्यति । हे हरिवंशकुलकाननजलधर ! कारणं विना त्वं त्राता, कारणं विना त्वं वत्सलः, कारणं विना त्वं सर्वेषां भरण-पोषणकर्ता । हे प्रभो ! अद्याऽपराजितानुत्तरविमानादपि भरतक्षेत्रमुत्तमं जातं यत्र लोकानां बोधिदाता त्वमवातारीः । हे नाथ ! त्वत्पादा मन्मानसे राजहंसतां भजन्तु, त्वद्गुणगानेन च मम वाणी सफला भवतु" । इति जगन्नाथं स्तुत्वा गृहीत्वा च श्रीशिवादेवीसमीपे नीत्वा यथास्थिति मुमोच । स्वामिनः पञ्चाऽप्सरसो धात्रीरादिश्य शक्रो नन्दीश्वरे यात्रां कृत्वा स्वस्थानमगात् । प्रातःकाले सूर्यमिवोद्यन्तं महाद्युतिं पुत्रं प्रेक्ष्य राजा समुद्रविजयो हृष्टो जन्मोत्सवं चकार । अस्मिन् बाले गर्भगे मात्राऽरिष्टरत्नमयी चक्रधारा चतुर्दशस्वप्नविलोकनानन्तरं दृष्टा,

तदनुसारेण तस्य बालस्य 'अरिष्टनेमि'रिति नाम तत्पिता ददौ। अरिष्टनेमिनो जन्म निशम्य वसुदेवादयो हर्षप्रकर्षेण मथुरानगर्यां महोत्सवं चक्रुः।

अन्येद्युः कंसो देवकीं द्रष्टुं वसुदेवगृहे आगात्, तदा तां छिन्नैकनासापुटां कन्यामपश्यत्। अथ भीतो गृहमागत्य नैमित्तिकोत्तममपृच्छत्—'सप्तमो देवकीगर्भो मद्भागिनेयो यो मम हन्ता मुनिनोक्तोऽभूत् तदधुना वृथा वा न?'। तदा सोऽभाषत—"ऋषिभाषितं न मृषा। देवकीसप्तमगर्भस्तवाऽन्तकर्ता क्वचिदस्ति, तस्य प्रत्ययकारणानि शृणु—यस्तवाऽरिष्टनामा षण्ढो[1]ऽस्ति, केशिनामा महावाजी[2], दुर्दान्तौ च खर-मेषौ[3], एतान् सर्वान् वृन्दावने मुत्कलान् मुञ्च। यस्तत्र यदृच्छया क्रीडन् गिरिसारानप्यमून् हनिष्यति स देवकीसप्तमपुत्रस्तव हन्ता भावी। अन्यच्च, यत्तव गृहे क्रमागतं शार्ङ्गं धनुस्त्वज्जनन्या पूज्यमानमस्ति तद् य आरोपयिष्यति स एव तव हन्ता, ज्ञानिना कथितमस्ति यद् एतद्धनुरन्यपुरुषैर्दुःस्पर्शम् अवश्यं भविष्यतो[4] दोष्मतो वासुदेवस्य भविष्यति। तथा स कालियनागस्य दमकः, चाणूरमल्लस्य घातकः, तव पद्मोत्तर-चम्पकनाम्नोश्च गजयोर्विनाशकः"। इति श्रुत्वा भयभ्रान्तः कंसः स्वशत्रुं ज्ञातुम् अरिष्टादीन् वृन्दावनेऽमुञ्चत्, चाणूर-मुष्टिकौ च मल्लौ श्रमायादिदेश। तदा शरदि सोऽरिष्टो मूर्तिमदरिष्टमिव[5] वृन्दावनान्तर्व्रजन् गोपा-

१ वृषभः। २ महानश्वः। ३ गर्दभ-मेढ्रौ। ४ भाविनः। ५ अशुभम्।

ललोकमुपाद्रवत् । स वृषभः शृङ्गाग्रेण तटीपङ्कमिवोच्चैर्गा उद्दध्रे, नखाग्रेण चाऽनेकशो घृतभाण्डान्यलोठयत् । तदा 'हे कृष्ण कृष्ण ! हे राम राम! त्रायस्व त्रायस्व' इत्युच्चैरतिदीनो गोप-गोपीनां कोलाहलोऽभवत् । तदा रामेण समं कृष्णः 'किमेतद् ?' इति चिन्तयन् ससम्भ्रमस्तत्कालं धावितः, अग्रतश्च तं महाबलं षण्ढमपश्यत् । 'अस्माकं गोभिर्न कश्चिदर्थः, न चाऽऽज्यै[1]रपि किञ्चित्कार्यं, तदत्रैव तिष्ठ' इति वृद्धमनुष्यैर्वारितोऽपि कृष्णस्तं वृषभमाह्वास्त[2] । सोऽप्यरिष्टवृषभ उच्चैः शृङ्गे उन्नमय्य, रोषेणाऽऽकुञ्चितमुख उत्पुच्छयमानः[3] कृष्णायाऽभ्यधावत । हरिस्तं शृङ्गयोर्गृहीत्वा तद्गलकन्दलं शीघ्रं वालयित्वा निरुच्छ्वासं च कृत्वाऽवधीत् । अरिष्टे मारिते सति सर्वेऽपि गोपाः सस्त्रियो हृष्टाः कृष्णं पूजयामासुः, सतृष्णाश्च तं निर्निमेषमपश्यन् । अन्यदा च कृष्णस्य क्रीडतो यम इव दुष्प्रेक्ष्यः प्रसारितमुखः कंसस्य केशी तुरङ्गम आययौ । स्वदन्तैर्वत्सतरान् गृह्णन् खुरैर्गर्भिणीर्गा निघ्नन् हेषारवं च कुर्वन् स हयः केशवेनाऽत्यतर्ज्यत । तदा हननाभिप्रायस्य तस्याऽश्वस्य दन्तक्रकचभयङ्करे[4] प्रसृते मुखे स्वकीयं वज्रोपमं बाहुं वालयित्वा हरिर्न्यधात् । तेन बाहुना आग्रीवं तन्मुखं तथाऽदार्यत यथा स मृतः । कविः कथयति—किं विरहाऽसहः स वाजी अरिष्टस्य मिलनाय समुत्सुको यमपुरेऽगात् ? । अन्येद्युश्च तत्र कंसस्य तौ महाबलौ खर-मेषौ अटन्तौ दृष्ट्वा महाभुजो कृष्णो लीलया जघान ।

१ घृतैः । २ स्पर्धमान आकारयत् । ३ पुच्छम् उदस्यन् । ४ दन्ता एव क्रकचास्तैर्भयङ्करे ।

अथ तान् सर्वान् हतान् श्रुत्वा कंसः स्वशत्रुं सम्यक् परीक्षितुं शार्ङ्गं धनुः पूजोत्सवमिषात् स्वसभायां स्थापयामास, तस्य चोपासिकां स्वभगिनीं कुमारीं सत्यभामां सदा सन्निहितामकरोत्, उत्सवं च बहुविधं प्रचक्रमे । कंस एवं च पटहोद्घोषणां कारयामास–'यः शार्ङ्गं धनुरारोपयेत तस्मै अहं सुरवधूसदृशां सत्यभामां दास्ये' । इति श्रुत्वा दूरदेशाद् अनेकशो नृपास्तत्राययुः, परं तद्धनुरारोपयितुं कश्चिदपि न समर्थोऽभवत् । तच्छ्रुत्वा वीरमानी वसुदेवसुतो मदनवेगोद्भवोऽनाधृष्टिर्वेगिनं प्रधानरथमास्थितः । तत्र गोकुले आगच्छंश्च युवानौ सुन्दरौ द्वावपि राम-कृष्णौ भ्रातरौ प्रेक्ष्य एकां निशां तौ लालयन् तस्थौ, स्नेहेन चालपत् । प्रातश्च रथे चटित्वा, लघुभ्रातरं रामं विसृज्य, स मथुरानगरीमार्गदर्शकं कृष्णं गृहीत्वाऽचलत् । महातरुसङ्कीर्णे पथि एकस्मिन् वटे तद्रथो विलग्नः, तं च मोचयितुमनाधृष्टिः समर्थो न बभूव । तदा पदातिर्व्रजन् कृष्णस्तं वटं लीलयोन्मूल्याऽन्यत्र चिक्षेप, तदनु रथमार्गं सुखावहमकरोत् । अनाधृष्टिस्तस्य तद्बलं प्रेक्ष्य हृष्टः, रथादुत्तीर्य च तं परिरेभे, रथे च स्वयमारोपयत् । क्रमेण यमुनामुत्तीर्य मथुरापुरीं प्रविश्य तौ अनेकागतनृपसङ्कीर्णां तां धनुःसभामीयतुः, तत्र च तस्य धनुषः समीपेऽधिष्ठायिनीं देवीमिव कमलनयनां सत्यभामां ददृशतुः । सत्यभामाऽपि तत्क्षणं कृष्णं सतृष्णं पश्यन्ती मदनबाणपीडिता मनसा तं वरं वव्रे । अथाऽनाधृष्टिस्तद्धनुरुद्धरन्नपि पिच्छिलभ्रश्यत्पाद उष्ट्र इव भूमौ पपात ।

१ पिच्छिले–आर्द्रपङ्के भ्रश्यन्तौ पादौ यस्य सः ।

तं शीर्णहारं पिष्टमुकुटं विगतकुण्डलं च दृष्ट्वा सा सत्यभामा लज्जां प्राप्याऽल्पम् अन्ये च नृपादयः स्मेरलोचना अहसन् । तद्धास्याऽसहः केशवस्तत्कालं तद्धनुः पुष्पमालामिव गृहीतवान्, हेलया च ज्यामारोपयत् । तेन कुण्डलितेन प्रबलतेजसा धनुषा गोविन्दोऽतीवाऽराजत, यथा इन्द्रधनुर्दण्डेन वार्षुकवारिदो राजते । ततः कृष्णसहितोऽनाधृष्टिः पितुर्गृहं गत्वा, तद्द्वारि रथस्थं केशवं मुक्त्वा मध्येऽगात् । पितुश्चेति कथयामास—'तात ! मयैकाकिनापि शार्ङ्गं धनुरारोपितं यदन्यै राजभिः स्प्रष्टुमपि न क्वचिदशक्यत !'। इति श्रुत्वा साक्षेपो वसुदेवस्तं जगाद—'हे अनाधृष्टे ! तर्हि त्वमविलम्बितं याहि, यतो धन्वारोपिणं त्वां ज्ञात्वा कंसो मारयिष्यति' । तच्छ्रुत्वाऽनाधृष्टिर्भीतः पितृगृहान्निर्गत्य कृष्णेन समं त्वरितं नन्दगोकुले ययौ । तत्र राम-कृष्णौ आपृच्छ्य स शौर्यपुरेऽगात् । 'नन्दपुत्रेण धनुरारोपितम्' इति सर्वत्र प्रवादोऽभूत् ।

अथ धन्वारोपणाद् दूनः कंसः क्रोधाध्मातो बभूव । स च धनुरुत्सवं निवार्य सर्वान् मल्लान् युद्धाय समादिशत् । तत्र च कारितमञ्चेषु दिदृक्षवो नृपा महामञ्चस्थे कंसे गाढं स्थापितदृष्टयोऽस्थुः । कंसदुर्भावज्ञेन वसुदेवेन सर्वेऽपि स्वज्येष्ठबान्धवाः सर्वेऽपि च अक्रूराद्याः पुत्रा आकारिताः । कंसेनापि सन्मानं दत्त्वा उच्चैस्तरेषु मञ्चेषु उपवेशितास्ते तेजोभिः सूर्या इव राजन्ते स्म । अथ मल्लयुद्धोत्सवं निशम्य रामं प्रति कृष्णो जगाद—'भ्रातः ! तत्राऽऽवां गच्छावः, मल्लयुद्धकुतूहलं च पश्यावः' । तद् रामोऽपि प्रतिपद्य यशो-

दामित्युवाच—'मथुरापुरीं यियासोरावयोः स्नानं प्रगुणीकुरु' । तां किञ्चिदलसां दृष्ट्वा कृष्णस्य भ्रातृवधकथनप्रस्तावनाकृते रामः साक्षेपमवदत्—'यशोदे! त्वया किं प्राक्तनो दासीभावो विस्मृतो यद् अधुनाऽस्मदीयमादेशं शीघ्रं न करोषि ?' । अनेन वचनेन विच्छायवदनं कृष्णमादाय वशंवदो वलभद्रः स्नानाय यमुनायां निनाय । तं च जगाद—'वत्स ! अद्य किं विच्छाय इव दृश्यसे ?' । ततो गोविन्दो वलदेवमेवं गद्गदाक्षरमुवाच—'भ्रातः! मम माता दासीत्याक्षिप्य किं भाषिता ?' । रामोऽपि सुकुमालवचनेन कृष्णमूचे—"भ्रातः! यशोदा तव जननी न, नन्दश्च जनको न, किन्तु देवकनृपपुत्री देवकी तव माता, विश्वैकवीरशिरोमणिः सुभगरूपधारी वसुदेवश्च तव पिता । सा देवकी त्वां दिदृक्षुः गोपूजामिषात् स्तन्यसिक्तभूतलाऽश्रुपूर्णनयना मासे मासेऽत्रागच्छति । आवयोः पिता वसुदेवः कंसस्योपरोधेन मथुरायामवस्थितोऽस्ति, यतः स दाक्षिण्यसिन्धुरस्ति । अहं ते वैमात्रेयोऽग्रजस्त्वदपायाऽतिशङ्काशङ्कितमानसैस्तातपादैस्त्वां रक्षितुं समादिष्टोऽत्रागमम्" । इति रामवचनं श्रुत्वा केशवो जगाद—'पित्राऽहमिह किं क्षिप्तः ?' । तदा रामः सर्वं कंसकृतं भ्रातृवधादिकं कथयामास । तच्छ्रुत्वा कुपितः कृष्णः क्रोधेन भुजङ्गवद्दीपणमुखः कंसवधं प्रत्यज्ञासीत् । ततो यमुनानद्यां स्नातुं प्रविवेश, तदा कंसस्य प्रियमित्रमिव केशवं द्रष्टुकामो नदीजलमग्नः कालियनागो मूर्तिमान् काल इवाऽधावत । तत्फणामण्युद्योतात् 'किमेतत् ?' इति रामे वादिनि

तत्कालं कृष्ण उत्थाय तमुत्पलमिवाऽग्रहीत्, स चाऽहिः कमलनालेन नासायां गौरिव नस्थितः[1], उपरि च चटित्वा कृष्णेन चिरं जले वाहितः । निर्जीवमिव तं भुजङ्गमतिखिन्नं मुक्त्वाऽथ हरिर्निरगात्। ततः स्नातकैर्विप्रैरेत्य कौतुकात् परिवव्रे । अथ गोपैः परिवृतौ महाबलौ राम-केशवौ मथुरां प्रति चेलतुः, गोपुरं च प्रपेदाते । तत्र कंसादिष्टहस्तिपकप्रेरितौ पद्मोत्तर-चम्पकौ महामत्तौ गजौ तयोः संमुखमधावताम् । दन्तोत्खनन-मुष्टिप्रभृतिघातैः पद्मोत्तरं गजं हेरिरिव[2] हरिरवधीत्, चम्पकं बलभद्रो जघान । 'एतौ नन्दनन्दनौ अरिष्टादिमारकौ' इत्यन्योन्यं नागरैरतीव विस्मयेन दर्श्यमानौ नील-पीताम्बरधारिणौ वनमालाभरणालङ्कृतौ गोपपरिवृतौ राम-कृष्णौ अक्षवाटकमीयतुः[3] । तत्रैकस्मिन् मनोहरमञ्चे तत्स्थितं लोकमुत्सार्य निःशङ्कौ परिवारसहितौ तौ निषेदतुः । तत्र रामस्तं वैरिणं कंसं दर्शयामास, पुनः पितरम् अनुज्येष्ठं तान् समुद्रविजयादीन् पितृव्यांश्च दर्शयामास । तत 'एतौ देवोपमौ कौ ?' इत्यन्योन्यं विमर्शं कुर्वाणाः प्रतिमञ्चस्था राजानो नागराश्च तौ प्रेक्षाञ्चक्रिरे । अथ तत्र कंसादेशाद् अनेकशो मल्ला युयुधिरे । ततस्तत्प्रेरितश्चाणूरमल्ल उदस्थात् । स आपाढघनाघनवद् गर्जन् करास्फोटं कुर्वन् सर्वान्नृपान् आक्षिपन् उच्चैरूचे— 'यः कोऽपि वीरेण जातो यश्च कोऽपि वीरमानी स मया सह युद्धं करोतु, मम युद्धश्रद्धां च पूरयतु' । तदा महाभुजः केशवश्चाणूरस्याऽतिमदवचनं दर्पमसहिष्णुर्मञ्चादुत्तीर्य भुजास्फोटं विदधे । केसरिपुच्छ-

१ नाथितः । २ सिंह इव । ३ मल्लस्थानम्, भाषायाम्—अखेडो ।

च्छटाच्छोट इवोद्भटध्वनिस्तद्भुजास्फोटो द्यावा-पृथिव्यौ स्फोटयन्निवाऽभवत् । अथैतौ दृष्ट्वा तत्रस्थो लोकश्चिन्तयितुं लग्नः—'अयं चाणूरो वयसा वपुषा च गरिष्ठः श्रमकर्कशशरीरो युद्धाजीवी सदा क्रूरः, अयं च नन्दपुत्रो दुग्धमुखः पद्मगर्भादपि मृदुर्मुग्धो वनवासादभ्यासरहितः, अनयोर्युद्धं न युज्यते, एतद् धिग् धिग्, असमञ्जसमेव, अहो ! विश्वनिन्दितमेतत्'। इति गाढं भाषमाणस्य लोकस्य कोलाहलोऽभवत् । ततः क्रुद्धः कंसोऽवदत्—'गोपयःपानोन्मत्तौ एतौ गोपौ केनाऽत्राकारितौ ?, किन्तु स्वयमेवागतौ स्तः । स्वयं च युध्यमानावेतौ को निषेधति ?, यस्याऽनयोः पीडा स पृथग् भूत्वा जल्पतु' । इति कंसक्रूरवचनं निशम्य सर्वोऽपि लोको मौनत्वेनाऽस्थात्। विकसितनयनाम्बुजो गोविन्दश्चेदं कथयामास—'अयं चाणूरो राजपिण्डेन पुष्टः सर्वदा कृताभ्यासः शरीरेण समर्थः सर्वेषु मल्लेषु च वृद्धः, परं मया गोपयःपानाजीवकेन गोपालबालकेन सिंहबालेन मत्तगज इव मार्यमाणोऽद्य दृश्यताम्' । अथ तदुत्कटवचसा भीतः कंसो युगपद्युद्धाय द्वितीयं मुष्टिकनामानं महामल्लं त्वरितमादिशत् । ततस्तमुत्थितं दृष्ट्वा रणकर्मणि कुशलो रामो मञ्चादुत्तीर्य युद्धाय तमाह्वास्त । अथ केशव-चाणूरौ राम-मुष्टिकौ च नागपाशसदृशभुजैर्योद्धुं प्रवृत्ताः । तेषां दृढतरचरणन्यासैः पृथ्वी अकम्पिष्टेव, करास्फोटशब्दैश्च ब्रह्माण्डमण्डपः पुस्फोटेव । तौ चाणूर-मुष्टिकौ कृष्ण-रामाभ्यामुत्क्षिप्य तृणपूलवद् गगने क्षिप्तौ पश्यन्तो जना जहृषुः । अथ चाणूर-मुष्टिकाभ्यां तौ सुभटौ मनागपि हि उत्क्षिप्यमाणौ प्रेक्ष्य लोको निशायां कमलमिव म्लानमुखोऽभूत् । केशवश्चाणूरं मुष्ट्या ताडया-

मास, यथा गजो वेगेन गिरिं दन्तमुशलेन ताडयति । अथ मानदुर्धरो जयमानी चाणूरो वज्रगोलकसदृशौजसा मुष्ट्या हरिं हृदयस्थले जघान, तेन प्रहारेण पीडितः कृष्णो मदेनेव लुलल्लोचनो मीलितदृष्टिः पृथिवीतले पपात । ततश्छलज्ञेन कंसेन प्रेरितः पापिष्ठश्चाणूरो विसंज्ञं गोविन्दं पुनरप्यधावत । तं जिघांसुं वलभद्रो ज्ञात्वा सद्यो मुष्टिकमुत्सृज्य वज्रानुहारिणा प्रकोष्ठेन[1] चाणूरमताडयत्, तेन घातेन स सप्त चापान् अपासरत् । कृष्णोऽपि हि क्षणं समाश्वास्य पुनस्तं युधि आह्वत । ततो गुरुविक्रमो गोविन्दो जानुभ्यां मध्यमाक्रम्य मस्तकं च वाहुनाऽऽनमय्य मुष्ट्या तं चाणूरमत्यन्तं जघान । ततः स वान्तरुधिरधारो विधुरनेत्रः कृष्णेन मुमुचे, तदा च तत्क्षणं भीतैरिव प्राणैरपि स मुक्तः ।

अथ भय-कोपाभ्यां वेपमानः कंस इत्यभाषत—'अरे ! एतौ गोपवालौ शीघ्रं मारयत, येन चैतौ सर्पौ पोषितौ तं दुष्टं नन्दमपि हत, तस्य दुर्मतेः सर्वस्वं गृहीत्वा इहानयत, तद्गृह्योऽन्योऽपि[2] त्राता योऽन्तरे स्यात् सोऽपि समानदोषो मदाज्ञया त्वरितं हन्तव्यः' । ततः कोपाक्रान्तो रक्तलोचनो गोविन्द ऊचे—'अरे पापिष्ठ ! चाणूरे हतेऽपि किं त्वमद्यापि नो मृतंमन्योऽसि ? । रे रे ! प्रथमं त्वं मया हन्यमानं स्वात्मानं रक्ष, पश्चात् स्वामर्षसदृशं नन्दादिषु आदिशेः' । इत्युक्त्वोत्पत्य च केशवो मञ्चे चटित्वा क्षणात् कंसं केशेषु गृहीत्वा पृथिव्यामपातयत् । विशीर्णमुकुटं उत्स्रस्तोत्तरीयकं तरलनयनं सूनाबद्धं[3] पशुमिव तं

१ मणिबन्धपर्यन्तो हस्तावयवः, कूर्परस्याऽधोभागः । २ तस्य नन्दस्य पक्षाश्रितः । ३ वधस्थानप्रतिबद्धम् ।

कंसं गोवर्धन उवाच–'रे रे दुष्ट ! त्वया स्वरक्षार्थं बालहत्या वृथैव कृता, इदानीं त्वमेव न भवसि । रे रे दुष्ट धृष्ट नृपाधम ! स्वकीयकर्मफलभाग् भव' । तदा गृहीतकंसे व्यालरूपधारिणि केशवे सर्वोऽपि जनो विस्मयं प्राप । अथ यौक्त्रिकबन्धेन मुष्टिकमल्लमनुच्छ्वासीकृत्य यज्ञोपनीतम् अजमिव महावीरो रामोऽवधीत् । इतश्च कंसरक्षाकारिणो भटाः कृष्णहननाय विविधशस्त्रव्यग्रकरा अधावन्त, तदा मञ्चस्तम्भमुद्धृत्य बलभद्रस्तान् गाढं ताडयन् मधुस्थिता मक्षिका इव शीघ्रं विद्रावयामास । कृष्णोऽपि मस्तके पादं न्यस्य कंसं निपातितवान्, केशैश्च गृहीत्वा रङ्गाद् बहिरक्षिपत्, यथा समुद्रो जलचरजीवकलेवरं बहिः क्षिपति । अथ कंसेन प्रागानीता जरासन्धसैनिकास्तदा राम-केशवयोर्मारणाय सन्नद्धा अभवन्, तदा तान् सन्नद्धान् दृष्ट्वा समुद्रविजयराजः सन्नह्य युद्धायाऽढौकत, यतः स हि तदर्थं तत्रागतोऽभवत् । समुद्रविजयनृपे समुद्र इवोद्वेले सति ते जरासन्धसैनिकास्त्वरितं नंष्ट्वा दिशो दिशं ययुः । ततः समुद्रविजयादेशाद् अनाधृष्टी राम–कृष्णौ स्वरथे आरोप्य वसुदेवभवनेऽनयत् । तत्र समुद्रविजयादयः सर्वेऽपि यदवो गत्वा सभां च पूरयित्वा उपाविशन् । तत्र अर्धासनाऽऽसितबलभद्रो वसुदेवः केशवमुत्सङ्गे आरोप्य अश्रुपूर्णनयनः शिरसि पुनः पुनश्चुचुम्ब । अथ 'किमेतद् ?' इति भ्रातृभिर्वसुदेवः पृष्टः, तदा सोऽतिमुक्तकमुनिवृत्तत आरभ्य सर्वं कृष्णवृत्तान्तमकथयत् । ततो राजा समुद्रविजयः कृष्णं स्वोत्सङ्गे गृहीतवान्, बलभद्रं च तत्पालनप्रीतो वारं वारं प्रशंसयामास । ततस्तया छिन्ननासया पुत्र्या सममागत्य देवकी उत्सङ्गादुत्सङ्गं संचरन्तं

कृष्णं लात्वाऽऽलिलिङ्ग । अथ सुभटा यादवा उदश्रवो वसुदेवमूचुः—'हे महाभुज ! त्वमेकाक्यपि जगज्जेतुं समर्थोऽसि, तथापि हे वीर ! अतिनिर्दयेन कंसेन जातमात्रान् स्वपुत्रान् हन्यमानान् कथं सोढवान् ?' । तदा वसुदेवो बभाषे—"आजन्म पालितं सत्यव्रतं रक्षितुमहम् इदं दुष्कर्म विसोढवान् । देवक्या आग्रहेणाऽयं केशवो गोकुले प्रक्षिप्य इमां नन्दसुतां च सञ्चार्य मयाऽरक्षि । 'देवक्याः सप्तमो गर्भः स्त्रीमात्रम्' इत्यवज्ञया स पापधीरेकं नासापुटं छित्त्वेमां मुमोच" । अथ भ्रातृ-भ्रातृव्यसंमतत्वेन समुद्रविजयनृपः कारागारादुग्रसेनराजं कर्षयामास । तेन सह समुद्रविजयादयो यमुनानदीपुलिने कंसप्रेतकार्याणि चक्रुः । कंसस्य माता पत्न्यश्च तस्यां नद्यां जलाञ्जलीन् ददुः, परमेका जीवयशास्तु न ददौ । एवं चोवाच—'एतौ गोपौ राम-केशवौ ससन्ततींश्च दशापि दशार्हान् घातयित्वा स्वपतेः प्रेतकार्यमहं करिष्ये, अन्यथा त्वग्नौ जीवन्ती प्रवेक्ष्यामि' । इति सोच्चैः प्रतिज्ञां कृत्वा ततो निर्गत्य च स्वपितृपुरे राजगृहे त्वरितमगात् । अथ राम-कृष्णानुज्ञया राजा समुद्रविजयो मथुरानगर्यामुग्रसेनं राजानं चकार, तेन दत्तां स्वपुत्रीं सत्यभामां क्रोष्टुकिकथिते शुभदिने कृष्णो यथाविधि परिणीतवान् । इतश्च सा जीवयशा मुक्तकुन्तला भृशं रुदती जरासन्धसभायाम् अङ्गिनी अश्रीरिव प्रविवेश । जरासन्धेन पृष्टाऽथ सा कथञ्चिद् अतिमुक्तकवृत्तान्तं कंसमृत्युकथां च कथयामास । तच्छ्रुत्वा जरासन्धः प्रत्युवाच—'पुत्रि ! कंसेन साधु न कृतं यद्देवक्येव न मारिता, यतः क्षेत्राभावे कृषिः कुतो भवेत् ? । हे वत्से ! अधुना त्वं मा रोदीः, अहं कंसघातकांस्तान् परितः

समूलघातं हत्वा तत्स्त्रियो रोदयिष्यामि'। तामित्युक्त्वा जरासन्धः सोमनामानं नृपमनुशिष्य समुद्रविजयनृपान्तिके प्राहिणोत्। स मथुरानगर्यामागत्य समुद्रविजयनृपमित्युवाच–'हे राजन्! युष्माकं स प्रभुर्जरासन्ध एवमादिशति यत् पुत्री जीवयशा अस्माकं जीवितव्यादपि वल्लभाऽस्ति, तत्स्नेहात् तत्पतिरपि तथैव, एतद्विदितं कस्य नास्ति ?। भवन्तो हि अस्माकं सेवकाः सुखं तिष्ठन्तु, परं कंसघातकाविमौ क्षुद्रौ राम-कृष्णावर्पणीयौ। किञ्च, अयं देवकीसप्तमगर्भः प्रागपि याचित एवास्ति, सोऽद्याप्यर्प्यताम्, तत्पालको रामोऽपि सापराधोऽर्पणीयः'। इति श्रुत्वा समुद्रविजय ऊचे–'मत्परोक्षे यदि सरलचित्तेन वसुदेवेन षड् गर्भा अर्पितास्तन्निश्चितं नोचितं कृतम्। अथ वत्साभ्यां राम-कृष्णाभ्यां स्वभ्रातृवधवैराद् यदि कंसो मारितस्तदेतौ कथमपराध्यतः ?। अत्रास्माकमेको दोषो यद् बाल्यतोऽपि हि वसुदेवः स्वेच्छाचारी, तस्य बुद्ध्या मम षट् पुत्राः कंसेन हताः। सम्प्रति प्राणभूतौ मत्पुत्राविमौ राम-केशवौ वधवाञ्छया याचमानस्य त्वत्पतेर्विमृश्य विधायिता नास्ति'। ततः सकोपः सोमोऽप्यूचे–'स्वामिशासने सेवकानां युक्तायुक्तविचारः कदापि निश्चितं न योग्यः। हे राजन्! तव षट् पुत्रा यत्र तत्रैतावपि दुर्मती गच्छताम्। नृप! तक्षकभुजङ्गस्य मुखं मा कण्डूयीः, यतो बलिना सह विरोधः क्षेमाय नो जायते। त्वं मेष इव मगधेश्वरस्य महामत्तगजस्य पुरतः कः ?'। ततः क्रुद्धः केशवोऽभ्यधात्–'रे सोम! मम तातेनाऽऽर्जवेन स्नेहसम्बन्धे पालिते त्वत्स्वामी किमस्माकं प्रभूयते ?। जरासन्धोऽस्माकं स्वामी नहि नहि, प्रत्युत स एवं विब्रुवन्

तव पतिः द्वितीयः कंसो भवितुमिच्छति । तत्तत्र शीघ्रं गच्छ, स्वप्रभोश्च यथेच्छं कथय' । इति श्रुत्वा क्रोधाध्मातः सोमः समुद्रविजयनृपं प्रति जगाद—'हे दशार्ह ! तवायं सुतः कुलाङ्गारसमानोऽस्ति, अमुं किमुपेक्षसे ?' । तद्वचनेन कोपात् प्रज्वलन् अनाधृष्टिकुमारोऽवदत्—'अरे सोम ! तातात् पुनः पुनः पुत्रौ याचमानस्त्वं किं न लज्जसे ? । स जरासन्धो जामातृवधेनाऽपि दूनस्तदा षड्भ्रातृवधेन किं वयं न दूनाः ? । महाभुजो रामः कृष्णोऽन्येऽपि चाऽक्रूरादयो वयं त्वामेवं भाषिणं निश्चितं न सहिष्यामहे' । इत्यनाधृष्टिना क्रोधेन धर्षितः सोमनृपः क्रोधाक्रान्तः समुद्रविजयनृपेणोपेक्षितो राजगृहं ययौ । अथ द्वितीयदिवसे राजा समुद्रविजयः स्वबान्धवान् मेलयित्वा क्रोष्टुकिनामानं हितं नैमित्तिकोत्तमं पप्रच्छ—'हे भद्र ! त्रिखण्डस्वामिना जरासन्धेन सहाऽयमस्माकं विग्रह उपस्थितः, अतः परं यद्भावि तत् कथय'। सोऽप्यूचे—'अचिरकालेनैव एतौ महाबलौ राम-केशवौ तं जरासन्धं हत्वा त्रिखण्डस्वामिनौ भविष्यतः, परं भवन्तः साम्प्रतं समुद्रतटमुद्दिश्य पश्चिमदिशायां यान्तु । तत्र गच्छतामपि भवतां वैरिक्षयारम्भो भावी । यत्र चैषा सत्यभामा पुत्रद्वयं प्रसूते तत्रैव नगरीनिवेशं कृत्वा निःशङ्कं भवद्भिः स्थातव्यम्' । इति श्रुत्वा नृपो हृष्टः । ततो निजचलनक्रियां पटहोद्घोषणेन स्वकीयानजिज्ञपत् । एकादशकुलकोटिसहितः समुद्रविजयराजो मथुरानगरीं जहौ । ततः शौर्यपुरे गत्वा ततोऽपि च सप्त कुलकोटीर्गृहीत्वा निजज्ञातिसहितोऽचलत् । उग्रसेननृपोऽपि तं समुद्रविजयनृपमन्वगात् । सर्वेऽपि विन्ध्याचलमध्ये पथि सुखेन जग्मुः ।

अथ सोमराजो गत्वा जरासन्धाय तत्सर्वं कथयामास। सोऽपि क्रोधाध्मातो बभूव। अथ तं तादृशं प्रेक्ष्य तत्सुतः कालकुमार उवाच–'हे तात! भवतोऽग्रेऽमी भीरवो यदवः के?, तद् ममादिश, तान् समुद्रा-ऽग्निमध्याद् दिशामन्तादपि चाकृष्य हनिष्यामि, अन्यथाऽहं वह्नौ प्रवेक्ष्यामि, परं नहि निवर्तिष्ये'। ततो राजपञ्चशतीसहितं महासैन्यपरिवृतं कालकुमारं यदूनां हननाय स आदिशत्। कालो निजभ्रात्रा यवनेन सहदेवेन च संयुक्तोऽशकुनैर्दुर्निमित्तैश्च वार्यमाणोऽपि नो पश्चादपासरत्। स यदूनामनुपदं व्रजन् अचिरादपि अदूरोपितयादवां विन्ध्याचलाधोभूमिं प्राप। अथ कालकुमारमासन्नमागतं दृष्ट्वा राम-कृष्णा-ऽधिष्ठायिन्यो देवता एकद्वारं विस्तीर्णमुन्नतं च पर्वतं विचक्रिरे। 'अत्रोपितं यादवसैन्यं वह्निना भस्मीभूतम्' इति रुदतीमेकां स्त्रियं च चितासमीपे विचक्रिरे। तां प्रेक्ष्य कालकुमारः पप्रच्छ—'हे भद्रे! त्वं काऽसि?, किमेतदेवं रोदनं करोषि?'। तदा साऽऽख्यत्–'जरासन्धाद् भीताः सर्वेऽपि यादवा नष्टाः, तेषां च पृष्ठतः काल इव वीरः कालकुमारोऽधावत। तस्मिन्नासन्ने आगते श्रुते चकिता यादवाः सर्वेऽपि वह्नौ प्राविशन्। दशार्हा राम-कृष्णौ चेह चितायामविशन्, तेषां बन्धूनां वियोगेनाऽहमप्येषाऽग्नौ प्रविशामि' इत्युक्त्वा सा वह्नौ प्रविवेश। अथ देवतामोहितः कालो यवनं सहदेवम् अपरान् नृपांश्चाऽवोचत्—"मया तातस्य भगिन्याश्च पुरत इयं प्रतिज्ञा कृताऽसि यद् 'वह्न्यादिभ्योऽपि कृष्ट्वा यदून् निश्चितं हनिष्यामि'। अथ तान् मद्भयाद् वह्नौ प्रविष्टान् हन्तुमहमपि सत्यप्रतिज्ञोऽस्मिन् ज्वलिते हुताशने प्रवे-

क्ष्यामि"। इत्युक्त्वा स कालः करवाल-फलके[1] गृहीत्वा पतङ्गवद् वह्नौ प्राविशत्, देवतामोहितेषु च स्वकीयेषु पश्यत्सु मृतः। अत्रान्तरे च रविरस्तपर्वतं जगाम, तेन ते यवन-सहदेवादयस्तत्रैव रात्रिमूषुः। प्रभाते जाते ते तं पर्वतं तां चितां च नाऽपश्यन्। हेरिकाश्चागत्य[2] 'यादवा दूरं गता' इति तेभ्य आख्यन्। वृद्धाऽऽलोचनाद् देवताकृतं संमोहं ज्ञात्वा यवनाद्याः पश्चान्निवृत्य तत्सर्वं जरासन्धाय कथयामासुः। स च तच्छ्रुत्वाऽतुच्छया मूर्च्छया पृथ्व्यामपतत्। पुनः ससंज्ञः सन् स समकालं 'काल! काल!' इति 'कंस! कंस!' इति च जल्पन् करुणस्वरमरुदत्। इतश्च यादवा गच्छन्तः कालमरणं ज्ञात्वा संजातप्रत्ययाः परमानन्देन क्रोष्टुकिं पूजयामासुः। मार्गे एकस्मिन् वने तेषां तस्थुषां सोऽतिमुक्तकचारणर्षिराययौ, स च दशार्हेशेन[3] पूजितः। ततः स तं महामुनिं प्रणम्याऽपृच्छत्—'हे स्वामिन्! अस्मिन् व्यसनेऽस्माकं किं भावि?'। तदा स मुनिरुवाच—'राजन्! मा भैषीः, तवैष कुमारोऽरिष्टनेमिर्द्वाविंशस्तीर्थङ्करस्त्रैलोक्याऽद्वैतपौरुषोऽस्ति। इमौ च राम-कृष्णौ बलदेव-वासुदेवौ द्वारकास्थितौ जरासन्धवधं विधायाऽर्धभरतस्वामिनौ भविष्यतः'। ततो हृष्टः समुद्रविजयनृपस्तं मुनिं पूजयित्वा व्यसृजत्। सुखाकरैः प्रयाणैर्यदवः सौराष्ट्रदेशं ययुः। अथ ते तत्र रैवतगिरेः पश्चिमोत्तरतोऽष्टादशकुलकोटिसंयुक्ताः शिविरं व्यधुः। तत्र कृष्णपत्नी सत्यभामा जात्यजाम्बूनदकान्ती[4] द्वौ पुत्रौ भानु-भामराभिधौ असूत। ततः क्रोष्टुकिकथिते दिने स्नातः कृतबलिकर्मा हरि-

१ भाषायाम्—ढाल। २ दूताः। ३ समुद्रविजयेन। ४ जाम्बूनदं काञ्चनम्।

रष्टमतपः कृत्वा समुद्रमपूजयत् । ततस्तृतीयरात्रौ लवणसमुद्राधिष्ठायकः सुस्थितदेवो गगनस्थितस्तत्र रचिताञ्जलिरागात् । स कृष्णाय पाञ्चजन्यं शङ्खं रामाय च सुघोषं शङ्खं दिव्यरत्न-माल्य-वस्त्राणि च ददौ, ऊचे च–'हे केशव ! अहं सुस्थितनामा देवोऽस्मि, त्वया कुतः कारणात् स्मृतः ?, कथय, किं ते करवाणि ?' । तदा तं देवं कृष्ण उवाच–'या पूर्वं पूर्ववासुदेवानामत्र द्वारकेति नगर्यासीत् सा त्वया जलेन पिहिता, तस्याः स्थानं ममापि निवासाय प्रकाशय' । सोऽपि सुर 'आम्' इत्युक्त्वा तथैव च कृत्वा इन्द्राय व्यजिज्ञपत् । तदा सौधर्मेन्द्राज्ञया धनदो द्वादशयोजनलम्बां नवयोजनविस्तीर्णां रत्नमयीं द्वारकानगरीं चक्रे । तत्परितोऽष्टादशहस्तोन्नतं नवहस्तपृथ्वीगतं द्वादशहस्तपृथुं सखातिकं दुर्गं चाऽकरोत् । पुनस्तत्र वृत्ताश्चतुरस्रा व्यायता गिरिकूटाः स्वस्तिकाः सर्वतोभद्रा मन्दरा अवतंसा वर्धमानाश्चेतिनामनो लक्षशः प्रासादा एकभूमा द्विभूमास्त्रिभूमाः सप्तभूमाद्याश्च निर्मिताः । पुनर्विचित्ररत्न-माणिक्य-कनक-रूप्यैश्चत्वरेषु त्रिकेषु च दिव्यानि सहस्रशो जिनचैत्यानि निर्मितानि । तत्र प्रथमम् आग्नेय्यां दिशि दुर्गसंयुक्तः सौवर्णः स्वस्तिकाभिधः प्रासादः समुद्रविजयनृपस्याऽभवत् । तत्समीपे चाऽक्षोभ्य-स्तिमितयोः क्रमतो नन्द्यावर्त–गिरिकूटौ प्रासादौ सवप्रौ बभूवतुः । सागरस्य च नैर्ऋत्याम् अष्टांशनामा प्रासाद उच्चैरभवत् । ततो हिमवदचलयोर्वर्धमाननामानौ प्रासादौ अभूताम् । मारुत्यां धरणस्य पुष्करपत्राख्यः, ततः पूरणस्याऽऽलोकदर्शनाभिधः, तत्समीपे चाऽभिचन्द्रस्य विमुक्तनामकः प्रासादोऽभवत् । ततो वसुदेवस्य ऐशान्यां कुबेर-

च्छन्दनामा प्रासादोऽजायत, उग्रसेनस्य च स्त्रीविहारक्षमो नाम प्रौढः प्रासादो राजमार्गसमीपेऽभूत् । सर्वेऽपि कल्पवृक्षैरावृता गज-वाजिशालामण्डिताः सप्राकारा बृहद्द्वार-पताकासमूहधारिणोऽभूवन् । तेषां च मध्ये बलदेवस्य चतुरस्रो बृहद्द्वारः पृथ्वीजयनामा महान् प्रासादो निर्ममे । ततः पुनरष्टादशभूमो नानाविधानेकगृहपरिवृतः सर्वतोभद्राभिधानः प्रासादो वासुदेवस्याऽजनि । राम-कृष्णप्रासादयोः पुरतो विशदरत्न-माणिक्यमयी सुधर्मासमाना सर्वप्रभासाख्या सभाऽभूत् । ततोऽष्टोत्तरशतहस्तोन्नतं जिनप्रतिमाविभूषितं मेरुशिखरमिवोत्तुङ्गं मणि-रत्न-माणिक्य-कनकमयम् अनेकभूमि-गवाक्षादिभ्राजितं विचित्रकनकवेदिकं मनोज्ञं जिनायतनं विश्वकर्मणा निर्ममे । सरोवराणि दीर्घिका वाप्यश्चैत्यानि उद्यानवीथिका अन्यच्च सर्वं तत्राऽहोरात्रेण धनदश्चकार । एवं च धनदेन वासुदेवस्य मनोहरा द्वारकानगरी इन्द्रपुरीसदृशी निर्मिता । तस्या नगर्याः पूर्वदिशि रैवतगिरिः, दक्षिणदिशि माल्यवान्, पश्चिमदिशि सौमनसः, उत्तरस्यां च दिशि गन्धमादनः, एवं चत्वारो महान्तः पर्वता अभवन् । प्रातःकाले जाते धनदः कृष्णाय पीतवस्त्रे, नक्षत्रमालां मुकुटं, कौस्तुभाह्वानं महारत्नं, शार्ङ्गधनुः, अक्षय्यशरौ तूणीरौ, नन्दकाभिधं खड्गं, कौमोदकीं गदां, गरुडध्वजं च रथं पुण्यप्राग्भारेण दत्तवान् । अथ रामाय वनमालामाभरणविशेषं, हल-मुशले आयुधे, नीलवस्त्रे, तालध्वजं रथम्, अक्षय्यशरौ तूणीरौ, धनुश्च धनदो ददौ । ततो दशभ्योऽपि दशार्हेभ्यो रत्नानि भूषणानि च धनदोऽर्पयामास, यतस्ते हि राम-कृष्णयोः पूजनीयाः । अथ

वैरिक्षयकारिणं केशवं ज्ञात्वा सर्वेऽपि हृष्टा यदवोऽपरसमुद्ररोधसि राज्येऽभ्यषिञ्चन् । सिद्धार्थसारथिर्बलदेवो दारुकसारथिश्च केशव उभावपि वीरौ द्वारकापुरीं प्रवेष्टुं रथौ आरूढौ । रथस्थैर्यदुभिर्नक्षत्रैः परिवृतौ चन्द्र-रवी इव भवज्जयजयारवं तौ वीरौ पुरीं प्राविशताम् । तस्यां पुर्यां धनदः सार्धत्रिदिनं रत्न-मणि-माणिक्य-काञ्चन-रजत-धन-धान्य-विचित्रवस्त्राणि ववर्ष । कृष्णाज्ञया च धनददर्शितगृहेषु सर्वेऽपि लोकाः सुखेन वासं चक्रिरे ।

पुर्यां तस्यां वसतिमखिला यादवा विष्णुमुख्याश्चक्रुर्यक्षाधिपतिरतुलां पूरयामास वाञ्छाम् ।
स्वर्णैर्धान्यैर्विविधवसनैः पूरितायां परायां, सद्गेहायामनिशमभितः सम्पदः शीघ्रमीयुः ॥११॥

इति पण्डितश्रीकनकविजयगणिचरणपङ्कजभ्रमरसदृश–गुणविजयगणिविरचिते श्रीमदरिष्टनेमि-
चरिते सुललितगद्यबन्धे बलभद्रकृष्णाऽरिष्टनेमिजन्म–कंसवध–कालकुमारहुताशन-
प्रवेश–द्वारकानगरीनिवेशकीर्तनो नाम पञ्चमः परिच्छेदः ॥

## ॥ अथ षष्ठः परिच्छेदः ॥

अथ द्वारकायां केशवः सरामोऽपि दश दशार्हाननुवर्तयन् यदुपरिवारपरिवारितो रममाणः सुखमस्थात् । तत्र च दशार्हाणां प्रमोदं विस्तारयन् राम-कृष्णयोश्च चित्तमाह्लादयन् अरिष्टनेमिस्वामी ववृधे । वृद्धा अपि लघूभूय सर्वेऽपि भ्रातरः स्वामिना सह क्रीडाशैलोद्यानादिकेषु क्रीडां चक्रुः । दशधनुरुन्नतकायः प्रभुः क्रमेण यौवनं प्राप, परम् आजन्मकामविजेता, ततोऽविकारमानसः । पितृभ्यां राम-कृष्णादिभिर्भ्रातृभिश्च दिवसे दिवसे प्रार्थ्यमानोऽपि स्वामी कन्यानां पाणिग्रहणं न ह्यमन्यत । अथ तौ बलभद्र-गोवर्धनौ बहून् माण्डलिकनृपान् स्वकीयबलेनाचक्रमतुः, मिलितौ शक्रेशानाविव चोभावपि प्रजाः पालयामासतुः ।

अन्यदा परिभ्रमन्नारदर्षिः कृष्णगृहे आगात्, रामसहितेन कृष्णेन स्वयं विधिवत्पूजितः । अथ स कृष्णान्तःपुरे ययौ, तत्र च दर्पणे स्वरूपं पश्यन्त्या सत्यभामया व्यग्रत्वाद् आसनादिना नो पूजितः । तदा स क्रुद्धो निर्ययौ, एवं च विरुद्धमचिन्तयत्–'वासुदेवान्तःपुरे सर्वैः सदा नारदा अर्चिताः, इयं तु पतिवल्लभत्वेन गर्विता ममाऽभ्युत्थानं दूरेऽस्तु परं दृष्टिमात्रमपि मयि नाऽदात् । ततोऽमूम् अतिरूपधारिण्याः सपत्न्याः प्रासिमहासङ्कटे पातयामि' । इति विमृशन् स नारदः कुण्डिनपुरमगात् । तत्र भीष्मको

नृपोऽभूत्, तस्य प्रिया यशोमती। तयो रुक्मिनामा पुत्रः, दिव्यरूपधारिणी च रुक्मिणी पुत्री। तत्र स गतः, रुक्मिण्या चोत्थाय नमस्कृतः। 'अर्धभरतेशः कृष्णस्तव वरो भवतात्' इति स उवाच। तदा तया 'कोऽसौ कृष्णः ?' इति पृष्टो नारदोऽद्भुताऽद्वैतरूप–सौभाग्य–शौर्यादीन् गोविन्दगुणान् जगाद। तान्नि-शम्य सा रुक्मिणी तत्कालं केशवे सानुरागाऽभवत्। कृष्णमेवाऽभिलष्यन्ती च मदनविह्वला तस्थौ। तस्या रूपं पटे आलिख्य द्वारकामागत्य नारदो विष्णोर्दर्शयामास। नयनामृतसमानं तद्रूपं दृष्ट्वा कृष्णस्तं पप्रच्छ–'भगवन्! इयं का नाम देवी भगवताऽस्मिन् पटे आलिखिता? तत् कथय'। तदा नारदो हसित्वा बभाषे–'केशव! नैषा देवी, किन्तु कुण्डिनपुरस्वामिनो रुक्मिभूपस्य भगिन्यसौ कुमारी वर्तते'। तच्छ्रुत्वा तद्रूपविस्मितो मोहितश्च गोविन्दस्तत्कालं रुक्मिसमीपे पुरुषं प्रेष्य मधुरया गिरा रुक्मिणीं ययाचे। तदा हसित्वा रुक्मिराज एवमुवाच–'अहो! गोपो हीनकुलोऽपि मूढो मम भगिनीं याचते!, कोऽयं तस्य मनोरथः ?। अहमस्या अनुरूपाय शिशुपालनृपाय स्वां जामिं दास्ये, अनयोर्हि योगो रोहिणी–चन्द्रयोरिवोचितः'। इति कठोराक्षरं तद्वचनं श्रुत्वा स दूत आगत्य कृष्णायाऽकथयत्। अथ तं वृत्तान्तं ज्ञात्वा पितृष्वसा धात्री रुक्मिणीं स्नेहेन रहसि नीत्वोचे–"हे पुत्रि! अतिमुक्तकमुनिर्बाल्यावस्थायां त्वां ममोत्सङ्गस्थितां दृष्ट्वाऽऽख्यत्–'यदेषा कृष्णस्याऽग्रमहिषी भाविनी'। तदा 'कृष्णः कथं ज्ञास्यते?' इति मया पृष्टः स जगाद–'अपराम्भोधौ द्वारकानगरीनिवेशनात् कृष्णो ज्ञेयः'। तस्मै याचमानायाऽपि

कृष्णाय रुक्मिणा त्वं न दत्ता, किन्तु दमघोषसुताय शिशुपालाय दातुं स इच्छति" । तन्निशम्य रुक्मिणी कथयामास–'मातः ! किम् ऋषीणां भाषितं विसंवदति ? किं प्रातःकाले गर्जितं हि निष्फलं जायते ?' । एवं रुक्मिण्याः कृष्णेऽभिलाषं ज्ञात्वा सा पितृष्वसा प्रच्छन्नदूतेन केशवायैवमजिज्ञपत्–'माघमासे शुक्लाष्टम्यां नागपूजामिषतोऽहं रुक्मिण्या समं निर्गत्य उद्यानवीथिकां यास्यामि । यदि रुक्मिण्यास्तव प्रयोजनं तदा तत्र त्वयाऽऽगन्तव्यम्, अन्यथा तां शिशुपालः परिणेष्यति' ।

इतश्च रुक्मिणाऽऽहूतः शिशुपालो रुक्मिणीमुद्वोढुं ससैन्यः कुण्डिनपुरमायासीत् । तत्र रुक्मिणीपाणिग्रहणोद्यतं शिशुपालमायातं कलिकुतूहली नारदः कृष्णाय ज्ञापयामास । तदा कृष्णोऽपि स्वकीयैरप्यनुपलक्षितो रामेण समं विभिन्नं रथं चटितः कुण्डिनपुरे जगाम । अथ तया पितृष्वस्रा धात्र्या सखीभिश्च परिवृता रुक्मिणी नागपूजाकृते उद्याने आगात्, कृष्णोऽपि रथादुत्तीर्य स्वस्वरूपमादितो ज्ञापयित्वा तां च पितृष्वसारं नत्वा रुक्मिणीमित्युवाच–'हे सुन्दरि ! मालतीं मधुकर इवाऽहं केशवस्त्वद्गुणाकृष्टो दूरतोऽपि त्वामागाम्, तद् मम रथमध्यास्व' । तदा तद्भावज्ञया पितृष्वस्राऽनुज्ञाता सा रुक्मिणी तत्कालं रोमाञ्चकञ्चुकिता कृष्णस्य हृदयमिव स्नेहेन रथमारुरोह । ततो गोविन्दे किञ्चिद्गते स्वदोषनिराकरणाय सा पितृष्वसाऽन्यदास्यश्चोच्चैः पूत्कारं चक्रुः–'हे रुक्मिन् ! हे रुक्मिन् ! तवासौ स्वसा रुक्मिणी चौरेणेव सरामेण कृष्णेन खलु प्रसह्य ह्रियते' । अथ राम-कृष्णौ पाञ्चजन्यं सुघोषं च शङ्खं दध्मतुः, तदा

रुक्मिणो नगरं समुद्र इवाऽतीव क्षोभं प्राप। ततो महाभुजौ महावलौ महासैन्यौ च रुक्मि-शिशुपालौ राम-कृष्णयोरनुपदं चेलतुः। तद् दृष्ट्वा उत्सङ्गस्थिता चकिता रुक्मिणी हरिमुवाच–'हे नाथ! मद्भ्राता क्रूरो महावलश्चाऽस्ति, शिशुपालश्च तत्समानः। अन्येऽपि तत्सुभटा वहवोऽत्रागच्छन्तो दृश्यन्ते। युवां तु एकाकिनौ, तेनाऽहं भीताऽस्मि, का गतिर्भविष्यति?'। तदा हरिर्हसित्वा जगाद–'सुन्दरि! त्वं मा भैषीः, त्वं हि क्षत्रियाऽसि। मत्पुरतः केऽमी वराका रुक्म्यादयः?, अदो मद्बलं पश्य'। इत्युक्त्वा तत्प्रत्ययहेतवे देवकीनन्दनोऽर्धचन्द्रवाणेनैकघातेन तालद्रुमपङ्क्तिं कमलनालपङ्क्तिमिवाऽच्छिदत्। पुनश्चाऽङ्गुलीयवज्रम् अङ्गुष्ठा-ऽङ्गुलीभ्यां निपीडयन् निर्भ्रष्टमसूरधान्यकणलीलया[1] दलयामास। तदा तेन स्वपतिवलेन रुक्मिण्यत्यन्तं प्रमोदं दधौ। अथ रामं गोविन्दो जगाद–'इमां वधूं गृहीत्वा त्वं व्रज, अहमेतान् अनुधावतो रुक्म्यादीन् हनिष्यामि'। तदा रामोऽपि वभाषे–'भ्रातः! त्वं गच्छ, अहमेतान् सर्वानपि हनिष्यामि'। तच्छ्रुत्वा भीता रुक्मिण्यवदत्–'मम भ्राता त्रातव्यः'। तदा गोविन्दानुमतो रामस्तद्वचनं प्रत्यपद्यत, तत्रैव च योद्धुं तस्थौ। जनार्दनस्तु रुक्मिणीं गृहीत्वा जगाम। अथागतं परसैन्यं रणेऽमन्थरः[2] प्रोत्क्षिप्तमुशलायुधो वलभद्रो मन्थाचलः समुद्रमिव ममन्थ। तस्याऽयोग्रेण[3] वज्रेणाऽचला इव गजाः पृथिव्यां पेतुः, रथाश्च घटकर्परवत् चूर्णसादभवन्। स रामः शिशुपालेन सार्द्धं रुक्मिणः

१ रन्धितमसूरधान्यस्य कणलीलया। २ अमन्दः। ३ मुशलेन।

सेनामद्रावयत् । तदा वीरमानी रुक्मी बलभद्रमदोऽब्रवीत्—'अरे गोप ! दृष्टोऽसि, मम पुरतस्तिष्ठ, एषोऽहं तव गोपयःपानसत्कं मदं हरिष्यामि' । तदा रामः प्रतिपन्नं स्मरन् मुसलं मुक्त्वा बाणैस्तस्य रथमभाङ्क्षीत्, वर्माऽच्छिदत्, वेगेन च रथ्यान् जघान । ततश्च वध्यकोटिमुपागतं रुक्मिणं क्षुरप्रबाणेन लूनकेशं कृत्वा हसन् रामो जगाद—'मम भ्रातृवधूबान्धव इति न वध्योऽसि, रे रे ! याहि याहि, मुण्डोऽप्यस्मत्प्रसादेन स्वपत्नीभिर्विलस' । एवमुक्त्वा मुक्तः स रुक्मी लज्जया कुण्डिनपुरे नो इयाय, किन्तु तत्रैव भोजकटाभिधानं पुरं निवेश्याऽस्थात् ।

अथ कृष्णो द्वारकापुरीं प्रविशन् रुक्मिणीं कथयामास—'हे देवि ! इयं मम सुररचिता रत्नमयी नगरी दृश्यताम् । सुभ्रु ! अस्यां कल्पद्रुममयोद्यानेषु मया सह त्वं यथेच्छमविच्छिन्नसुखं च सुरसुन्दरीव रंस्यसे' । तदा रुक्मिणी केशवं बभाषे—'प्रियतम ! तव पत्न्यो महर्द्धयः पितृभिर्महापरीवारपरिवारिता दत्ताः सन्ति, अहं त्वेकाकिनी बन्दिनीव त्वया समानीता, अतो यथा तासां हसनीया न भवामि तथा साम्प्रतं कुरु' । तच्छ्रुत्वा 'तदधिकां त्वां करिष्ये' इति रुक्मिणीमुक्त्वा तां सत्यभामागृहसमीपे प्रासादे कृष्णोऽमुञ्चत्, गान्धर्वविवाहेन च परिणीय स्वेच्छया तां रात्रिं रमयामास । केशवो रुक्मिण्या गृहे जनप्रवेशमरक्षत्[3] । अथ 'नवपरिणीतां स्वप्रियां मम दर्शय' इति साग्रहं सत्यभामा कृष्णमूचे, तदा गोविन्दो लीलोद्याने

१ रुक्मिणी-कृष्णयोरग्रे रुक्मिणोऽवधम् । २ अश्वान् । ३ मनुष्यप्रवेशं न्यषेधत् ।

लक्ष्मीप्रासादे लक्ष्मीप्रतिमा सज्जीकरणच्छलाद् महानिपुणैश्चित्रकरैरुत्सारयामास, तत्रैत्य च विष्णुर्लक्ष्मीस्थाने रुक्मिणीं स्थापयामास । 'देवीनामागमने देवीव त्वं निश्चला तिष्ठेः' इति च तामशिषत् । ततः कृष्णः स्वस्थानं गतः । सत्यभामया पुनः पृष्टः–'कुत्र स्थाने भवता नवीना प्रिया मुक्ताऽस्ति ?' । तदा शार्ङ्गपाणिनोक्तम्–'सा श्रीप्रासादे मुक्ता विद्यते' । तच्छ्रुत्वा सत्यभामा सपत्नीभिः सह श्रीप्रासादे ययौ । तत्र च श्रीस्थानस्थां निश्चलां रुक्मिणीं सेति जगाद–'अहो लक्ष्मीदेवतारूपम् !, अहो शिल्पिनां कौशल्यम् !' । इत्युक्त्वा तां प्रणम्य विज्ञपयामास–'हे देवि ! तथा कुरु यथा हरेर्नूतनां पत्नीं रूपेणाऽहं जयामि, ममैतस्मिन् मनोरथे परिपूर्णे जाते तव पूजां करिष्यामि !' । इत्युक्त्वा सा कृष्णसमीपे जगाम । ऊचे च–'तव प्रिया काऽस्ति ?' । अथ हरिः सत्यभामयाऽन्याभिश्च स्त्रीभिः सह श्रीप्रासादे आगात्, तदा तत्र रुक्मिण्युत्थाय 'कां नमामि ?' इत्यवदत् । कृष्णेन तस्याः सत्यभामा दर्शिता, तदा सत्यभामा जगाद–'असौ मां कथं वन्दिष्यते ?, यतोऽज्ञानाद् मयैव वन्दिता' । तदा हसित्वा हरिर्बभाषे–भगिनीवन्दने को दोषः ?' । ततो विलक्षा सत्यभामा स्वगृहेऽगात् । ततः कृष्णो रुक्मिण्यै महतीं सम्पदं ददौ, तया सार्धं च स्नेहसुधारसनिमग्नो रेमे ।

अन्यदा नारद आगात् । तदा केशवेनाऽर्चयित्वा भाषितः–'भगवन् ! किञ्चिदाश्चर्यं दृष्टम् ?, यतस्त्वं हि

१ राज्ञीनाम् । २ लक्ष्मीप्रासादे ।

तत्कृते सर्वत्र भ्रमसि'। नारदोऽभाषत—'श्रृणु, वैताढ्यगिरौ जाम्बवान् विद्याधरेन्द्रोऽस्ति, तत्प्रिया शिवचन्द्रा विद्यते। तयोः पुत्रो विष्वक्सेनः, पुत्री जाम्बवतीनाम्नी कुमारी वर्तते, रूपेण तत्सदृशी त्रिजगत्यपि काऽपि न दृष्टा न च श्रुता। सा हि क्रीडार्थं नित्यं राजहंसीव गङ्गायां गच्छति। अहं तामाश्चर्यभूतां प्रेक्ष्य तव कथयितुमत्रागमम्'। तच्छ्रुत्वा विष्णुः सबलवाहनस्तत्र त्वरितमगमत्, सखीभिश्च परिवृतां रममाणां तां जाम्बवतीं ददर्श। 'नारदेनेयं यथोक्ता तथैव' इति वदन् हरिस्तां जाम्बवतीं जह्रे। तदा महान् कोलाहलो बभूव। जाम्बवान् खड्ग-खेटकधारी क्रोधमुद्वहन् अन्वगात्, स चाऽनाधृष्टिना शीघ्रं जिग्ये, कृष्णसमीपे च निन्ये। ततश्च वशमागतो जाम्बवान् जाम्बवतीं विष्णवेऽदात्, स्वयं तु अपमानाद् विरक्तो दीक्षां गृहीतवान्। तस्य पुत्रेण विष्वक्सेनेन सहितो हरिस्तां जाम्बवतीं गृहीत्वा द्वारकां जगाम। गोविन्दस्तस्या रुक्मिणीगृहसमीपे गृहं ददौ, अन्यच्च यद्यद् योग्यं तत्तद् ददौ। सा हि रुक्मिण्या समं सखीत्वभाग् अभवत्।

एकदा सिंहलद्वीपेशस्य श्लक्ष्णरोम्णो नृपस्य समीपे गतो दूतो निवृत्य चागतो गोविन्दायेति विज्ञपयामास—'स्वामिन्! तवादेशं श्लक्ष्णरोमा नाऽकरोत्। तस्य तु लक्ष्मणानाम्नी कन्या लक्षणैस्तवैवाऽर्हति। सा चेदानीं द्रुमसेनसेनान्या रक्षिता स्नातुं सागरे आययौ, तत्र च सप्तरात्रं स्नास्यति'। इति श्रुत्वा रामसहितः कृष्णस्तत्र जगाम। तं च सेनान्यं हत्वा लक्ष्मणां च गृहीत्वा ययौ। ततस्तां परिणीय जाम्बवती-

गृहपार्श्वे रत्नगृहे स्थापयामास, परीवारं च ददौ। इतश्च सुराष्ट्रदेशे आयुस्वरीपुर्यां राष्ट्रवर्धनो राजाऽभूत्, तस्य प्रिया विजया। तयोश्च नमुचिनामा पुत्रो युवराजो महाबलवान्, पुत्री सुसीमा रूपसम्पदा निःसीमा वर्तते। सिद्धदिव्यायुधो नमुचिः कृष्णाज्ञां नाऽमन्यत। अन्येद्युः स सुसीमया सह प्रभासे स्नातुं ययौ। शिबिरं निवेश्य तत्र स्थितं तं विज्ञाय कृष्णः सैन्येन सममभ्येत्य जघान, तां सुसीमां चाऽग्रहीत्, परिणीय च लक्ष्मणागृहाभ्यर्णे हर्म्ये मुमोच। केशवस्तस्या अपि महतीम् ऋद्धिं दत्तवान्। राष्ट्रवर्धननृपोऽपि सुसीमायै परिवारं हरेश्च विवाहयोग्यं गज-वाज्यादिकं प्राहिणोत्। ततो मरुदेशे वीतभयपत्तने मेरुनाम्नो राज्ञः कन्यां गौरीं कृष्ण उपायत, तां च सुसीमागृहसमीपस्थे गृहे मुमोच। अथ चाऽरिष्टपुरे नगरे रामसंयुक्तो हरिर्हिरण्यनाभपुत्र्याः पद्मावत्याः स्वयंवरमण्डपे ययौ। रोहिणीभ्रात्रा[1] हिरण्यनाभनृपेण तौ वीरौ जामेयौ इति हेतोर्हर्षेण विधिवत् पूजितौ। हिरण्यनाभराजस्य रैवतनामा ज्येष्ठभ्राता पित्रा सार्द्धं नमिजिनतीर्थे प्रवव्राज। तत्पुत्र्यो रेवती रामा सीता वन्धुमती च, इत्येताश्चतस्रोऽपि रोहिणीसुताय रामाय पुरा प्रदत्ताः। अथ सर्वेषां नृपाणां पश्यतां हरिः पद्मावतीं जहार, स्वयंवरागतांश्च युध्यमानान् सर्वान् राज्ञो जिगाय। ततः स्वस्वपत्नीसहितौ राम-केशवौ द्वारकामीयतुः। गौरीगृहोपान्तगृहे गोविन्दः पद्मावतीं न्यधात्।

---

१ रोहिणी राममाता।

इतश्च गान्धारनाम्नि देशे पुष्कलावतीनगर्यां नग्नजिन्नृपपुत्रश्चारुदत्तराजोऽभवत् । तस्य गान्धारीनाम्नी मनोज्ञाकारधारिणी भगिन्यासीत् । पितरि मृते गोत्रिभिश्चारुदत्तः पराजितः, तदा स दूतेन शरण्यं कृष्णं शरणाय शिश्रिये । अथ तत्कालं हरिर्गान्धारेषु गत्वा तद्गोत्रिणो रणेऽवधीत्, चारुदत्तदत्तां च गान्धारीं परिणीतवान् । तां पद्मावतीगृहपार्श्ववर्तिगृहे स्थापयामास । इति केशवस्य क्रमवेश्मगा अष्टौ महिष्योऽभूवन् ।

अन्येद्यू रुक्मिण्या गृहेऽतिमुक्तर्षिरागतः, तं प्रेक्ष्य सत्यभामाऽपि तत्र शीघ्रमागात् । रुक्मिण्या नत्वा स मुनिः पृष्टः—'किं मम सुतो भावी नवा ?' । तदा 'कृष्णसमस्तव सुतो भविष्यति' इत्युक्त्वा स मुनिर्ययौ । अथ सत्यभामा तद् मुनिवचनम् आत्मनो मन्यमाना रुक्मिणीमुवाच—'मम कृष्णसदृशो नन्दनो भावी' । रुक्मिणी प्रत्यूचे—'ऋषिवचनं छलाद् न फलति' । एवं विवदमाने ते सत्यभामा-रुक्मिण्यौ कृष्णपार्श्वे ईयतुः । तदा तत्रागतः स्वभ्राता दुर्योधननृपः सत्यभामयोचे—'मदीयो नन्दनस्तव जामाता भविष्यति' । रुक्मिण्याऽपि तथैव स उक्तः । तदा दुर्योधन आह स्म—'अहं तस्मै सुतां दास्ये यं पुत्रं युवयोर्मध्ये एका प्रसविष्यते' । ततः सत्यभामा जगाद—'यस्याः सुतः प्रथमं परिणेष्यति तद्विवाहेऽन्यया स्वकेशाः खलु देयाः, अत्र साक्षिणः प्रतिभुवश्च रामपादा गोवर्धनो दुर्योधनश्च' । इति कथयित्वा ते द्वे अपि स्वं स्वं गृहं जग्मतुः ।

अथाऽन्यदा रुक्मिणी निशान्ते धवलवृषभस्थितविमाने स्वामारूढां ददर्श, अजागश्च । तदानीमेव

महाशुक्राद् महर्द्धिको देवश्च्युतस्तस्या रुक्मिणीदेव्या उदरेऽवातरत्। तं स्वप्नं सा हरेरकथयत्, तदा हरिः कथयामास–'तव विश्वैकवीरः पुत्रो भावी'। अथ सत्यभामाया दासी तादृशं तं स्वप्नार्थं निशम्य गत्वा च तस्याः कर्णदुःखदायिनमकथयत्। ततः सा कूटं स्वप्नं कल्पयित्वाऽऽगत्य च कृष्णायाख्यत्–'अद्य मया हस्तीशसमानो हस्ती स्वप्ने दृष्टः'। कृष्ण इङ्गितैस्तत्कूटं मत्वाऽपि 'असौ मा कुप्यद्' इति ध्यात्वाऽथ कथयामास–'तव खलु शुभः पुत्रो भावी'। तदा दैवयोगात्तस्या अपि गर्भः समभवत्, उदरं चाऽवर्धिष्ट। रुक्मिणी तु उत्तमगर्भत्वाद् यथावस्थोदरा बभूव। अन्यदा सत्यभामा केशवमुवाच–'असौ तव प्रिया रुक्मिणी मायया गर्भं शशंस, द्वयोरुदरं निरीक्षस्व'। तदैव च कृष्णं वर्धयन्त्येका दासी समाययौ–'अधुना रुक्मिणीदेव्या कनकप्रभो महात्मा पुत्रः सुषुवे'। सत्यभामा तु तन्निशम्य विलक्षा क्रोधाध्माता गृहे गच्छन्त्येव भानुकनामानं पुत्रमजीजनत्। अथ कृष्णो हृष्टो रुक्मिणीगृहे ययौ, तत्र चाऽर्वाक्सिंहासनोपविष्टो नन्दनम् आनाय्याऽपश्यत्। स्वशरीरकान्त्या सर्वाः दिशः प्रद्योतयन्नेष नामतः प्रद्युम्नोऽस्तु, इतिनाम्ना तं बालमुल्लापयन् केशवस्तत्र क्षणमस्थात्। तदा प्राग्भववैराद् धूमकेतुसुरो रुक्मिणीवेष आगत्य कृष्णाद् बालं गृहीत्वा वैताढ्यपर्वतं प्रत्यगात्। तत्र भूतरमणोद्याने टङ्कशिलोपरि गत्वा दध्यौ–'किमेनमास्फाल्य हन्मि ?, परमेवं हि दुःखभाग् न भवेत्, तस्मात् शिलापृष्ठे मुञ्चामि, यथा निराहारो बुभुक्षयाऽऽक्रन्दं कुर्वन्नेष म्रियेत'। इति निश्चित्य तं तत्रोत्सृज्य स निजस्थानेऽगात्। अथ स बालश्चरमशरीरित्वाद् निरुपक्रमायुः

बहुपर्णव्यासप्रदेशेऽविबाधितं पपात । प्रातश्चाऽग्निज्वालपुरात् स्वपुरं प्रति गच्छतः कालसंवरविद्याधरस्य विमानं तत्राऽस्खलत् । तत्स्खलनकारणं चिन्तयन् सोऽधस्तादुत्ततार, तं च महाकान्तिं बालमपश्यत् । 'मम विमानस्खलने हेतुः कोऽप्यसौ महात्मा' इति ज्ञात्वा, तं गृहीत्वा स्वपत्न्यै कनकमालायै पुत्रत्वेनाऽऽर्पयत् । स च खेचरो मेघकूटनाम्नि स्वनगरे गत्वाऽवदत्–'मत्प्रिया गूढगर्भाऽऽसीत्, अधुना पुत्रं प्रसुषुवे' । ततः पुत्रजन्मोत्सवं विधाय स कालसंवरखेचरः शुभदिने दिशां प्रद्योतनात्तस्य 'प्रद्युम्न' इति नाम ददौ ।

इतश्च रुक्मिण्यागत्य कृष्णमपृच्छत्–'नाथ! क्व तव पुत्रः?' । तदा 'त्वयाऽधुनैव गृहीतः' इति सा विष्णुनोक्ता । ततो 'हे नाथ! किं विप्रतारयसि?' इति तया पुनरुक्तः कृष्णः 'केनाऽप्यहं छलितोऽस्मि' इति ज्ञात्वा, बहुधा सुतमन्वेषयत् । अथ पुत्रशुद्धौ अप्राप्तायां रुक्मिणी मूर्च्छया पृथ्व्यामपतत् । लब्धसंज्ञा तु परिजनैः समं करुणस्वरमतीव रुरोद । यदवो यदुस्त्रियः सर्वलोकाश्च दुःखिता जाताः । एका सत्यभामा तु परीवारसहिता जहर्ष । 'कृष्णस्य समर्थस्याऽधुनापि पुत्रशुद्धिः किं नागता?' इति वदन्त्या रुक्मिण्या कृष्णोऽत्यन्तदुःखभाजनमकारि । अथ सर्वैर्यदुभिः सममुद्विग्नस्य विष्णोः सभायामेकदा नारद आगात्, 'किमेतद्' इति च जगाद । तदा कृष्ण उवाच–'रुक्मिण्या जातमात्रः पुत्रो मम करात् केनाऽप्यपहृतः, भगवन्! तस्य शुद्धिं किं त्वं जानासि?' । तदा नारदः कथयामास–'अत्र महा-

ज्ञानी अतिमुक्तर्षिरासीत्, स तु मोक्षं गतः। अधुना भरतक्षेत्रे कोऽपि तत्सदृशो ज्ञानी नास्ति, ततो हे हरे! पूर्वमहाविदेहेषु गत्वाऽहं सीमन्धरस्वामिनं पृच्छामि'। इति श्रुत्वा हृष्टेन कृष्णेनाऽन्यैश्च यदुभिः पूजयित्वा प्रार्थितो नारदः शीघ्रं सीमन्धरस्वामिसमीपे ययौ। समवसरणे स्थितं तं जिनेन्द्रं नत्वा पप्रच्छ—'हे प्रभो! कृष्ण-रुक्मिण्योः पुत्रः साम्प्रतं काऽस्ति?'। स्वामी कथयामास—'पूर्वभववैरिणा धूमकेतुसुरेण च्छलेन कृष्णस्य पुत्रः प्रद्युम्ननामा हृतः। तेन वैताढ्ये शिलायां मुक्तः, परं स न तु मृतः, यतश्चरमशरीरित्वात् स हन्तुं शक्रेणाऽपि न शक्यते। प्रातःकाले च गच्छता कालसंवरेण खेचरेन्द्रेण दृष्टः, स्वपत्न्यै पुत्रत्वेनाऽर्पितः। सम्प्रति तत्र सुखेन वर्धमानोऽस्ति'। इति श्रुत्वा, 'धूमकेतुसुरस्य तेन समं पूर्वजन्मनि कथं वैरमभूत्?' इति नारदेन पुनरपि पृष्टः स्वामीत्युवाच—

"अत्रैव भरते मगधदेशे शालिग्रामे मनोरमं नामोद्यानम्। तस्याऽधिष्ठायको यक्षः सुमना इत्यभवत्। तत्र च ग्रामे सोमदेवनामा विप्र आसीत्। तस्याऽग्निलायां भार्यायाम् अग्निभूति-वायुभूती वेदार्थज्ञौ पुत्रावभूताम्। तत्र तौ द्वावपि विद्यया विख्यातौ प्राप्तयौवनावस्थौ विविधभोगान् भुञ्जानौ मदोद्धुरौ तस्थतुः। अन्यदा तस्मिन् मनोरमोपवने नन्दिवर्धनाचार्यः समवासार्षीत्, लोकेन चागत्य वन्दितः। अग्निभूति-वायुभूती तु दृप्तावेवमूचतुः—'भो जैनमतवासितमते! श्वेताम्बर! यदि शास्त्रार्थं किञ्चिज्जानासि तदा वद'। तदा नन्दिवर्धनशिष्योऽवधिज्ञानी सत्यनामा तौ प्रति पप्रच्छ—'युवां कुत आगतौ?'।

तावपि 'शालिग्रामाद्' इति तं कथयामासतुः । तदा पुनः सत्योऽब्रवीत्—'भो भो ! इत्थमहं न पृच्छामि, किन्तु कुतो भवाद् युवाभ्यां मानुष्यं प्राप्तमिति युवयोरतीतवार्तां पृच्छामि । यदि किञ्चिज्जानीथस्तदा त्वरितं जल्पतम्' । ततस्तौ ज्ञानवर्जितौ लज्जयाऽधोमुखौ तस्थतुः । अथ स सत्यस्तद्भवं[1]माख्यातुमेवं प्रचक्रमे[2]—"अहो ब्राह्मणौ ! युवां पूर्वभवेऽस्य ग्रामस्य वनस्थल्यां मांसलोलुपौ शृगालावभूताम् । अन्यदा एकेन कुटुम्बिना क्षेत्रे रात्रौ चर्मरज्ज्वादिकं मुक्तम्, मेघवृष्ट्याऽऽर्द्रीकृतम्, तत् सर्वं ताभ्यां जम्बुकाभ्यां[3] भक्षितम् । अत्याहारात् तौ मृत्वा निजकर्मणा युवां सोमदेवविप्रपुत्रौ इहभवेऽभूतम् । अथ प्रातः स कुटुम्बी सर्वं भक्षितं प्रेक्ष्य स्वगृहे गतः । कियत्यपि च काले गते स विपद्य स्ववधूसुतो[4]ऽजायत । जातिस्मरणं प्राप्तः स 'स्नुषा[5] माता पुत्रश्च पिता कथं मया कथ्यः' इति विचिन्त्य कैतवाद् जन्ममूक एवाऽभवत् । यदि युवयोर्नो प्रत्ययस्तदा तस्य पृच्छतं, यथा स एनं वृत्तान्तं मूकत्वं मुक्त्वा युवयोः कथयति" । तदा सविस्मयेन लोकेन तत्कालं स मौनी हालिकस्तत्रानीतः । सत्यसाधुनोचे—'भोः कर्षक ! त्वमादितः स्वप्राग्जन्म ब्रूहि । पुत्रः पिता पिता च पुत्र ईदृश्येव प्रायो भवस्थितिः, तस्मात् प्राग्जन्मसत्कां लज्जां मौनं च त्यज' । तदाऽऽत्मसंवादं श्रुत्वा हृष्टस्तं मुनिं प्रणम्य स कुटुम्बी सर्वेषां लोकानां शृण्वतां स्वपूर्वभवं तथैव कथयामास । ततस्तत्र बहवः प्रव्रज्यां जगृहुः, स कौटुम्बिकः प्रतिबुद्धः, तौ विप्रौ तु

१ तयोः पूर्वभवम् । २ आरेभे । ३ शृगालाभ्याम् । ४ स्वपुत्रपत्नीपुत्रः । ५ पुत्रपत्नी ।

जनैर्हास्यमानौ विलक्षौ स्वगृहे जग्मतुः । अथ वैरायमाणौ तौ तं मुनिं हन्तुं निशायां खड्गकरौ आयातौ, तदा सुमनसा यक्षेण तत्कालं स्तम्भितौ । प्रभाते तन्माता-पितरौ लोकाश्चाऽऽक्रन्दं कुर्वन्तौ तौ ददृशुः । सुमनोयक्षः प्रत्यक्षमिदमूचे–'एतौ दुष्टौ मुनिमारणाभिप्रायौ दुर्मती मयका स्तम्भितौ, यदि प्रव्रज्यां गृह्णीतस्तदा मुञ्चामि, नान्यथा' । तदा तौ कथयामासतुः–'साधुधर्मो दुस्तरः, तत आवां श्रावकधर्मं ग्रहीष्यावः' । इति ताभ्यां कथिते यक्षेण मुक्तौ । तत्प्रभृति तौ जैनधर्मं यथाविधि चक्रतुः, परं तत्पितरौ तु मनागप्यर्हद्धर्मं न प्रपेदाते । अग्निभूति-वायुभूती मृत्वा सौधर्मदेवलोके पल्योपमायुष्कौ देवावभूताम् । ततश्च्युत्वा गजपुरेऽर्हद्दासश्रेष्ठिपुत्रौ पूर्णभद्र-माणिभद्रनामानौ प्राग्भवक्रमतः श्रावकावभूताम् । अन्यदा तत्र नगरे महेन्द्रमुनिरागात्, तत्पार्श्वे धर्मं श्रुत्वाऽर्हद्दासश्रेष्ठी प्रवव्राज । तौ पूर्णभद्र-माणिभद्रावपि तं मुनिं वन्दितुं यान्तौ पथि चण्डालं शुनीं च ददृशतुः । तत्कालं तयोरुपरि स्नेहितौ जातौ । ततः शीघ्रं गत्वा मुनिं च नत्वा पप्रच्छतुः–'भगवन्! एष चण्डालः कः?, का च शुनी?, यद्दर्शनेनावयोः स्नेहो बभूव' । तदा स साधुराख्यत्–"अग्निभूति-वायुभूतिभवे युवयोः पिता सोमदेवविप्रः, माता चाऽग्निलानाम्नी । स पिता मृत्वाऽत्रैव भरते शङ्खपुरे जितशत्रुनृपोऽभवत्, स चाऽतीव परस्त्रीरतः । अग्निलाऽपि मृत्वा तत्रैव पुरे सोमभूतिविप्रस्य रुक्मिणीनाम्नी स्त्री समजनि । अन्यदा तां स्वगृहाङ्गणगतां जितशत्रुनृपो गच्छन् ददर्श, सद्यः कामवशश्च संजज्ञे । ततः सोमभूतेरपराधमुत्पाद्य तामन्तःपुरेऽक्षिपत् ।

स विप्रस्तु तद्विरहातुरोऽश्मिमग्न इवाऽस्थात्। राजा जितशत्रुस्तया सह सहस्रवर्षाणि भोगान् भुक्त्वा मृत्वा च त्रिपल्योपमायुष्को नरके नारको बभूव। ततश्च्युत्वा मृगोऽभूत्, स च लुब्धकैर्मारितः। ततो मायामन्दिरं श्रेष्ठिसुतोऽभवत्। सोऽपि मृत्वा गजो जातः। दैवयोगाद् जातिस्मरणः स गजोऽनशनं कृत्वाऽष्टादशे दिवसे मृतस्त्रिपल्योपमायुष्को वैमानिको देवोऽभूत्। ततश्च्युत्वा स एष चण्डालोऽजायत। सा च रुक्मिणी भवान् भ्रान्त्वैषा शुनी बभूव। तेन हेतुना युवयोरेतयोरुपरि स्नेहः"। इति श्रुत्वा तौ पूर्णभद्र-माणिभद्रौ तदा प्राप्तया जातिस्मृत्या तं चण्डालं शुनीं चाऽबोधयताम्। ततो विरक्तश्चण्डाल एकमासस्याऽनशनं कृत्वा मृत्वा च नन्दीश्वरद्वीपे सुरः समभवत्। सा प्रतिबुद्धा शुन्यपि कृतानशना मृत्वा तत्रैव शङ्खपुरे सुदर्शनानाम्नी राजपुत्री बभूव। पुनरपि स महेन्द्रसाधुस्तत्रागात्, तदा ताभ्यामर्हद्दासपुत्राभ्यां शुनी-चण्डालगतिं पृष्टः स सर्वमपि कथितवान्। ततस्ताभ्यामेव सा राजकुमारी प्रतिबोधिता दीक्षां गृहीत्वा देवलोकेऽगमत्। तौ पूर्णभद्र-माणिभद्रौ तु श्रावकधर्मं प्रतिपाल्य मृत्वा च सौधर्मे सामानिकौ सुरावभूताम्। ततश्च्युत्वोभौ हस्तिनापुरे विश्वक्सेननृपस्य मधु-कैटभनामानौ पुत्रौ बभूवतुः। अथ स नन्दीश्वरसुरश्च्युत्वा चिरकालं च भवं भ्रान्त्वा वटपुरे कनकप्रभनामा राजाऽभूत्। सा सुदर्शना दिवश्च्युत्वा भूरिशो भवं परिभ्रम्य कनकप्रभराजस्य चन्द्राभानाम्नी अग्रमहिषी बभूव। अथ राजा विष्वक्सेनो मधुं राज्ये कैटभं च यौवराज्ये न्यस्य दीक्षामादाय ब्रह्मलोकमगात्। वशीकृतसर्वभुवोस्तयोर्मधु-कैटभयोर्देशं

छलकृद् भीमः पल्लीपतिरुपाद्रवत्, तं हन्तुं मधुः प्रतस्थे । अथ मार्गे वटपुरे कनकप्रभनृपेण स भोजनादिभिरभ्यर्चितः । भोजनान्ते च स सेवकः कनकप्रभभूपः स्वामिभक्त्या चन्द्राभया राज्ञ्या समं प्राभृतानि लात्वा मधुनृपस्याऽग्रेऽस्थात् । मधुं प्रणम्य सा चन्द्राभा पुनरप्यन्तःपुरे ययौ । तदैव मधुः कामार्तस्तां बलात्कारादप्यादित्सति, तदा प्रधानेन निवारितोऽग्रे चचाल । भीमपल्लीशं जित्वा निवृत्य च पुनस्तत्राययौ । कनकप्रभनृपेण पुनरपि पूजितः, तदा स उवाच—'अस्माकं तव प्राभृतैः सृतम्, एषा चन्द्राभैवाऽर्प्यताम् !' । एवं याच्यमानोऽपि कनकप्रभो यदा न ददौ तदा मधुराच्छिद्याऽपि चन्द्राभां स्वपुरे निनाय । ततो दुःखितः कनकप्रभो मूर्च्छया पृथ्व्यां पपात !, उत्थायोच्चैर्विललाप, ग्रथिल इव चाऽभ्रमत् । अन्यदा मधुनृपोऽमात्यैः समं कस्मिंश्चिद् न्याये तस्थौ, तन्निर्णयमविधायाऽपि चन्द्राभागृहमगात् । तदा तया स पृष्टः—'अद्य कथं चिरायितम् ?' । स जगाद—'अहमद्य पारदारिकवादेऽस्थाम्' । तदा सा हसित्वोवाच—'स पारदारिकस्तव पूज्यः !' । मधुरवदत्—'कथं पूज्यः ? पारदारिकास्तु निग्राह्या एव' । चन्द्राभा पुनरपि जगाद—'यद्येवं त्वं न्यायकारी तदा स्वात्मानं पारदारिकं प्रथमं किं न जानीषे ?' । तच्छ्रुत्वा स प्रतिबुद्धो लज्जितोऽस्थात् । अथ तत्र गायन् नृत्यन् ग्रथिलचेष्टां च कुर्वन् बालकपरिवृतः स कनकप्रभ आगात् । तं प्रेक्ष्य चन्द्राभा दध्यौ—'मद्वियोगेनैष मम पतिरीदृशीं दुर्दशां प्राप्तवान्, तद् मां परवशां धिग् धिक् !' । इति सा विचिन्त्य तमागच्छन्तं मधवे दर्शयामास । मधुरपि तेन स्वकीयदुष्कर्मणाऽन्वतप्यत, स्वात्मानं च पुनः पुनर्निनिन्द । पश्चाद् धुन्धु-

नामानं पुत्रं स्वे राज्ये स्थापयित्वा कैटभसहितो मधुनृपो विमलवाहनगुरुपार्श्वे दीक्षां जग्राह । तौ बहूनि वर्षसहस्राणि अत्युग्रं तपस्तेपाते । द्वादशाङ्गीधरौ सदैव साधुवैयावृत्त्यकरौ द्वावपि प्रान्तेऽनशनं कृत्वा गृहीतालोचनौ मृत्वा महाशुक्रे सामानिकौ सुरावभूताम् । स कनकप्रभनृपोऽपि क्षुधा-तृषादिभिः पीडितस्त्रिसहस्रवर्षाणि क्षपयित्वा व्यपद्यत, ज्योतिष्केषु च धूमकेतुनामा सुरोऽभूत् । स चाऽवधिज्ञानेन पूर्वभववैरिणं मधुं ज्ञात्वा विलोकयामास, परं तं महर्द्धिकत्वाद् नाऽपश्यत् । ततश्च्युत्वा मनुष्यत्वं प्राप्य स तापसोऽभवत् । बालतपः कृत्वा मृत्वा च वैमानिकदेवो बभूव । तत्रापि महर्द्धिकं मधुं द्रष्टुं मनागपि नो समर्थोऽभवत् । तत्स्थानादपि च्युत्वा संसारं बहुतरं भ्रान्त्वा च स कर्मवशात् पुनरपि ज्योतिष्केषु धूमकेतुनामा सुरो जज्ञे । अत्रान्तरे मधुजीवो देवो महाशुक्रदेवलोकाच्च्युतः कृष्णाग्रमहिष्या रुक्मिण्या उदरेऽवातरत् । तदा धूमकेतुः पूर्ववैराद् जातमात्रं तं बालं जह्रे, मारणाशयश्च स दुष्टस्तं टङ्कशिलोपरि अमुञ्चत्, परं स्वप्रभावाद् अक्षताङ्गः स कालसंवरेणाऽऽददे । रुक्मिण्याः षोडशवर्षान्ते तस्य सङ्गमो भविता" ।

इति श्रुत्वा पुनरपि नारदेन प्रभुः पृष्टः—'भगवन् ! एवं रुक्मिण्याः पुत्रेण समं वियोगः केन कर्मणाऽभूत् ?' । तदा स्वामी जगाद—"जम्बूद्वीपस्य भरतक्षेत्रे मगधदेशे लक्ष्मीग्रामनाम्नि ग्रामे सोमदेवविप्रोऽभूत् । तस्य लक्ष्मीवती स्त्री । सा कदाप्युद्याने गता । तत्र मयूराण्डं दृष्ट्वा कुङ्कुमरक्तहस्तेन कौतुकेनाऽस्पृशत्, तत्स्पर्शेन वर्णान्तरं गन्धान्तरं च प्राप्तं तदण्डं मात्रा 'निजम्' इत्यजानत्या षोडश घटिकास्त्य-

कम्। ततोऽकस्माद् मेघवृष्टया स्वभावस्थितं तदण्डकं प्रेक्ष्य मात्रा सेवितम्, कालेन च मयूरो जातः। मुहुरपि सा लक्ष्मीवती तत्रागता, तं च मयूरकम् अतिरम्यं दृष्ट्वा रुदत्यामपि तन्मातरि जग्राह। ततः स्वगृहे सुन्दरपञ्जरे स्थापयित्वाऽन्न-पानैः प्रीणयन्ती तं तथा नृत्यमशिक्षयद् यथा सोऽतीव विलोकनीयं ननर्त, परं तन्माता मयूरी तु पुत्रस्नेहेन बद्धा विरसस्वरं रसन्ती तत्स्थानकं न मुमोच। ततो लोकस्तां लक्ष्मीवतीमित्यूचे—'तव कौतुकं तु कदापि न पूर्यते, परमियं वराकी मयूरी म्रियते। ततस्तत्सुतं मुञ्च'। तद्वचनेन साऽपि सकृपा जाता। ततो यतः स्थानाद् गृहीतस्तत्र स्थाने षोडशमासिकं उद्यौवनं तं मयूरबालकं मुमोच। तेन प्रमादेन तया षोडशवार्षिकं स्वपुत्रवियोगवेदनीयं महत्तरं कर्म बद्धम्। अथाऽन्यदा तस्यां दर्पणे स्वरूपं शृङ्गारं च पश्यन्त्यां गृहे समाधिगुप्तनामा साधुर्भिक्षार्थं प्राविशत्। तदा तत्पतिस्तामुवाच—'अस्मै भिक्षां देहि'। तदैव च केनचित् पुरुषेणाऽऽकारितः स बहिर्ययौ। तया तु 'थु थु' इति कुर्वत्या कठिनाक्षरं जल्पित्वा स महर्षिर्गृहात् कर्षितः, द्वारं च त्वरितं दत्तम्। तेन निन्दाकर्मणा सा सप्तमे दिने सर्वाङ्गेषु गलत्कुष्ठा समभूत्। ततो दुःखेन विरक्ता वह्नौ प्रविवेश, मृत्वा च तत्र ग्रामे रजकस्य गृहे गर्दभी जाता। पुनरपि मृत्वा तत्रैव ग्रामे गर्ताशूकरी बभूव। साऽपि मृत्वा शुनी जाता। सा च दवाग्निना दग्धा, मस्तकं स्फुटितम्, तया वेदनया मृत्वा सा भृगुकच्छनगरे नर्मदातटे दुर्गन्धा दुर्भगा च काणाभिधाना धीवरपुत्र्यभूत्। तद्दुर्गन्धाऽसहाभ्यां पितृभ्यां सा नर्मदातटे मुक्ता। तत्र च क्रमेण उद्यौवना सा नावा निर-

न्तरं लोकानुत्तारयामास । अथ दैवयोगेन स समाधिगुप्तर्षिः शीतर्त्तौं तत्रागात्, निशि च कायोत्सर्गेण पर्वत इव निष्कम्पोऽस्थात् । 'एष महात्मा सर्वां निशां कथं दुःसहं शीतं सहिष्यते ?' इत्यार्द्रचित्ता सा विमृश्य तं मुनिं तृणैः प्रावृणोत्, व्यतीतायां च रात्रौ सा मुनिं प्रणनाम । मुनिरपि भद्रकत्वेन तस्यै धर्ममकथयत् । ततो 'मयैष क्वापि पूर्वं दृष्ट' इति चिरं ध्यात्वा तया पृष्टः सन् स मुनिस्तस्यास्तान् पूर्वभवान् कथयामास । पुनरपि स महर्षिरूचे—'कृतसाधुनिन्दयेह दुर्गन्धा जाताऽसि, यतः सर्वं कर्मानुसारि, तेन तत्क्षये यतनीयम्' । इति श्रुत्वा सा संजातजातिस्मरणा प्राग्भवे कृतां साधुजुगुप्सां ज्ञातुं लग्ना, पश्चात्तं मुनिं पुनः पुनः क्षमयामास, स्वं चाऽत्यन्तं निनिन्द । तत्प्रभृति सा श्राविकाऽभूत्, तेन च कृपालुना मुनिना धर्मश्रीनाम्न्या आर्यायाः समर्पिता । तया समं विचरन्ती साऽतीव सुखिनी जाता । अथ क्वापि ग्रामे गतया धर्मश्रिया नायलनाम्नः श्रावकस्य साऽर्पिता । तत्र एकान्तरोपवासस्थिता सदा जिनपूजासक्ता नायलस्य गृहे द्वादश वर्षाणि सुखेन निनाय । प्रान्तेऽनशनं कृत्वा मृत्वा चाऽच्युतेन्द्रस्याऽग्रमहिषी पञ्चपञ्चाशत्पल्योपमायुष्काऽभवत् । ततश्च्युत्वा सा कृष्णस्याऽग्रमहिषी रुक्मिणीनाम्नी बभूव । मयूरीबालकवियोगप्रदानात् षोडश वर्षाणि सा रुक्मिणी पुत्रविरहदुःखमनुभविष्यति" ।

इति श्रुत्वा नारदस्तं तीर्थङ्करं प्रणम्योत्पत्य च वैताढ्यपर्वते मेघकूटाह्वे पुरेऽगात् । 'महाभाग्येन तव पुत्रोऽभवत्' इति जल्पंश्च स नारदः कालसंवरेण पूजितः, तस्य च प्रद्युम्नकुमारो दर्शितः । नारदोऽपि तं

रुक्मिणीसदृशं दृष्ट्वा सप्रत्ययस्तं विद्याधरेशमापृच्छ्य द्वारकानगरीं ययौ, कृष्णादीनां च सर्वं सुतसमाचारमाचख्यौ, रुक्मिण्या अपि लक्ष्मीवतीभवादारभ्य सर्वान् भवान् कथयामास । ततश्च सा रुक्मिणी देवी भक्त्या रचिताञ्जलिपुटा तत्रस्थाऽपि सीमन्धरस्वामिनं प्रणनाम । 'षोडशवर्षान्ते सुतेन सार्धं सङ्गमो भविता' इत्यार्हतवचनेन स्वस्थीभूता तस्थौ ।

इतश्च पूर्वं श्रीऋषभस्वामिनः कुरुनामा सुतोऽभूत्, यस्य नाम्ना कुरुक्षेत्रमत्र कथ्यते । तस्य कुरुराजस्य हस्तीत्यभिधानः पुत्रोऽभूत्, यस्य नाम्ना हस्तिनापुरमजायत । तस्य सन्ताने राजाऽनन्तवीर्योऽभवत्, तस्माच्च कृतवीर्योऽभूत्, ततश्च सुभूमचक्री बभूव । ततोऽप्यसङ्ख्यभूपेषु भूतेषु राजा शान्तनुरभूत्, तस्य गङ्गा-सत्यवत्यौ द्वे पत्न्यौ बभूवतुः । गङ्गायां गाङ्गेयनामा नन्दनः समभवत्, सत्यवत्यां तु चित्राङ्गद-चित्रवीर्यौ द्वौ पुत्रावभूताम् । चित्रवीर्यस्याऽम्बिका-ऽम्बालिका-म्बा इतिनाम्न्यस्तिस्रः पत्न्यो बभूवुः । तासां तिसृणामपि त्रयः पुत्रा अभूवन्, ते चैते धृतराष्ट्र-पाण्डु-विदुरा इत्यनुक्रमेण ज्ञेयाः । धृतराष्ट्रो धृतराज्योऽऽजनि, पाण्डुस्त्वाखेटकतत्परोऽभवत् । धृतराष्ट्रः सबलनृपपुत्रस्य गन्धारदेशस्वामिनः शकुनिनृपस्याऽष्टौ गान्धारीप्रमुखा भगिनीः परिणीतवान्, तासु दुर्योधनादयः शतपुत्रा जज्ञिरे । पाण्डोस्तु कुन्त्यां युधिष्ठिर-भीमा-ऽर्जुनास्त्रयः पुत्रा अभवन्, द्वितीयायां मद्रीनाम्न्यां शल्यनृपभगिन्यां नकुल-सहदेवौ द्वौ पुत्रावभूताम् । एवमेते पञ्चाऽपि पञ्चानना इव शूरा विद्याधराणामप्यजय्या विद्या-बाहुबलोर्जिता बभूवुः । तेऽनुज्येष्ठम्

अतीव विनीता अन्यायनिराकरणतत्परा लोकोत्तरैर्गुणैर्लोकान् प्रीणयामासुः। अन्यदा काम्पिल्यपुराद् द्रुपदराजस्य दूत आगत्य नत्वा च पाण्डुराजमदो बभाषे—'द्रुपदनृपस्य पुत्री धृष्टद्युम्नस्य भगिनी चुलनीराज्ञी-कुक्षिसम्भवा द्रौपदी नाम कन्याऽस्ति। तस्याः स्वयंवरे दश दशार्हा, राम-केशवौ, दमदन्त-शिशुपाल-रुक्मि-कर्ण-दुर्योधना अन्येऽपि च बहवो महाबलिनो राजानः कुमाराश्च मत्स्वामिनाऽऽकारिताः सम्प्रत्यागच्छन्तः सन्ति। त्वमप्येभिर्देवकुमारसदृशैः पञ्चभिः पुत्रैः सह तत्रागत्य तं स्वयंवरमण्डपमलङ्कुरुष्व'। इति श्रुत्वा प्रमुदितः पाण्डुस्तैः पञ्चभिः पुत्रैर्बाणैः कन्दर्प इव तदैव काम्पिल्यपुरेऽगात्। अन्येऽपि च भूपा आययुः। द्रुपदनृपेण सर्वेऽपि ते पार्थिवाः पूजितास्तत्र स्वयंवरमण्डपे गगने ग्रहा इव शुशुभिरे। अथ स्नात्वा स्फारवेष-माल्या-ऽद्भुतालङ्कारधारिणी द्रौपदी अर्हन्तमर्चित्वा सखीभिः परिवृता रूपेण सुरकन्येव सामानिकसुरैरिव राम-कृष्णादिभिरलङ्कृतं तं स्वयंवरमण्डपमागात्। सख्या सर्वेषु राजसु दर्श्यमानेषु सा द्रौपदी यत्र पञ्च पाण्डवा उपविष्टाः सन्ति तत्राययौ। तदा सा सानुरागा तेषां पञ्चानामपि कण्ठेषु समकालं वरमालां चिक्षेप। 'किमेतद्?' इति तत्र राजमण्डलं यावत् साश्चर्यमभूत् तावत्तत्र कश्चिचारणर्षिराययौ। 'अस्या द्रौपद्याः पञ्च पतयः किं स्युः?' इति कृष्णादिभिर्नृपैः पृष्टो मुनिः कथयामास—"एषा प्राग्भवसमुपार्जितकर्मणा निश्चितं पञ्चपतिका भविष्यति, अत्र किमाश्चर्यम्?, यतः कर्मणां गतिस्तु विषमा विद्यते। तथाहि—

"अत्रैव भरते चम्पापुर्यां सोमदेवः सोमभूतिः सोमदत्तश्चेति त्रयः सोदरा विप्रा अभवन्। धन-धान्यसमृद्धानां तेषां क्रमाद् नागश्रीर्भूतश्रीर्यक्षश्रीश्चेति नामतः पत्न्य आसन्। परस्परं स्निग्धास्तेऽन्येद्युरिति व्यवस्थां चक्रिरे यत् 'सर्वैरेकैकगृहे वारकेण वारकेण भोक्तव्यम्'। अथ तथैव तेषां सर्वेषां कुर्वतामन्यदा सोमदेवगृहे भोजनावसरे संप्राप्ते नागश्रीः प्रगुणं निष्पादयामास। तया विविधभोज्यानि पचन्त्याऽजानत्या कटुतुम्बं विपच्य शाकं कृतम्। तदा 'एतत् कीदृशं जातम्?' इति ज्ञातुं तयाऽऽस्वादितम्, अभोज्यमिति ज्ञातं, तदैव च थूत्कृतम्। 'एतद् विविधैर्द्रव्यैर्मया संस्कारीकृतं, परं कट्वेव' इति विमृशन्ती विषण्णमानसा तदगोपयत्। तद्वर्जमन्यैर्भोज्यैस्तदा सकुटुम्बान् गृहमागतान् पति-देवरान् भोजयामास। तदैव सुभूमिभागनाम्न्युद्याने ज्ञानवान् धर्मघोषसूरिः समवासरत्। तस्य शिष्यो धर्मरुचिर्मासक्षपणपारणके सोमदेवादिषु गतेषु नागश्रियो गृहे आययौ। 'एष एवाऽनेन शाकेन संतुष्टो भवतु' इति विचार्य सा तत् कटुतुम्बशाकं तस्मै मुनये ददौ। सोऽपि 'मयाऽपूर्वं द्रव्यं प्राप्तम्' इति चिन्तयन् गत्वा पात्रं दर्शयितुं गुरुहस्ते आर्पयत्। गुरुस्तद्गन्धमाघ्रायेत्थं जगाद–'भो भो वत्स! यद्येतत् त्वं भोक्ष्यसे तदा विपत्स्यसे, तदिदं शीघ्रं परिष्ठापय। अपरं पिण्डं सम्यग् ज्ञात्वा गृहीत्वा च पारयेः'। इति गुरुणोक्तः स मुनिर्बहिर्गत्वा शुद्धस्थण्डिलं प्रापत्। तत्र पात्राद् एकस्तुम्बरसबिन्दुः स्वयं भूम्यामपतत्, तत्र लग्नाश्च कीटिका म्रियमाणा अपश्यत्। तदा स मुनिर्दध्यौ–'अस्य बिन्दुनाऽप्यनेकजीवा म्रियन्ते तदाऽस्मिन् परिष्ठापिते तु कियतां प्राणिनां मरणं भवेत्?। ततो

वरमेकोऽहं मृतः, न पुनर्जीवराशयः' । इति निश्चित्य समाहितः स स्वयं तुम्बमाहृतवान्, आराधनां च सम्यक् कृत्वा समाधितत्परो मृत्वा सर्वार्थसिद्धानुत्तरविमानेऽहमिन्द्रः सुरोऽभवत् । इतश्च ते धर्मघोषसूरयो 'धर्मरुचेः कुतो विलम्बोऽभवत् ?' इति ज्ञातुमपरान् साधूनादिक्षन् । बहिर्गतैस्तैः स मृतो दृष्टः, ततस्तस्य रजोहरणादिकं गृहीत्वा गत्वा च प्रौढखेदिभिस्तैर्गुरवे कथितम् । सोऽतिशयज्ञानोपयोगेन नागश्रियः सर्वदुश्चरितं स्वसाधूनां जगाद । ततः सकोपाः साधवः साध्व्यश्च तेषां सोमदेवप्रमुखाणां लोकानां कथयामासुः, द्विक-त्रिक-चतुष्क-चत्वर-महापथेषु च नागश्रीदुष्कर्म प्रकटीचक्रुः । ततः सोमदेवादिभिर्गृहात्कर्षिता सा पापिष्ठा नागश्रीर्लोकैर्निर्भर्त्स्यमाना सर्वतो दुःखिनी पर्यटनं चक्रे । कास-श्वास-ज्वर-कुष्ठादिभिर्दारुणैः षोडशभी रोगैराक्रान्ता सा इहभवेऽपि नरकत्वं प्राप । क्षुधिता तृषिता जीर्णखण्डवस्त्रा निराश्रया च पर्यटन्ती क्रमेण मृत्वा षष्ठं नरकमगात् । तस्मादुद्धृत्य म्लेच्छेष्ववातरत् । ततोऽपि विपद्य सप्तमं नरकं प्राप, तदुद्धृता च मत्स्येष्वगात् । पुनः सप्तमं नरकं गत्वा मत्स्येषूत्पन्ना । एवं सा पापिनी सर्वेषु नरकेषु द्विद्विवारं ययौ । ततश्च पृथिवीकायादिष्वनेकशो वारानुत्पद्य अकामनिर्जरायोगतो बहुदुष्कर्माऽक्षेपयत् । ततश्च साऽत्रैव चम्पानगर्यां सागरदत्तश्रेष्ठिनः सुभद्राकुक्षिसम्भवा सुकुमारिकानाम्नी पुत्री बभूव । तत्रैव च जिनदत्तसार्थवाहो महाधनवान् आसीत्, तस्य भद्रा नाम गेहिनी, सागराभिधानश्च सुतो बभूव । अन्यदा सागरदत्तगृहसमीपे गच्छन् जिनदत्तश्रेष्ठी उद्यौवनां गृहोपरि कन्दुकेन रममाणां कुमारीं सुकुमा-

रिकामपश्यत्। तदा 'मम पुत्रस्यैषा योग्या' इति ध्यायन् स्वगृहे ययौ। ततः सबन्धुर्जिनदत्त आगत्य स्वसुताय सागरदत्तात् सुकुमारिकां ययाचे। सागरदत्त उवाच–'एषा पुत्री मम प्राणप्रिया, अनया विनाऽहं स्थातुं नो समर्थोऽस्मि, यदि तव सुतः सागरो मम गृहजामाता स्यात् तदाऽहं स्वसुतां धनादिभिः समं तस्मै ददामि'। तत 'आलोचयिष्यामि' इति कथयित्वा जिनदत्तः स्वगृहमगात्, सागरस्य च कथयामास। स तु मौनेनाऽस्थात्। 'अनिवारितं नन्वनुमतम्' इति न्यायेन तत्पिता सागरदत्ताय पुत्रं गृहजामातरं मेने। तया कुमार्या समं ताभ्यां श्रेष्ठिभ्यां स सागरकुमारः परिणायितः, तया सार्द्धं च वासगृहे गत्वा स तल्पं शिश्रिये। अथ पूर्वकर्मवशतस्तस्याः स्पर्शेनाऽङ्गारवद् बाढं दह्यमानः सागरकुमारः कथञ्चित् क्षणं तस्थौ, तां निद्रायमाणां मुक्त्वा नष्ट्वा च स त्वरितं स्वगृहमगात्। सा तु निद्राच्छेदे पतिमपश्यन्ती भृशमरुदत्। अथ प्रातर्वधूवरस्य दन्तधावनहेतोः सुभद्रया दास्यादिष्टा, सा तत्र पतिरहितां रोदनं कुर्वतीं सुकुमारिकामपश्यत्। आगत्य सुभद्रायै आख्यत्। सुभद्रा श्रेष्ठिनो जगाद। श्रेष्ठी पुनः स्वयं जिनदत्तायोपालम्भं ददौ। जिनदत्तोऽपि स्वपुत्रमाहूय रहस्यब्रवीत्–'पुत्र! त्वया सुजनस्य सागरदत्तस्य सुतां त्यजता युक्तं न कृतम्, हे वत्स! इदानीमपि सुकुमारिकासमीपे व्रज, यतो मया हि तदा सज्जनानामग्रे ईदृक् प्रतिपन्नं वर्तते'। तदा सागर एवमुवाच–'वरं वह्नौ प्रविशामि, परं न पुनः सुकुमारिकापार्श्वे यास्यामि'। तदा च तद्वचनं

सागरदत्तोऽपि तत्कुड्यान्तरितोऽश्रौषीत् । ततो निराशो गृहे ययौ, सुकुमारिकां चोचे–'त्वयि सागरो विरक्तः, ततस्तुभ्यमन्यपतिमन्विष्य करिष्यामि, हे पुत्रि! खेदं मा कुरु' ।

अथाऽन्यदा स सागरदत्तश्रेष्ठी गवाक्षोपविष्टो निजदुहितुर्दुःखदुःखित एकं कर्परधारिणं जीर्णखण्डवस्त्रधरं भिक्षायाचकं मक्षिकापरीवारपरिवारितं भिक्षुमद्राक्षीत् । तमाकार्य श्रेष्ठिना स कर्परादिकं त्याजितः, ततः स्नापयित्वा भोजनं च कारयित्वा चन्दनचर्चितः स सुखी कृतः । पश्चात्तं श्रेष्ठी जगाद–'वत्स! तुभ्यमेषा सुकुमारिका मया दत्ता, अनया सह भोगान् भुञ्जानो भोजनादिषु निश्चिन्तः सन् मम गृहे सुखेन तिष्ठ'। इत्युक्तः स भिक्षुको हृष्टोऽथ तया सह वासभवनं गतवान्, सुप्तश्च तदङ्गस्पर्शाद् अग्निस्पृष्ट इव बभूव । तदैव च स त्वरितमुत्थाय शीघ्रं निजवेषं गृहीत्वा नष्टः !, सा तु तथैव विषण्णाऽस्थात् । अथ पित्रा दृष्टा इत्यभाष्यत–'वत्से! एष तव पूर्वकर्मणामुदयः, अन्यत्कारणं नास्ति, तद् मनः स्थिरं कृत्वा सन्तुष्टा दानं ददती मम गृहे तिष्ठ'। ततस्तथैव सा धर्मरता सती दानमदात् । अथ कदाचित्तद्गृहे गोपालिकानाम्न्यः साध्व्य आययुः। सा ताः शुद्धैरन्न-पानादिभिः प्रत्यलाभयत्, तत्समीपे च धर्मं श्रुत्वा प्रतिबुद्धा सती दीक्षां जग्राह । चतुर्थ-षष्ठा-ऽष्टमादीनि तपांसि कुर्वती सा गोपालिकाभिः सार्धं विहारमकार्षीत् । कदापि सा सुभूमिभागोद्याने रविमण्डलं पश्यन्ती ताः साध्वीर्जगाद–'अहमत्र आतापनां गृह्णामि' । तदा ता ऊचुः–'वत्से ! साध्वीनां स्ववसतेर्बहिरातापना न कल्पते, इदमागमे कथितमस्ति' । तद् अश्रुत्वेव सा सुभूमिभागोद्याने आगत्य सूर्य-

स्थापितदृष्टिरातापनामारभत । अथाऽन्येद्युरेककामुकेन स्वोत्सङ्गे स्थापिता, द्वितीयेन धृतच्छत्रा, तृतीयेन वीज्यमानवस्त्रवाता, चतुर्थेन बध्यमानकेशपाशा, पञ्चमेन चाऽङ्के धृतचरणा, एवंविधा देवदत्ता वेश्या तया सुकुमारिकया दृष्टा । तदाऽसम्पूर्णभोगेच्छया इदं निदानं कृतम्—'अनेन तपसाऽहमेपैव पञ्चपतिका भूयासम्' । तत्प्रभृति सा स्वाङ्गशौचतत्पराऽतीवासीत्, आर्याभिर्निवार्यमाणा च पदे पदे संमुखं वदन्ती चेतस्येवमचिन्तयत्—'अहं पूर्वं गृहस्था एतासामार्याणां गौरविताऽभूवम्, इदानी मां भिक्षाचरीं स्ववशमागतां वारं वारं यथा तथैतास्तर्जयन्ति !, ततः किममूभिः ?'। इति ध्यात्वा विभिन्ने स्थानकेऽस्थात् । एकाकिनी स्वेच्छाचारिणी च चिरकालं दीक्षामपालयत् । प्रान्तेऽष्टमासान् संलेखनां कृत्वा पूर्वभवपापान्यनालोच्य मृता सा सौधर्मदेवलोके नवपल्योपमायुष्का देव्यभवत् । ततश्च्युत्वेयं द्रौपद्यभूत् । पूर्वभवनिदानाद् एतस्या अमी पञ्च पतयो जाताः, अत्र को विस्मयोऽस्ति ?" । इति मुनिनोक्ते गगने 'साधु साधु' इति वाणी बभूव । ततः कृष्णादयोऽपि 'साधु साधु एते पञ्च पतयोऽभूवन्' इति जगुः । अथ पाण्डवास्तैरेव स्वयंवरागतै राजस्वजनैः कृतमहोत्सवाः पर्यणैषुः । ततः पाण्डुराड् विवाहार्थमानीतानिव तान् दशार्हान् राम-कृष्णौ अन्यांश्च राज्ञो गौरवतः स्वपुरेऽनयत् । तत्र सुचिरं पूजयित्वा दशार्ह-राम-कृष्णान् अन्यांश्च नृपानापृच्छमानान् सत्कृत्य पाण्डुनृपो व्यसृजत् । अथ पाण्डुनृपो युधिष्ठिराय राज्यं दत्त्वा परलोके गतवान्, तत्पृष्ठे मद्री अपि कुन्त्यै सुतद्वयमर्पयित्वाऽन्वगात् । अथ पाण्डुनृपे मृते सति समत्सरा

दुरभिप्राया देशलुब्धा धृतराष्ट्रपुत्रास्तान् पाण्डवान् न मेनिरे। दुर्योधनेन पाण्डववृद्धाः प्रधान-पुरोहितादयो विनयादिना संतोषिताः। तेन लोभात् पाण्डवा द्यूते जिताः, तेषां पणीकृतं राज्यं द्रौपदीं च जित्वा दुर्योधनोऽग्रहीत्, परं क्रोधरक्तलोचनाद् भीमसेनाद् बिभ्यत् पुनर्द्रौपदीमर्पयामास। ततः कौरवैरवमाननां कृत्वा स्वदेशान्निर्वासितास्ते पञ्चापि पाण्डवा वनवासमाशिश्रियुः। वनाद्वनं चिरतरं भ्रान्त्वा तया दशार्हानुजया कुन्त्या ते पञ्चाऽपि पाण्डवा द्वारवतीं नगरीमानीताः। दिव्यायुधयोधिनो विद्या-बाहुबलोर्जितास्ते सर्वेऽपि प्रथमतः समुद्रविजयगृहे ययुः। तत्र समुद्रविजयोऽक्षोभ्याद्याश्च ते दशार्हाः स्वभगिनीं भागिनेयांश्च स्नेहादतीवानर्चुः, सत्कारं सन्मानं च ददुः। ऊचुश्च–'हे भगिनि! तेभ्यो गोत्रिभ्यः सापत्याऽपि जीवन्त्यागता नूनं भाग्येन दृष्टाऽसि'। तदा कुन्त्यपि जगाद–'हे भ्रातरः! अहं हि सपुत्राऽपि तदैव जीविता यदा मया यूयं सपुत्रा जीवन्तः श्रुताः, वत्सयोश्च राम-कृष्णयोर्लोकोत्तरं चरितं शृण्वाना हृष्टाऽहं तद्दर्शनसमुत्सुकाऽत्रागाम्'। ततस्तैरनुज्ञाता कुन्ती सपुत्रा हरेः सभामगात्, तां राम–कृष्णौ अभ्युत्तस्थतुः, भक्त्या च प्रणेमतुः। ततो राम-गोविन्दौ पाण्डवाश्च यथापूर्वमन्योन्यं विहितालिङ्गन-नमस्कारा यथायोग्यमुपाविशन्। ततः कृष्ण उवाच–'तत् साधु कृतं यद् यूयमत्र स्वगृहे समागताः, युष्माकं यादवानां च लक्ष्मीर्निश्चितं साधारणाऽस्ति'। युधिष्ठिर ऊचे–'हे कृष्ण! येषां त्वमभिमतस्तेषां श्रियो दास्यः, किं पुनस्तव येऽभिमताः?। हरे! इदमस्मान्मातृकुलं पवित्रीकुर्वता त्वया विश्वतोऽपि विशेषेण

महानला वयं वर्तामहे'। एवं विविधालापैः कुन्ती तत्सुतांश्च सत्कृत्य पृथक् पृथक् प्रासादेषु कृष्णो नियोजयामास। दशार्हाः पाण्डवेभ्यो लक्ष्मीवतीं वेगवतीं सुभद्रां विजयां रतिं चेत्यनुक्रमेण निजकन्या ददुः। यदुभिः कृष्णेन बलेन च पूज्यमानास्ते पश्चापि पाण्डुनन्दनास्तत्र सुखेनाऽवतस्थिरे।

इतश्च, अधिगतसकलकलाकलापं प्राप्तयौवनावस्थं प्रद्युम्नकुमारं दृष्ट्वा संवरपत्नी कनकमाला मदनातुराऽभवत्। दध्यौ च–'ईदृशः खेचरेष्वपि कोऽपि नास्ति, मन्ये–ईदृक्षो देवोऽपि न तदा मनुष्याणां का वार्ता ?। ततः स्वयं वर्धितस्य वृक्षस्य फलमिवाऽस्य यौवनफलं गृह्णामि, अनेन समं भोगान् भुञ्जे, अन्यथा खलु मम जन्मापि मुधा'। एवं विमृश्य सा मनोज्ञया गिरा प्रद्युम्नं जगाद–'इहैवोत्तरश्रेण्यां नलपुरं नगरमस्ति। तत्र गौरीवंशोद्भवो निषधनामा नृपः। तस्याऽहं पुत्री, मम च भ्राता नैषधिः। पित्रा गौरीनाम्नी महाविद्या मम स्वयमर्पिता। प्रज्ञप्तिविद्यां च दत्त्वा मां कालसंवरः परिणीतवान्। मयि सोऽत्यन्तरक्तोऽन्यां स्त्रियं नेच्छति। सिद्धविद्याढ्याया मम बलात् तस्येदं जगत् तृणवद् विद्यते। एवंविधाऽहमनुरक्ता सती त्वां वृणोमि। हे सुभग ! तद् मां भजस्व, त्वमज्ञानादपि मम प्रणयभङ्गं मा कार्षीः'। तदा प्रद्युम्नस्तां कथयामास–'आः ! शान्तं पापम्, अदस्त्वं किं ब्रवीषि ?, अहं तव पुत्रः, त्वं च मे माताऽसि, इदमुभयोरपि पापायैवाऽस्ति'। तदा साऽप्युवाच–'सुन्दर ! त्वं मम सुतो नाऽसि, किन्तु कालसंवरोऽग्निज्वालपुरादागच्छन् केनचिन्मार्गे त्यक्तं त्वां प्राप, तेन च मम वर्धनाय दत्तः। त्वं हि कस्याऽप्यन्यस्य

पुत्रोऽसि, तद् मया सह निःशङ्कं यथेच्छया भोगान् भुङ्क्ष्व' । ततः 'स्त्रीसङ्कटे पतितोऽस्मि' इति चिन्तयन् स उवाच—'भद्रे! कालसंवरात् त्वत्पुत्रेभ्यश्चाऽहं कथं जीवितं लप्स्ये ?' । सोचे—'हे सुभग! त्वं मा भैषीः, मत्पार्श्वात्त्वमिमे द्वे अपि महाविद्ये गौरी-प्रज्ञप्त्यौ गृहाण, जगति चाऽजय्यो भव' । ततश्च 'अकार्यं नैव करिष्यामि' इति चित्ते निश्चित्य प्रद्युम्नोऽब्रवीत्—'मम विद्ये देहि, पश्चात्त्वद्वचनं करिष्ये' । तदा सा हृष्टा मदनविह्वला तस्मै गौरी-प्रज्ञप्त्यौ महाविद्ये ददौ । स प्रद्युम्नोऽपि पुण्यप्राग्भारवशात् शीघ्रमुभे विद्ये साधयामास । अथ तया भोगाय पुनरपि प्रार्थितः स जगाद—'हे अनघे! त्वं हि पूर्वं मम संवर्धनात् केवला मातैवाऽभूः, परमधुना तु विद्यादाने-नाऽऽचार्या जाताऽसि, ततस्त्वयाऽत्र पापकार्येऽहं न किञ्चिद्वाच्यः' । एवं तामुक्त्वा मुक्त्वा च प्रद्युम्नः पुराद् बहिर्गत्वा कालाम्बुकावापीतटे दुर्मना अस्थात् । सा कनकमाला तु नखैः वपुर्विदीर्य महान्तं कोलाहलं चकार । तदा 'किमेतद् ?' इति ससम्भ्रमं पृच्छन्तस्तत्सुतास्तत्र समाययुः । सा तान् जगाद—'दुरात्मना मदोन्मत्तेन युष्मत्पितुः पुत्रेणैपाऽहं स्वैरं पिण्डदात्री मार्जारेणेव विदारिताऽस्मि !' । तच्छ्रुत्वा ते सर्वेऽपि कालाम्बुकातटे गत्वा 'पाप पाप' इति जल्पन्तः प्रद्युम्ने शीघ्रं प्राहरन् । विद्याबलवान् प्रद्युम्नस्तान् कालसंवरपुत्रान् मृगान् केसरीव लीलयैव जघान । ततः सुतवधक्रुद्धः कालसंवरस्तस्य मारणायागतः, सोऽपि विद्याजनितमायाभिस्तेन प्रद्युम्नेन जितः । ततः सानुतापः प्रद्युम्नस्तस्मै कालसंवराय यथा-

तथं कनकमालावृत्तान्तं मूलादारभ्य कथयामास, तदा तेनाऽपि सानुतापेन प्रद्युम्नः पूजितः, कनकमालायाश्च अवगुणं ज्ञात्वा स खेचरेन्द्रो मनस्यतीव विषण्णः। तदा च नारदर्षिः प्रद्युम्नसमीपमागतः, प्रज्ञप्त्या विद्यया ज्ञापितं च तं कुमारः पूजितवान्। तस्याऽपि सर्वं कनकमालावृत्तान्तमाख्यत्। ततो नारदः सीमन्धरस्वामिकथितं प्रद्युम्न-रुक्मिण्योः सर्वं वृत्तान्तं प्रद्युम्नस्य कथयित्वेति जगाद—'पुरा त्वन्मातुः सपत्न्या सत्यभामया सार्धम् आदौ पुत्रस्य पाणिग्रहणे केशदानपणो विद्यते। अथ च साम्प्रतं सत्यभामायाः सुतो भानुकनामा पाणिग्रहणं करिष्यति तदा तत्र त्वज्जनन्या पणहारिताः स्वकेशा दातव्याः, केशदानदुःखेन त्वद्वियोगवेदनया च त्वयि सुते सत्यप्यवश्यं सा रुक्मिणी मरिष्यति, अतस्त्वं तत्र गन्तुं शीघ्रमुद्यतो भव। सर्वेषामानन्ददायि निजं दर्शनं कारय। कृष्णादयस्त्वन्मुखं पद्मं मधुकरा इव द्रष्टुं वाञ्छन्ति'। इति श्रुत्वा मातृमोहमोहितः प्रद्युम्नो नारदेन सह प्रज्ञप्तिविहितविमानमारुह्य शीघ्रं द्वारकानगरीं ययौ। नारदो जगाद—'हे कुमार! इयं त्वत्पितुः पुरी द्वारकानाम्नी, यां धनदः स्वयमेव कृत्वा रत्नादिभिरपूरयत्'। तदा प्रद्युम्न उवाच—'मुनिवर्य! त्वमत्रैव विमाने तिष्ठः, यावद् द्वारकायां किञ्चिच्चमत्कारमहं करोमि'। 'आम्' इति नारदेन प्रोक्तेऽग्रे गच्छन् प्रद्युम्नस्तत्र स्थितां सत्यभामापुत्रविवाहजन्ययात्रां ददर्श। ततस्तत्कालं तदुद्वाह्यां कन्यां विद्यया हृत्वा नारदसमीपे मुमोच। नारदस्तां कन्यामूचे—'वत्से! मा भैषीः, अयमपि केशवपुत्रोऽस्ति'। ततः स प्रद्युम्नः कपिभृत्पुमान् भूत्वा वनपालकान्

जगाद–'मम क्षुधितस्य कपेः फलादिकमर्प्यताम्'। तदा ते वनपालकाः कथयामासुः–'नूनमयमारामोऽस्माभिर्भानुकविवाहाय रक्ष्यते, तत्त्वया न किञ्चित् कथनीयम्'। तदा भूरिभिर्धनैस्तान् प्रलोभ्य प्रद्युम्नः प्रविश्य तेन वानरेण तदुद्यानं फलादिरहितमकारयत्। ततो जात्यवाजिवणिग् भूत्वा स तृणापणेऽगात्, तत्रापणेभ्यो निजहयहेतवे तृण्यां[1]मयाचिष्ट, परं तथैवाऽददतस्तान् धनेन प्रलोभ्य स्वविद्यया सर्वमतृणं चकार। ततस्तथैव विद्यया जलं पीत्वा स्वादुपानीयस्थानानि अजलानि विहितवान्। ततो वाह्याल्यां गत्वा स्वयं वाहं[2]मवाहयत्, तदा भानुकेन तस्याऽश्वो दृष्टः, पृष्टश्च–'एषोऽश्वः कस्य?'। कौतुकी प्रद्युम्नोऽपि 'ममैष हय' इति कथयामास। तदा भानुकः सादरोऽभाषत–'त्वमेनं तुरङ्गमं मम देहि, यत्त्वं मूल्यं याचिष्यसे तत्तव बह्वपि दास्यामि'। ततः प्रद्युम्नो बभाषे–'त्वं परीक्ष्य तुरङ्गममादत्स्व, अन्यथा निरपराधस्यापि मम राजदण्डः स्यात्'। अथ भानुस्तं वाजिनं परीक्षितुमारुरोह, तेन वाजिना वाजं[3] नाटयता स पृथ्वीतले पातितः। पश्चाद् ऐडक[4]मारूढः प्रद्युम्नः पुरीलोकैर्हस्यमानो वसुदेवसभायामागतः, तत्र स्थितांश्च सर्वानपि नृपामात्यादीन् हासयामास। ततः प्रद्युम्नो विप्ररूपो जातः, वेदं च मञ्जुलस्वरेण[5] पठन् द्वारकां प्राविशत्। सर्वत्रापि त्रिक-चतुष्कादिपु भ्रमन् स सत्यभामादासीं कुब्जामपश्यत्। तां च विद्यया शीघ्रं

१ तृणसमूहम्। २ अश्वम्। ३ वेगम्। ४ मेपम्। ५ मनोहारिस्वरेण।

वेत्रवल्लीमिव सरलाङ्गीं चकार। तदा सा पादयोः पतित्वा जगाद–'यूयं क्व चलिताः?' । प्रद्युम्नोऽप्युवाच–'यत्र भोजनं यथेच्छं लप्स्ये तत्र चलितोऽस्मि'। पुनः साऽकथयत्–तर्हि मम स्वामिन्याः सत्यभामाया गृहे एहि, तत्र सुतविवाहे सज्जितं मोदकादि तव यथेष्टं दास्यामि'। ततः प्रद्युम्नोऽपि तया सार्धं सत्यभामाया धाम जगाम। सा दासी तं तोरणद्वारे मुक्त्वा स्वस्वामिनीसमीपेऽगात्। 'काऽसि त्वम्?' इति सत्यभामया पृष्टा जगाद–'साऽहं कुब्जास्मि'। पुनरपि सत्यभामा कथयामास–'त्वं केन सरलीकृताऽसि?'। तदा दासी ब्राह्मणोदन्तमवदत्। सत्यभामोचे–'स विप्रः क्वाऽस्ति?'। साऽप्यूचे–'मया सम्प्रत्येव तोरणद्वारे मुक्तोऽस्ति'। 'त्वं तं महात्मानमत्रानय' इति सत्यभामयादिष्टा दासी वेगात् तं कपटविप्रं तत्राऽऽनयत्। स आशिषं दत्त्वोपविष्टः सत्यभामया जजल्पे–'हे ब्रह्मन्! सपत्न्या रुक्मिणीतो मां रूपेणाऽधिकां कुरु'। मायाविप्रोऽप्येवमवादीत्–'त्वं नूनं सुरूपा दृश्यसे, अन्यस्त्रीणां हि कुत्रचिदीदृशं रूपं न हि पश्यामि'। तदा सत्यभामा बभाषे–'भद्र! इदं साधु वदसि, तथापि रूपेणाऽनुपमां मां विशेषतः कुरुष्व'। ततः सोऽप्यब्रवीत्–'यदीदृशी वाञ्छा तदा सर्वतो विरूपा भव, रूपविशेषो हि मूलतो वैरूप्ये सति स्यात्'। तदा 'किं करोमि?' इति तया पृष्टः स विप्र इत्यादिशत्–'पूर्वं मस्तकं मुण्डय, ततः स्वदेहं सर्वतो मष्या लिम्प, जीर्णखण्डमलिनस्यूतवस्त्रा च भूत्वा मम पुरत आगच्छ, यथाहं तव रूप-लावण्य–सौभाग्यश्रियं त्वरितमारोपयामि'। ततः साऽर्थिनी तदपि चकार। अथ स विप्र एवमूचे–'अहं क्षुधया

पीडितो न स्वस्थः, तत् किं करोमि ?'। तदा सत्यभामा तं भोजयितुं सूपकारानादिशत् । भोजनाय गच्छन् विप्रः सत्यभामाश्रवणे एवं श्रावयामास–"हे अनघे ! मद्भोजनावधि कुलदेवीनां पुरतस्त्वया 'रुडु बुडु रुडु बुडु स्वाहा' इति मन्त्रो जप्यः"। सा तथैव कुर्वत्यस्थात्। अथ भुञ्जानः स विप्रः सर्वरसवतीसारं विद्याबलेन समापयत् । अथ सत्यभामातो बिभ्यतीभिः जलकरककराभिः सूपकारीभिः स कथञ्चिद् 'उत्तिष्ठ उत्तिष्ठ' इत्यभाष्यत, तदा 'अहमद्यापि नो तृप्तिं प्राप्तः, यत्र तृप्तिर्भाविनी तत्र यास्यामि' इति वदन् स मायावी विप्रो ययौ। ततो बालसाधुरूपो भूत्वा रुक्मिणीगृहेऽगात् । तया च नेत्रानन्दचन्द्रः स ददृशे । तस्यासनार्थं रुक्मिणी गृहान्तः प्रविवेश, तावच्च स पूर्वस्थापिते कृष्णसिंहासने उपाविशत् । सा च गृहीतासना निर्गता तं तथोपविष्टं दृष्ट्वा विस्मयस्मेरनयना बभाषे–'कृष्णं वा तत्पुत्रं विनाऽन्यं पुरुषमासीनं न हि देवताः सहन्ते' । तदा स मायासाधुरप्यूचे–'मम तपःप्रभावाद् देवताः किञ्चित्कर्तुं न समर्थाः' । अथ तया 'कुतो हेतोस्त्वमत्राऽऽगा ?' इति पृष्टः सन् स जगाद–'मया निराहारं षोडशवर्षप्रमाणं तपः कृतं, जन्मतोऽपि हि मातृस्तन्यमपि मया नो पीतम्, तत्पारणार्थमहमत्रागाम्, किञ्चिद् यथोचितं देहि' । तदा सा रुक्मिण्यवदत्–'हे मुने ! क्वापि न षोडशवर्षं तपः श्रुतम्, किन्तु चतुर्थादारभ्य संवत्सराऽवधिकं तपः श्रुतम्' । सोऽप्युवाच–'किं तवाऽनेन विचारेण ?, यदि गृहे किञ्चिदस्ति यदि च दित्ससि तदा देहि, यदा नो तदा सत्यभामाभवने यास्यामि' । साऽवोचत्–'उद्वेगाद् अद्य मया किञ्चिन्न पाचितम्' । सोऽपि

पप्रच्छ–'तवोद्वेगकारणं किम्?'। तदा सा जगाद–"पुत्रवियोगेऽहं तत्सङ्गमाशया कुलदेवीमियत्कालमाराधयम्, इदानीं चाऽहं कुलदेवतानां स्वशिरोवलिं दातुकामा यावद् ग्रीवायां प्राहरं तावद् देवीत्यूचे–'हे पुत्रि! एतावत्साहसं मा कार्षीः, यदा तवैष सहकारोऽकालेऽपि पुष्पिष्यति तदा त्वत्पुत्र एष्यति'। अयं त्वद्य मुकुरितः, परं मम पुत्रो नागतः!। तत् साधो! होरां पश्य, कदा मे पुत्रसङ्गमो भविष्यति?"। स ऊचे–'होरा रिक्तकराणां फलदायिनी नो भवेत्'। रुक्मिणी बभाषे–'मुने! ब्रूहि, तुभ्यमहं किं प्रयच्छामि?'। सोऽपि जगाद–'तपःक्षामकुक्षेर्मम पेयां देहि'। ततः सा पेयार्थं द्रव्यविलोकनेन उद्युङ्क्त। पुनस्तां साधुरुवाच–'अहं क्षुधितोऽस्मि, येन केनापि द्रव्येण पेयां कृत्वा मम प्रयच्छ'। तदा सा प्राक्सिद्धैर्मोदकैः पेयां कर्तुं प्रवर्तते स्म, परं तस्य विद्याप्रभावेण ज्वलनो न तु प्राज्वलत्। अथ तां खिन्नां प्रेक्ष्य स ऊचे–'यदि पेया न निष्पद्यते, तदेभिर्मोदकैरपि मामतिक्षुधितं प्रीणय'। तदा सोचे–'एते मोदकाः केशवं विनाऽन्यैर्दुर्जराः, तद् मुने! एतान् दत्त्वा नाहम् ऋषिहत्यां करिष्यामि'। सोऽप्यवादीत्—'तपोमाहात्म्यतो मम किमपि दुर्जरं नास्ति'। ततः साशङ्का सा तस्मै एकैकं मोदकमदात्। दत्तान् दत्तान् मोदकान् त्वरितमेव भुञ्जानं तु तं प्रेक्ष्य विस्मिता सा हसित्वा जगाद–'हे महर्षे! त्वं हि महाबलवान् विद्यसे'।

इतश्च, तथा मन्त्रं जपन्तीं सत्यभामामागत्य नरा अवदन्–'हे स्वामिनि ! कोऽपि पुमान् फलादिरहितमारामं चक्रे, कोऽपि तृणहट्टान् निस्तृणांश्चकार, कोऽपि जलाशयान् निर्जलांश्चकार, कोऽपि च तव भानुकपुत्रमश्वेन उपाद्रवत्' । इति श्रुत्वा सत्यभामा दासीः पप्रच्छ–'स ब्राह्मणः क्व गतवान्?' । तदा तद्दास्योऽपि यथावस्थं तस्य चेष्टितं कथयामासुः । ततो विषण्णा साऽसर्पात् केशाऽऽनयनाय रुक्मिणीं प्रति पटलिकाहस्ता दासीः प्रेषयामास । ताश्च गत्वा रुक्मिणीमूचिरे–'मानिनि ! त्वत्केशानस्माकं शीघ्रं देहि, स्वामिनी श्रीसत्यभामा नूनमेवं समादिशति' । तदा स मायामुनिस्तच्छ्रुत्वा तासामेव केशैः पटलिकां भृत्वा ताः सत्यभामासमीपे प्राहिणोत् । 'किमेतद् ?' इति सत्यभामया प्रोक्ता दास्य ऊचुः–'स्वामिनि ! किं न वेत्सि ? यादृशः स्वामी तादृशः परीवारः !, अत्र को विस्मयः ?' । ततः सत्यभामा उद्भ्रामा क्रोधाध्माता रुक्मिणीभवने नापितान् प्रैषीत् । तानेव स मायासाधुः शिरस्त्वक्छेदपूर्वममुण्डयत् । आगतान् नापितान् मुण्डान् प्रेक्ष्य क्रुद्धा सत्यभामा गत्वा कृष्णं कथयामास–'नाथ ! त्वं स्वयं रुक्मिण्याः केशप्रतिभूरभूः, केशव ! सोऽद्य केशप्रदानपणो मम दाप्यताम् । स्वयमुत्थाय शीघ्रं चाऽऽकार्य रुक्मिणीं मुण्डां कारय' । तदा हसित्वा गोविन्दो जगाद–'साम्प्रतं तु त्वमेव मुण्डिताऽसि !' । साऽप्युवाच–'अद्य हास्येन सृतम्, अद्य त्वं तत्केशान् त्वरितं दापय' । ततः कृष्णेन प्रेपितो रामः सत्यभामया सह रुक्मिण्या गृहे गतवान्, तत्र च प्रद्युम्नो विद्यया कृष्णरूपं विचक्रे । तदा रामो लज्जया वलित्वा पूर्वस्थाने पुनरगात्, तत्रापि

कृष्णं प्रेक्ष्य सोऽवदत्—'त्वया हास्यं किं मण्डितम् ?, तत्र केशार्थं मां प्रेष्य स्वयं गत्वा च पुनरप्यत्र त्वमागतः, वधूर्वयं च समकालं त्वया ह्रेपिताः'। ततः 'तत्र नाऽऽगाम्' इति केशवः शपथपूर्वकं कथयामास, तदा 'तवैव माया' इति वदन्ती सा सत्यभामा स्वगृहे ययौ। विष्णुस्तु तद्गृहे गत्वा तां प्रत्याययितुं समारेभे। अथ नारद आगत्य रुक्मिण्यै आचख्यौ—'अयं तव पुत्रः प्रद्युम्नः'। तदा स प्रद्युम्नोऽपि सुरसदृशं स्वकीयरूपं प्रकटीकृत्य चिरदुःखान्धकारसूर्यसदृशो मातुः पादपद्मयोः पपात। रुक्मिणी प्रक्षरत्स्तन्यधारा तं स्नेहाधिक्येन बाहुभ्यामालिलिङ्ग, हर्षाश्रुप्लावितलोचना च मूर्ध्नि पुनः पुनश्चुचुम्ब। अथ प्रद्युम्नस्तां विज्ञपयामास—'मातः ! तावत् खल्वहं कस्यापि त्वया न ज्ञाप्यो यावत् किञ्चिदपि आश्चर्यं पितुर्दर्शयामि'। हर्षव्यग्रा रुक्मिणी तु किमपि प्रत्युत्तरं नाऽदात्। ततः स रुक्मिणीं मायारथे आरोप्य प्रचचाल, शङ्खं पूरयन् जनांश्च क्षोभयन् इत्यब्रवीत्—'एषोऽहं रुक्मिणीं हरामि, यदि कृष्णो बलवान् तदा रक्षतु'। तदा 'कोऽयं मूर्खो मुमूर्षुर्दुर्मतिः ?' इति जल्पन् हरिः शार्ङ्गधनुरास्फालयन् ससैन्योऽप्यन्वधावत। प्रद्युम्नस्तां सेनां भङ्क्त्वा विद्याबलेन हरिं निर्दन्तं गजमिव निःशस्त्रीचक्रे। अथ यावद् विष्णुर्विषण्णोऽभवत् तावत् तस्य दक्षिणभुजः स्पन्दितः, तेन च सहसा बलभद्राय निवेदितः। तदैव नारद एत्य जगाद—'हे कृष्ण ! एष तव पुत्रो रुक्मिणीसंयुक्तो गृह्यताम्, अधुना युद्धेन पर्याप्तम्'। ततः प्रद्युम्नो राम-कृष्णौ तयोश्चरणान् स्पृशन् प्रणनाम, ताभ्यां चाऽत्य-

न्तस्नेहेन वारं वारं शिरश्चुम्बञ्च्यां सस्वजे । सहजातयौवनमिव स्वर्गवासिलीलास्पृशन्तं जनमनःकौतुकोत्पादकं प्रद्युम्नं केशवः परमप्रीत्या पुनरपि समालिलिङ्ग ।

द्वारावत्यां रुक्मिणीयुक्तविष्णुः, प्रद्युम्नं स्वं पुत्रमङ्के निवेश्य ।
चक्रे सर्वाडम्बरेण प्रवेशं, पौरैरत्याश्चर्यतः प्रेक्ष्यमाणः ॥ १ ॥

॥ इति श्रीमत्कनकविजयगणिचरणपङ्कजभ्रमरसदृश–गुणविजयगणिविरचिते श्रीमदरिष्टनेमिचरिते सुललितगद्यबन्धे रुक्मिण्यादिपरिणयन–पाण्डवद्रौपदीस्वयंवरप्रकटन–प्रद्युम्नकुमारचरित्रवर्णनो नाम षष्ठः परिच्छेदः ॥

## ॥ अथ सप्तमः परिच्छेदः ॥

अथ तस्यां द्वारकानगर्यां संभ्रमाद् द्वारस्थापितनवीनतोरणविहितभ्रूविभ्रमायां कामिन्यामिव प्रद्युम्नागमनमहोत्सवे प्रवर्तमाने सति दुर्योधनः समुत्थाय केशवं विज्ञपयामास–'स्वामिन्! तव वधूर्मम पुत्री अधुना केनाऽप्यपहृता, क्वापि विलोकनं कार्यतां यथा भानुकः कुमारः परिणीयेत' । तदा कृष्णोऽप्यूचे–

'नाऽहं सर्वज्ञः, यदि तादृशोऽपि स्यां तत्कथं प्रद्युम्नः केनचिद् हृतो मया न ज्ञातः ?'। ततः 'प्रज्ञप्त्या विद्यया तामहं ज्ञात्वाऽत्रानेष्यामि' इत्युदीरयन् प्रद्युम्नस्तत्र तां स्वयंवरकन्यकामानैषीत्। केशवेन दीयमानां तां 'नूनमेषा तु मम वधूः' इत्युक्त्वा प्रद्युम्नो न जग्राह, भानुकश्च परिणीतवान्। कृष्णोऽनिच्छताऽपि प्रद्युम्नेन महामहोत्सवेन विद्याधर-राजकन्या उदवाहयत्। ततः प्रद्युम्नानयनाद् उपकारिणं नारदं पूजयित्वा केशव-रुक्मिण्यौ व्यसृजताम्।

अथ प्रद्युम्नस्य महासम्पत्त्या श्लाघया च ताम्यन्ती सत्यभामा कोपगृहे गत्वा जर्जरमञ्चके शिश्ये। तत्र गतश्च केशवः ससम्भ्रमो व्याजहार—'हे सुभ्रु! त्वं केनाऽपमानिताऽसि येनैवं ताम्यसि ?'। तदा साप्युवाच—'मम कस्यापि नाऽपमानम्, किन्तु प्रद्युम्नसदृशो यदि मम पुत्रो नो भविता तदा निश्चितमहं मरिष्यामि'। कृष्णस्तस्या आग्रहं ज्ञात्वा हरिणैगमेषिणं देवमुद्दिश्य अष्टमभक्तेन पौषधव्रतं प्रतिपन्नवान्। हरिणैगमेषी प्रकटीभूय तमूचे—'तव किं करोमि ?'। तदा केशवो जगाद—'सत्यभामायै प्रद्युम्नसन्निभं पुत्रं देहि'। हरिणैगमेष्यवदत्—'तव यस्यां पुत्रेच्छा तामिमं हारमामोच्य भजस्व, ततो वाञ्छितः सुतो भावी'। एवं कथयित्वा तं च हारं दत्त्वा हरिणैगमेषी तिरोदधे। केशवोऽपि हृष्टः सत्यभामायै वासकमदात्। अथ तत्सर्वं प्रज्ञप्त्या ज्ञापितः प्रद्युम्नः स्वमातरमजिज्ञपत्, ऊचे च—'मातः! मत्तुल्यपुत्रवाञ्छया तं हारमादत्स्व'। रुक्मिण्युवाच—'पुत्र! त्वयैव सुतेन कृतार्थाऽस्मि, यतः स्त्रीरत्नं पुनः पुनः कदाचिन्न प्रसूते'।

तदा प्रद्युम्न उवाच–'मातः ! सपत्नीषु तव का वल्लभा?, यस्या अहं पुत्रं ददामि' । ततः रुक्मिणी जगाद–'पुत्र ! त्वद्वियोगे दुःखिताया मम समानदुःखा पूर्वं जाम्बवत्यभूत्, तस्यास्त्वत्सदृशः सुतोऽस्तु' । अथ प्रद्युम्नानुज्ञया रुक्मिणी जाम्बवतीमाजूहवत् । प्रद्युम्नस्तां विद्यया सत्यभामारूपामकरोत् । ततो रुक्मिण्या तत् कथयित्वा सन्ध्यासमये कृष्णगृहे प्रेषिता ययौ, तत्र कृष्णेन हारं दत्त्वा स्नेहेन बुभुजे । तदैव च महाशुक्रदेवलोकात् कैटभश्च्युत्वा जाम्बवत्याः कुक्षौ सिंहस्वप्नसूचितोऽवातरत् । ततो हृष्टा जाम्बवती निजगृहमगात् । अथ सत्यभामा कृष्णगृहे वासकार्थिनी आययौ, तां प्रेक्ष्य कृष्णोऽचिन्तयत्–'अहो ! स्त्रियो भोगाऽतृप्ताः । सम्प्रत्येव नन्वेषा गता, पुनरपि त्वरितमागताऽस्ति !। अथवा किं प्राक् सत्यभामारूपं कृत्वा कयाऽप्यहं छलितोऽस्मि?, तदेषा विलक्षा मा भूत्' । इति विचार्य तया सार्धं हरी रेमे । अथ तस्यास्तं रमणसमयं ज्ञात्वा प्रद्युम्नो विश्वविक्षोभकारिणीं विष्णोर्भेरीं ताडयामास । 'केनेयं भेरी ताडिता?' इति क्षुभितः केशवोऽपृच्छत् । परिवारोऽकथयत्–'प्रद्युम्नेन ताडिता' । तदा हरिः स्मित्वा मनसि दध्यौ–'निश्चितमनेनाऽद्य सत्यभामा छलिता, यतः सापत्नस्तनयो दशसपत्युपमो भवति । किञ्चित् सभयं सम्भोगकरणात् सत्यभामाया भीरुः पुत्रो भविता, ननु भवितव्यता नान्यथा भवति' । प्रातश्च रुक्मिणीभवने गतो जनार्दनस्तेन दिव्यहारेण भूषितां जाम्बवतीमपश्यत् । निर्निमेषं प्रेक्षमाणं कृष्णं जाम्बवती जगाद–'स्वामिन् ! किमेवं मां पश्यसि ?, सैवाऽहं तव पत्न्यस्मि' । कृष्ण उवाच–'अयं नु तव दिव्यहारः कुतः?' ।

साऽप्यूचे–'तव प्रसादेन, किं स्वयं कृतं न जानासि ?'। ततः सा सिंहस्वप्नं कथयामास । तदा कृष्ण आचख्यौ–'देवि ! तव प्रद्युम्नसदृशः सुतो भावी' इत्युक्त्वा केशवो ययौ। अथ जाम्बवती सम्पूर्णेषु मासेषु जातेषु समये सिंहीव अद्वैतबलधारिणं शाम्बनामानं पुत्रं सुषुवे । सारथेर्जयसेनो दारुकश्च, मन्त्रिणश्च सुबुद्धिः, एते पुत्राः शाम्बेन सह जज्ञिरे। सत्यभामाया भानुको नाम पुत्रोऽभूत्, तथा गर्भाधानानुसाराद् भीरुरिति नाम्ना द्वितीयो बभूव । अन्यासामपि कृष्णपत्नीनां महाबलाः सुता भद्रकुञ्जरकलभा इवाऽभवन् । सारथि-मन्त्रिपुत्रैः समं शाम्बकुमारो ववृधे, क्रमाच्च कलाकदम्बकं लीलया जग्राह ।

अन्यदा रुक्मिनृपपुत्रीं वैदर्भीं प्रद्युम्नेन सार्धमुद्वाहयितुं रुक्मिणी भोजकटपुरे एकं पुरुषं प्रैषीत् । स रुक्मिणं प्रणम्योवाच–'त्वां रुक्मिणी देवी वक्ति–इयं स्वपुत्री वैदर्भी प्रद्युम्नकुमाराय प्रदीयताम् । पूर्वं मम विष्णोश्च उचितो योगो दैवाद् अभवत्, अधुना तु प्रद्युम्न-वैदर्भ्योर्योगस्त्वत्कृतो भवतु'।तदा प्राग्वैरं स्मरन् स रुक्मीति जगाद–'वरमहं निजपुत्रीं चण्डालेभ्यो दास्ये, परं न हि विष्णुकुले दास्यामि'। दूतोऽपि गत्वा तद् यथातथं रुक्मिण्या आचख्यौ । तदा स्वभ्रात्राऽपमानिता सा नक्तं कमलिनीव म्लानमुखी अभवत् । 'मातः! किमेवं खिद्यसे ?' इति प्रद्युम्नेन प्रोक्ता सा मनःशल्यभूतं सर्वं रुक्मिवृत्तान्तं कथयामास । प्रद्युम्नोऽपि जगाद–'मातः! मा ताम्य, स हि मातुलो न सुकुमालवचनयोग्यः, अत एव यदा त्वं परिणीता तदा मम तातस्तदुचितमकरोत्। अहमपि च तस्योचितं कृत्वा तत्पुत्रीमुद्वहाम्येवेति मम

प्रतिज्ञा'। इत्युक्त्वा शाम्बेन सममुत्पत्य तत्र भोजकटपुरे शीघ्रं ययौ। तत्र तौ चण्डालरूपौ भूत्वा किन्नरस्वरौ गायन्तौ सर्वपौराणां मृगवद् मनांसि जह्रतुः। रुक्मिनृपोऽपि मधुरस्वरौ ज्ञात्वा तौ मायामातङ्गौ आहूय स्वाङ्के तां सुतां दधद् अगापयत्। तयोर्गीतेन सन्तुष्टः सपरिवारो रुक्मिराजो द्रव्यं दत्त्वा तौ प्रति अपृच्छत्—'युवां कुतः स्थानादत्रागतौ ?'। तावप्याचख्यतुः—'आवां स्वर्गाद् द्वारिकानगरीं वीक्षितुमायातौ, या हि गोविन्दमहाराजस्य कृते देवैर्विदधे'। तच्छ्रुत्वा हृष्टा वैदर्भी तौ पप्रच्छ—'तत्र किं युवां कृष्ण-रुक्मिण्योः प्रद्युम्ननामानं पुत्रं जानीथः ?'। तदा शाम्ब ऊचे—'को हि रूपमन्मथं पृथिव्यलङ्कारतिलकं महाबलवन्तं प्रद्युम्नकुमारं न जानाति ?'। तच्छ्रुत्वा हृष्टा वैदर्भी रागगर्भिता उत्कण्ठिता बभूव। तदा च कोऽपि मत्तगजेन्द्र आलानस्तम्भमुन्मूल्याऽधावत, सर्वांश्च पौरलोकान् त्रासयामास। किं बहुना ? सर्वं नगरमुपद्रवन् सर्वत्र बभ्राम, केनापि निषादिना स वशीकर्तुं नाऽशक्यत। तदा रुक्मिराजः पटहमदापयत्—'यः कश्चिद् इमं हस्तिराजं वशीकरोति तस्मै अहं वाञ्छितं ददामि'। परं स पटहो केनापि न दध्रे। अथ प्रद्युम्न-शाम्बाभ्यां स पटहो धारितः, गीतगानेन च ताभ्यां गजराजः स्तम्भितः। ततो द्वावपि तं गजराजमारुह्य हस्तिशालायां त्वरितं नीत्वाऽऽलानस्तम्भे बबन्धतुः। तदा पौराणां चित्रीयमाणौ तौ राज्ञा मुदाऽऽकारितौ। ततो 'यद् वामीप्सितं तद् याचेथाम्' इति रुक्मिणा प्रोक्तौ तौ तु 'इमां वैदर्भीं देहि, आवयोर्धान्यरन्धनिका नो विद्यते' इत्ययाचेताम्। तन्निशम्य कुपितो रुक्मी तौ पुरादक-

र्पयत् । अथ प्रद्युम्नः शाम्बमभाषत–'रुक्मिणी दुःखेन तिष्ठति, तद् वैदर्भ्याः कुमार्याः परिणयने विलम्बो न युज्यते'। इति प्रद्युम्ने ब्रुवाणे सति निर्मला रात्रिरभूत् । ततो जनेषु सुप्तेषु प्रद्युम्नः स्वविद्याबलेन यत्र वैदर्भी स्थिता तत्र प्रासादसप्तमभूम्यां ययौ । स तस्याः करे कृत्रिमं रुक्मिणीस्नेहलेखमार्पयत् । तं वाचयित्वा सा प्रीत्या प्रोवाच–'हे भद्र! ब्रूहि, किं तेऽहं ददामि ?'। सोऽप्यूचे–'हे सुलोचने! मह्यं स्वात्मानमेव देहि, यदर्थे त्वं मार्गिताऽसि स एवाहं प्रद्युम्नोऽस्मि'। ततः 'अहो! दैवयोगाद् विधातुः सुघटितं जातम्' इति ब्रुवाणा सा वैदर्भी प्रीत्या तद्वचनं पत्यपद्यत । ततो विद्याबलाद् अग्निं कृत्वा साक्षीकृत्य च प्रद्युम्न आमुक्तकङ्कणां सितदुकूलां तां परिणीतवान्, स्वैरं च विविधभङ्गीभिर्बुभुजे। निशाशेषे चैवमवदत्–'सुन्दरि! अहं शाम्बसमीपे यामि। पितृभ्यां तथा परिवारेण पृच्छ्यमानाऽपि त्वं किमपि मा ब्रवीः, यतस्त्वद्देहोपद्रवरक्षा मया कृताऽस्ति' इत्युक्त्वा प्रद्युम्नोऽगात् । वैदर्भी तु अतिजागराद् रतश्रमाच्च सुष्वाप, प्रातरपि न जजागार । तत्र तद्धात्री आययौ, सा तत्कङ्कणादिकं विवाहचिह्नं प्रेक्ष्य साशङ्का तामुत्थाप्याऽपृच्छत्, परं वैदर्भी तु किञ्चिन्नाख्यत् । ततः सा धात्री स्वापराधनिराकरणाय भयविह्वला गत्वा रुक्मिनृपाय राज्यै च कथयामास। ताभ्यामपि त्वरितमेत्य पृष्टा, परं सा तु किञ्चिदपि न जगाद । तौ तु व्यक्तं सम्भोग-विवाहचिह्नं ददृशतुः । ततो रुष्टो रुक्मी मनसि दध्यौ–'अरे! इयं कन्या दुश्चारिणी कुलटा, अदत्ताऽपि नूनं केनापि सार्धं यथेच्छं रेमे । तद् यदीयं कन्या ताभ्यां चण्डालाभ्यां दत्ता स्यात्

तदा वरम्' । इति ध्यात्वा स रोषात् स्ववेत्रिणा तौ चण्डालौ आकारयामास । ऊचे च–'एषा कन्या गृह्यताम्, युवां च तत्र यातं यत्र वामहं न पश्यामि' । इति क्रोधाद् वदन् रुक्मी तयोः स्वपुत्रीं ददौ । तदा तौ वैदर्भीमूचतुः–'हे राजपुत्रि ! आवयोर्गृहजलं चर्म-रज्ज्वादिविक्रयं च करिष्यसि ?' । तदा परमार्थज्ञा सा जगाद–'दैवं यत्कार्यं कारयिष्यति तदहमवश्यं करिष्ये, दैवाज्ञा तु दुर्लङ्घ्याऽस्ति' । ततस्तौ महासुभटौ तां गृहीत्वाऽन्यतो जग्मतुः ।

अथ रुक्मिनृपो निजसभायां पश्चात्तापादित्यरोदीत्–'हा वत्से ! हे वैदर्भि ! त्वं क्व विद्यसे ?, तव सम्बन्धो हि नोचितोऽभवत् । पुत्रि ! मया गौरिव त्वं चण्डालद्वारे क्षिप्ताऽसि । नूनं क्रोधश्चण्डालः कथितस्तत् सत्यम् । किञ्च, सर्वोऽत्यन्तहितवाञ्छकोऽप्यात्मवर्गो मया चण्डालाभ्यां पुत्रीमदापयत् ! । रुक्मिण्या प्रद्युम्नाय याच्यमानापि पुत्री क्रोधान्धेन मन्दमेधसा मया न दत्ता, अविचारितकारिणं मां धिग् धिक्' । एवं रुदन् स रुक्मी गम्भीरवादित्रशब्दं शुश्राव । 'अयं कुतः ?' इति पृष्टा अधिकारिणो ज्ञात्वा कथयामासुः–'स्वामिन् ! प्रद्युम्न-शाम्बौ वैदर्भीसंयुक्तौ नगराद् बहिर्विमानसमाने प्रासादे देवाविव तिष्ठतः, भट्टैश्चारणैर्वन्दिभिश्च स्तूयमानौ तौ वर्यवादित्रमनोहरं सङ्गीतनाटकं कारयतः, प्रभो ! तत्सम्भवो नादोऽयमात्मभिः श्रूयते' । इति श्रुत्वा हृष्टो रुक्मी तौ स्वगृहे सन्मानेनाऽऽनिन्ये, जामेय-जामातृस्नेहाच्च स्वयमेवाऽधिकं पूजयामास । ततो रुक्मिणमापृच्छ्य वैदर्भी-शाम्बसहितः प्रद्युम्नो द्वारवत्यामगात् । रुक्मिण्या अतीवान-

न्दाङ्कुरः प्रादुर्बभूव । नवयौवनया वैदर्भ्या समं नवीनया रत्येव रममाणो नूतनयौवनः प्रद्युम्नः सुखेन तस्थौ। शाम्बोऽपि हेमाङ्गदनृपपुत्र्या वेश्याप्रसूतया अप्सरोधिकरूपश्रिया सुहारिणीनाम्न्या समं सानन्दं रेमे।

अथ कुतूहली शाम्बो नित्यं क्रीडयन् भीरुं जघान, तथा द्यूते प्रत्यहं प्राज्यं धनं हारयित्वा दापयामास।

द्यूतपणे शुकः प्राह–

"सकृज्जल्पन्ति राजानः, सकृज्जल्पन्ति पण्डिताः। सकृत्कन्याः प्रदीयन्ते, त्रीण्येतानि सकृत् सकृत्" ॥ १ ॥

ततः शाम्बप्रेरिता सारिका प्राह–

"शतेषु जायते शूरः, सहस्रेषु च पण्डितः। वक्ता शतसहस्रेषु, दाता भवति वा न वा" ॥ १ ॥

पुनर्द्वितीयवारं सा प्राह–

"न रणे निर्जितः शूरो, विद्यया न च पण्डितः। न वक्ता वाक्पटुत्वेन, न दाता धनदानतः" ॥ २ ॥

पुनः सा तृतीयवारं प्राह–

"इन्द्रियाणां जये शूरो, धर्मं चरति पण्डितः। सत्यवादी भवेद्वक्ता, दाता भूताऽभयप्रदः" ॥ ३ ॥

ततो भीरुणैकलक्षं हारितं, कृष्णेन कोशाद्दत्तम्। द्वितीयदिने गन्धसंवादे कृष्णविलेपनां कृत्वा भीरुः सभा-

यामागतः, शाम्बेन हिङ्गु-लशुनादिदुर्गन्धेन जितः, द्वे लक्षे हारितः। तृतीयदिनेऽलङ्कारसंवादे कृष्णालङ्काराऽलङ्कृतो भीरुः सभायामागात्, शाम्बस्तु इन्द्रदत्तश्रीनेमिभूषणभूषितः, तेन कृत्वा जितः, लक्षत्रयं हारितं, कृष्णेन च दत्तम्। ततः कृष्णेन भीरवे शिक्षा दत्ता। पुनरपि स भीरुर्व्यसनेन हारयन् हरिणा वारितोऽपि शाम्बेन समं क्रीडयन् कुट्टितः। ततो रुदन् गत्वा सत्यभामायै जगाद। तदा सा केशवाय कथयामास। सोऽपि जाम्बवत्यै तत्सर्वं शाम्बस्य चेष्टितमकथयत्। तदा जाम्बवत्येवं बभाषे—'इयत्कालं मया शाम्बो दुर्विनीतो न ह्यश्रावि, तर्हि किमुपालम्भप्रदानम्?'। तदा विष्णुरुवाच—'सिंही नित्यं स्वपुत्रं भद्रं सौम्यं च मन्यते, परं तस्य शिशोरपि क्रीडां गजा एव जानन्ति। तदद्य तच्चेष्टां किञ्चित् त्वां दर्शयामि'। इत्युक्त्वा हरिराभीररूपं चक्रे, तां च जाम्बवतीमाभीरीरूपां चकार। ततस्तौ द्वावपि गोरसं विक्रीणानौ द्वारावतीं प्रविशन्तौ निरन्तरं स्वैरविहारिणा शाम्बकुमारेण दृष्टौ। अथ सोऽवोचत्—'हे आभीरि! एहि, अहं गोरसं क्रीणामि' इत्युक्ता सा तु शाम्बमन्वगात्, स आभीरोऽपि तस्याः पृष्ठे ययौ। अथ शाम्ब एकं देवकुलं प्रविष्टस्ताम् आह्वत। सोचे—'अत्राऽहं न प्रवेक्ष्यामि, त्वं मम मूल्यमत्रैव देहि'। तदा 'अत्र त्वयाऽवश्यं प्रवेष्टव्यम्' इति कथयित्वा, तां च करेण गृहीत्वा हस्ती वल्लीमिव स आक्रष्टुमारेभे। ततस्तं शीघ्रं स आभीरः कथयामास—'रे रे! त्वं मद्भार्यां किं गृह्णासि?' इति जल्पन् तं गाढं जघान। पश्चात्तौ जाम्बवती-कृष्णौ आविरभूताम्। तदा स्वपितरौ दृष्ट्वा शाम्बो मुखं पिधाय लज्जया नष्टः। ततो हरिर्जाम्बव-

तीमुवाच–'त्वया सुतदुश्चेष्टाऽदर्शि ?'। अथ द्वितीये दिवसे प्रसह्य कृष्णेनानीयमानः स कीलिकां घटयन्नागात्। तदा कृष्णेन पृष्ट एवमुवाच–'कल्यसत्कां वार्तामद्य यो हि वदिष्यति तन्मुखे एषा कीलिका क्षेप्या, अतोऽहमेनां घटयामि!'। तदा सरोषेण कृष्णेन 'रे! त्वं निर्लज्जः कामवशवर्ती स्वैरं यथा तथा विविधां चेष्टां करोषि' इति कथयित्वा शाम्बः स्वपुरीतो निर्वासितः। प्रद्युम्नोऽस्त्वन्तः स्नेहवान् प्राग्जन्मन्यपि बन्धवे तस्मै गच्छते शाम्बाय प्रज्ञप्तिविद्यां दत्तवान्। अथ तत्प्रभृति प्रद्युम्न भीरुकं मर्दयन् सत्यभामयौच्यत–'रे शाम्ब इव दुर्बुद्धे! त्वमपि नगरीतः किं न निर्यासि ?'। सोऽप्युवाच–'कुत्र व्रजामि ?'। ततः सोचे–'श्मशानमध्ये गच्छ'। पुनस्तेन 'कदा मयकाऽऽगन्तव्यम् ?' इति प्रोक्ता सा क्रोधेन कथयामास–'यदाऽहं हस्ते गृहीत्वा शाम्बमत्राऽऽनयामि तदा त्वयका समागम्यम्'। तदा 'यद् मम माता समादिशति' इत्युक्त्वा प्रद्युम्नः श्मशाने गतवान्। शाम्बोऽपि भ्रान्त्वा तत्राययौ। द्वावपि तौ श्मशानेऽतिघनं दाहशुल्कं बलाद् गृहीत्वा नगरीसत्कमृतकानि ज्वालयितुं ददतुः।

इतश्च, सत्यभामा स्वपुत्राय भीरवे एकोनकन्याशतं मनोज्ञमभेलयत्, प्रयत्नाच्च एकां कन्यामियेष। प्रद्युम्नस्तु प्रज्ञप्तिविद्यया तज्ज्ञात्वा सेनां विकुर्वितवान्, स्वयं च तत्क्षणाद् जितशत्रुर्नाम राजा बभूव, शाम्बश्च देवकन्यासदृशी तत्कन्या जज्ञे। सा सखीपरिवृता क्रीडन्ती च भीरुधात्र्याऽदर्शि। तां ज्ञात्वा

सा तत्कालं सत्यभामायै व्यजिज्ञपत् । तदा सत्यभामा तां नरेण जितशत्रुमयाचिष्ट । सोऽपि तं बभाषे—'अहं तदा कन्यां ददामि यदि सत्यभामाऽमूं हस्ते गृहीत्वा द्वारिकां प्रविशेत् । अन्यच्च, विवाहसमयेऽस्याः करं भीरुकरोपरि यदि सत्यभामा कारयेत् तदा मम पुत्री भीरवेऽस्तु' । इत्युक्तः स पुरुषो गत्वा तत् सत्यभामायै विज्ञपयामास । साऽपि कन्यार्थिनी 'आम्' इत्युक्त्वा तत्सैन्यं शीघ्रं जगाम । शाम्बः प्रज्ञप्तिं जगाद—'सत्यभामा तस्याश्च सकलः परिजनो मां कन्यारूपं पश्यतु, अपरो लोकस्तु शाम्बमेव पश्यतु' । अथ तथैव प्रज्ञप्त्या कृते सत्यभामया दक्षिणकरेण गृहीतः शाम्बो द्वारवत्यां प्रविवेश, भीरोश्च विवाहोत्सवे तयाऽऽनिन्ये । तद् दृष्ट्वा नगरलोकाः स्त्रियश्चोचुः—'अहो ! चित्रम्, अहो! चमत्कारः' । ततः शाम्बः सत्यभामागृहेऽगात् । तत्र वामधीः शाम्बो भीरोर्दक्षिणकरम् उपरिस्थेन स्वकीयवामकरेण गृहीत्वा, दक्षिणकरेण च एकोनकन्यकाशतस्य करान् समकालं धृत्वा विधिना वह्निमभ्रमत् । तदा कन्यकाः शाम्बं पश्यन्त्योऽन्तश्चिन्तयामासुः—'अस्माकं समानः पतिस्त्वं पुण्योदयेन विधात्रा योजितोऽसि' । अथ वृत्तविवाहः[1] शाम्बस्ताभिः समं वासभवनमगमत् । तत्राऽऽयान् भीरुः शाम्बेन भ्रकुट्या भीषितो[2] ययौ । गत्वा च सत्यभामायै आचख्यौ, परं सा त्वश्रद्दधती स्वयं तत्रागत्य शाम्बमद्राक्षीत् ! । शाम्बोऽपि तां

१ वृत्तो विवाहो यस्य सः । २ भापितः ।

प्रणामं चक्रे। ततः सा सकोपा एवमूचे–'रे धृष्ट ! केनात्राऽऽनीतोऽसि ?'। शाम्ब उवाच–'मातः ! अत्राऽहं त्वयाऽऽनीतः, कन्यकापाणिग्रहणं च कारितः । अत्र साक्षिकः सर्वो मध्यस्थो द्वारकालोकोऽस्ति' । तेनेत्युक्ता सा तत्रायातान् पुरीलोकान् पप्रच्छ । तेऽप्यूचुः–'हे देवि ! मा कुप्य, त्वयैव शाम्बः प्रवेशितः, अस्माकं सर्वेषां पश्यतामेव च त्वयैव पाणिग्रहणं कारितः' । ततो 'मायी मायिपुत्रो मायिकनिष्ठो मायिनीसम्भवस्त्वं कन्यारूपो मामच्छलयः' इत्युक्त्वा सा रुषा स्वगृहमगमत् । ततः सर्वलोकानां प्रत्यक्षमेव ताः कन्याः केशवः स्वयं शाम्बाय ददौ, जाम्बवती च महामहोत्सवं चक्रे। ततः शाम्बो वसुदेवं नन्तुं गतः सन् बभाषे–'हे तात ! नूनं युष्माभिः पृथिवीं भ्रान्त्वा चिरकालेन स्त्रियः परिणीताः, मया तु अभ्रान्त्वाऽपि एकत्रैव युगपत् कन्यकानामेकोनशतं परिणीतम्, इति प्रकटं युष्माकं मम च महदन्तरम् !' । तदा वसुदेवः प्रत्युवाच–'रे रे कूपमण्डूकसन्निभ ! पित्रा निःसारितोऽपि त्वमेषोऽत्रागतः, मानरहितं त्वां धिग् धिक् । अहं तु भ्रात्राऽपमानितो वीरवृत्त्या निर्गतः सन् सर्वत्र देशे देशे पर्वते पर्वते चाऽस्खलितोऽभ्राम्यम्, कन्याश्च बह्वयः पर्यणैषम्, यथाऽवसरं च मिलितैरेभिर्भ्रातृभिरर्थितोऽहं स्वगृहमागाम्, परं न पुनस्त्वमिव निर्लज्जोऽप्रार्थितः स्वयमेवाऽत्रागच्छम्' । अथ शाम्बकुमारः स्वकृतं पूज्यतिरस्कारं ज्ञात्वा कृताञ्जलिः प्रणम्य इत्युच्चैः पितामहमुवाच–'तात ! एतद् मयाऽज्ञानादुक्तम्, इदं हि मे दुर्ललितं श्रीता-

तचरणैः क्षन्तव्यम्, भवन्तस्तु गुणैः कृत्वा लोकोत्तराः सन्ति'। ततः पुनः शाम्बः स्वपितुः पादयोर्लगित्वा स्वापराधं क्षमयामास।

एवं शाम्बः कुमारः स्वबलजितहरे रौक्मिणेयस्य[1] तुल्यो, विद्याभृद्बान्धवाढ्यः शिवगतिगमनः स्वर्गिरूपो बभूव। ऊढं येन क्षणेन प्रकटतममहो! सत्कनीनां समूहं, प्रौढो लीलाकरेष्वप्रमितगुणगृहं भुञ्जमानः सुखानि ॥ १ ॥

॥ इति पण्डितश्रीकनकविजयगणिचरणपङ्कजभ्रमरसदृश–गुणविजयगणिविरचिते श्रीमदरिष्टनेमिचरिते सुललितगद्यबन्धे हरिणैगमेषिदेवाराधन–दिव्याहारासादन–प्रद्युम्नशाम्बपाणिग्रहणकीर्तनो नाम सप्तमः परिच्छेदः ॥

## ॥ अथ अष्टमः परिच्छेदः ॥

॥ प्रतिवासदेवजरासन्धस्य शिशुपालस्य च वधः ॥

इतश्च, यवनाभिधानद्वीपतस्तस्यां द्वारावत्यां नगर्यां जलमार्गेण महाभाण्डानि गृहीत्वा केचिद्व्यवहारिणो वणिज ईयुः। तत्र तेऽन्यवस्तूनि व्यक्रीणन्त, परं महामूल्यान् रत्नकम्बलान् न व्यक्रीणन्त।

१ रुक्मिणीपुत्रस्य–प्रद्युम्नस्य।

विशेपलाभमिच्छन्तस्ते राजगृहनगरे ययुः । अथ ते तत्र वास्तव्यैर्वणिग्भिरग्रे भूत्वा जरासन्धराजराजस्य सुताया जीवयशसो गृहे निन्यिरे । तत्र ते जीवयशसम् उष्णकाले शीतान् शीतकाले चोष्णान् बहुलक्ष-क्षरोमान् रत्नकम्बलानदर्शयन् । अथ तया तेषां रत्नकम्बलानां मूल्यार्धे कृते तु ते पूत्कारं चक्रुः—'वयं द्वारकां मुक्त्वाऽत्राधिकलाभलिप्सयाऽऽयाताः !'। तदा जीवयशास्तान् पप्रच्छ—'का नाम द्वारका नगरी?, तत्र च को नाम नृपः?' । ततस्ते वणिजोऽदोऽवदन्—'समुद्रार्पितस्थाने देवैर्द्वारका नगरी नूतना कृताऽस्ति । तत्र देवकी-वसुदेवयोः पुत्रः कृष्णनृपोऽस्ति' । तच्छ्रुत्वा सा तत्कालं महाशोकातुरा हृदये सशल्या जाता, रुदती चैवं वभापे—'हा हा! अद्यापि मद्भर्तुर्मारको जीवति, पृथ्वीं च भुनक्ति' । तां तादृशीं दृष्ट्वा राजा जरासन्धो रोदनकारणमपृच्छत् । साऽपि कृष्णवृत्तान्तमकथयत् । ततः कृताञ्जलिरित्यब्रवीत्—'हे तात ! मां विसृज, अद्यैवाऽहं वह्नौ प्रवेक्ष्यामि, स्वप्रतिज्ञां च पूरयिष्यामि, अतः परं न जीविष्यामि' । तदा जरासन्धो जगाद—'हे पुत्रि ! त्वं मा रोदीः, एषोऽहं ननु कंसारेर्मातृ-भगिनी-वधूजनं रोदयिष्यामि' । ततो 'जगद् अधुनाऽयादवं भवतु' इति कथयित्वा मगधाधिनाथो मन्त्रिभिर्वार्यमाणोऽपि त्वरितं प्रयाणाय सर्वसेनामादिशत् । तदा महाबलवन्तः सहदेवादयः पुत्राः, यो हि दोष्मतां धुरीणः स चेदिराजः शिशुपालः, महापराक्रमान्वितो राजा हिरण्यनाभः, तथा कौरव्यः शतभ्रातृबलगर्वित आयोधनधुर्यो राजा दुर्योधनः, किं बहुना ?, अन्येऽपि बहवो भूपालाः सहस्रशः सामन्ताश्च समुद्रं

प्रवाहा इव जरासन्धमहाराजं समापेतुः। अथ प्रयाणावसरे मस्तकाद् मुकुटः पपात, हृदयाद् हारस्तुत्रोट, वामं नयनं वारं वारं स्फुरितुं लग्नम्, वस्त्राञ्चलेन तस्य चरणः स्खलितः, अग्रे छिक्का वभूव, महाभीषणः कालभुजग उत्तरितः, ओतु[1]रग्रे भूत्वा गतः, तद्गजराजो विण्मूत्रे अकरोत्, वातः प्रतिकूलोऽभूत्, गृध्रपक्षिणो गगने भ्रेमुः। एवमादिभिरास्यैरिव अन्यैरपि बहुभिरनिमित्तैरपशकुनैश्च कथ्यमाना[2]ऽशुभोदर्कोऽपि स मनागपि प्रयाणाद् नास्थात्, मनोमात्रेणापि च न व्यरमत्। रजोभिरिव सैन्योत्थितैस्तुमुलैः कोलाहलैः सर्वा दिशः पूरयन् अत्यन्तमुद्भ्रान्तो दिग्गज इव भूमितलं कम्पयन् क्रूरसन्धो गन्धगजराजमारूढो महाबलवान् जरासन्धनृपः पश्चिमदिशं प्रति प्रचचाल। तदा समायान्तं जरासन्धभूपं कलिकुतूहली नारदश्चराश्च गत्वा त्वरितं गोवर्धनाय कथयामासुः। कृ[3]ष्णवर्त्मेव सर्वेषां तेजसामेकं स्थानकं स कृष्णोऽपि भम्भाताडनपूर्वकं प्रयाणाय समुत्तस्थे। तन्निनादेन सर्वेऽपि यादवा राजानश्चाऽमिलन्, यथा सुघोषाघण्टाघोषेण सौधर्मदेवलोके देवा मिलन्ति। अथ तेषु राजा समुद्रविजयः समुद्र इवाऽतीव दुर्धरस्तत्र सर्वसन्नाहवान् आगात्। तस्यैते पुत्रा अपि महानेमिः, सत्यनेमिः, दृढनेमिः, सुनेमिः, तीर्थङ्करोऽरिष्टनेमिः, जयसेनो, महीजयः, तेजःसेनो, नयो, मेघः, चित्रको, गौतमः, श्वफल्कः, शिवनन्दो, विष्वक्सेनश्चेति सर्वेऽपि महारथा आययुः। अथ समुद्रविजयाऽनुजो वैरित्राताऽक्षोभ्यबलोऽ-

१ बिडालः। २ सूच्यमानाऽमङ्गलभाविफलोऽपि। ३ अग्निरिव।

क्षोभमनागात्। तस्य चेमे युधि धौरेया अष्टौ पुत्रा उद्धवो, धवः, क्षुभितो, महोदधिः, अम्भोनिधिः, जलनिधिः, वामदेवो, दृढव्रतश्चेति आजग्मुः। अथ स्तिमितोऽपि तत्राययौ। तस्य चोत्तमा इमे पञ्च पुत्रा ऊर्मिमान्, वसुमान्, वीरः, पातालः, स्थिरश्चेति आययुः। अथ सागर आययौ। तस्य च षट् पुत्रा निष्कम्पः, कम्पनो, लक्ष्मीवान्, केसरी, श्रीमान्, युगान्तश्चेति समाययुः। ततस्तत्र हिमवान् समागात्। तस्य च त्रयः पुत्रा विद्युत्प्रभो, गन्धमादनो, माल्यवांश्चाजग्मुः। अथाऽचलः समागात्। तस्य चैते महौजसः सप्त पुत्रा महेन्द्रो, मलयः, सह्यो, गिरिः, शैलो, नगो, बलश्चाययुः। अथ धरणः समागात्। तस्य च पञ्च पुत्राः कर्कोटको, धनञ्जयो, विश्वरूपः, श्वेतमुखो, वासुकिश्च समाजग्मुः। अथ पूरणः समाययौ। तत्पुत्राश्चत्वारो दुष्पूरो, दुर्मुखो, दुर्दर्शो, दुर्धरश्च संग्रामे समेयुः। अथाऽभिचन्द्रो नवमो दशार्ह आययौ, तस्य च षट् पुत्राश्चन्द्रः, शशाङ्कश्चन्द्राभः, शशी, सोमोऽमृतप्रभश्चेति सर्वेऽपि समाजग्मुः। अथ दशमो दशार्हो देवदेव इव बलवान् वसुदेवः समागात्, तत्पुत्रास्तु बहवो दोष्मन्त आजग्मुः। ते नाऽभिधानतोऽमी—विजयसेनायाः सुतौ अक्रूर-क्रूरौ, श्यामाया द्वौ पुत्रौ ज्वलना-ऽशनिवेगौ, गन्धर्वसेनायास्त्रयः पुत्रा अग्नेरिवाऽग्नय इव वायुवेगा-ऽमितगति-महेन्द्रगतयः, मन्त्रिसुतायाः पद्मावत्या महाबलपन्तत्रयः पुत्राः सिद्धार्थो दारुकः सुदारुश्चेति, नीलयशसो द्वौ पुत्रौ सिंह-मतङ्गजौ, सोमश्रियो द्वौ पुत्रौ नारद-मरुदेवौ, मित्रश्रियस्तु सुमित्रः, कपिलायाः कपिलः, पद्मावत्या द्वौ पुत्रौ पद्म-कुमुदौ,

अश्वसेनाया अश्वसेनः, पुण्ड्राया: पुण्ड्रः, रत्नवत्या द्वौ पुत्रौ रत्नगर्भ-वज्रबाहू, सोमराजसुतायाः सोमश्रिया द्वौ सुतौ चन्द्रकान्त-शशिप्रभौ, वेगवत्या द्वौ नन्दनौ वेगवान् वायुवेगश्च, मदनवेगायास्त्रैलोक्यप्रथितबलास्त्रयः पुत्रा अनाधृष्टि-दृढमुष्टि-हिममुष्टयः, बन्धुमत्या द्वौ सुतौ बन्धुषेण-सिंहसेनौ, प्रियङ्गुसुन्दर्याः पुत्रो युधि धुर्यः शिलायुधः, प्रभावत्या उभौ पुत्रौ गन्धार-पिङ्गलौ, जराराज्ञ्याः पुत्रौ जरत्कुमार-वाह्लीकौ, अवन्तिदेव्याः पुत्रौ सुमुख-दुर्मुखौ, रोहिण्या महाबलवन्तस्त्रयः पुत्रा राम-सारण-विदूरथाः, बालचन्द्रायाः पुत्रौ वज्रदंष्ट्रा-ऽमितप्रभौ, इमे सर्वेऽपि सङ्ग्रामे आययुः। अथ रामस्य बहवः पुत्राः सन्ति, तेषु मुख्यास्तु नामत एते—उल्मूको निषधः प्रकृतिद्युतिश्चारुदत्तो ध्रुवः शत्रुदमनः पीठः श्रीध्वजो नन्दनः श्रीमान् दशरथः देवानन्द आनन्दो विप्रथुः शान्तनुः पृथुः शतधनुर्नरदेवो महाधनुर्दृढधन्वा, इमे सर्वेऽपि योद्धुमिच्छव आजग्मुः। तथा केशवस्यापि पुत्रा रणे समाययुः, ते चाऽमी—भानुर्भामरो महाभानुरनुभानुर्बृहद्ध्वजोऽग्निशिखो धृष्णुः संजयोऽकम्पनो महासेनो धीरो गम्भीर उदधिर्गौतमो वसुधर्मा प्रसेनजित् सूर्यश्चन्द्रवर्मा चारुकृष्णः सुचारुर्देवदत्तो भरतः शङ्खः प्रद्युम्नः शाम्बः, अन्येऽपि च महाबलवन्तः सहस्रशो गोविन्दसुता जयाभिलाषिणस्तत्र सङ्ग्रामे समापेतुः। अथ राजा उग्रसेनः ससुत आजगाम, तत्सुताश्चेमे—धरो गुणधरः शक्तिको दुर्धरश्चन्द्रः सागरः। ज्येष्ठनृपस्य पितृव्यः शाम्बनः, तस्य चैते सुताः—महासेनो विषमित्रोऽजमित्रो दानमित्रश्चेत्याययुः, महासेनस्य सुतः सुषेणनामा, विषमित्रस्य तु हृदिक-

सिनि-सत्यकाः, हृदिकस्य द्वौ पुत्रौ कृतवर्मा दृढवर्मा चेति, सत्यकस्य पुत्रो युयुधानः, तस्यापि च गन्धनामा पुत्रो युधि समाययौ । दशार्हाणामपरेऽपि सुता, राम-केशवयोश्च बहवः पुत्राः पितृष्वसृ-स्वसृपुत्राश्च महाबलवन्तस्तत्र सङ्ग्रामे आययुः ।

ततो नैमित्तकेन क्रोष्टुकिना कथिते मनोज्ञदिने दारुकसारथिं[1] गरुडध्वजरथमारूढः[2] सर्वैर्यदुभिः परिवृतः शुभैर्निमित्तैः शुभैश्च शकुनैः सम्यक्सूचितजयोत्सवः कृष्णो महानरेन्द्रः पूर्वोत्तरां दिशं प्रति प्रचचाल । सङ्ग्रामदक्षः केशवः स्वपुरीतः पञ्चचत्वारिंशतं योजनानि गत्वा सिनपल्लीग्रामे तस्थौ । जरासन्धसैन्यादर्वाक् चतुर्भिर्योजनैः कृष्णसैन्ये स्थिते तत्र केचित् खेचरोत्तमा आगुः । ते च समुद्रविजयं नत्वाऽवोचन्–'हे राजन्! वयं त्वदीयस्य भ्रातुर्वसुदेवस्य गुणगृह्याः स्मः । येषां कुले भगवान् श्रीमदरिष्टनेमिर्जगद्रक्षा-क्षयक्षमोऽस्ति[3], एतौ राम-केशवौ अद्वितीयपराक्रमधारिणौ स्तः, प्रद्युम्न-शाम्बप्रभृतयश्चाऽमी कोटिशो नसारः सन्ति, तेषां युष्माकं सङ्ग्रामे ननु अन्येषां साहाय्यं कीदृशम्?, तथाप्यवसरं विज्ञाय वयं युष्मद्भक्त्या आगताः स्मः, अतोऽस्मद्योग्यं किमपि कार्यं समादिशस्व, हे प्रभो! स्वसामन्तवर्गे चाऽस्मान् गणय' । तत 'एवमस्तु' इति राज्ञा प्रोक्ते, ते पुनरप्येवमूचुः–'हे राजन्! असौ जरासन्धनृपः केवलस्यापि केशवस्य तृणमात्रम्, परं वैताढ्यपर्वते ये जरासन्धगृह्याः खेचराः सन्ति ते याव-

१ दारुक. सारथिर्यस्य, तम् । २ गरुडो ध्वजे यस्य एतादृश रथम् । ३ जगतो रक्षाया क्षये च क्षम'–समर्थः ।

दिह नो आयान्ति तावत् तान् प्रति अस्मानादिश, अस्मासु सेनानीश्चाऽयं तव लघुबान्धवो वसुदेवः प्रद्युम्न-शाम्बसहितोऽस्तु, एवं च सति ते निर्जिता एव'। इति श्रुत्वा राजा समुद्रविजयः कृष्णानुज्ञया प्रद्युम्न-शाम्बान्वितं वसुदेवं तैः खेचरैः सार्द्धं प्रैषीत्। तदा च तस्मै वसुदेवायाऽरिष्टनेमिना शस्त्रवारण्यौषधी या जन्मस्नात्रे देवैर्बाहौ बद्धाऽऽसीत् सा प्रददे।

इतश्च, मगधाधीश्वरम्[1] अपरमन्त्रिभिः सममागत्य हंसनामा प्रधानपुङ्गवो[2] मन्त्रपूर्वकमिदं[3] वचनमुवाच—"हे स्वामिन्! पूर्वं त्वज्जामाता कंसोऽमन्त्रितमकार्षीत्[4], तेन कारणेन स तत्फलं प्राप; यतो मन्त्रशक्तिं विना उत्साहशक्ति-प्रभुशक्ती दुरायती[5]। हे प्रभो! परो[6] निर्बलः समोऽपि वा नूनं स्वाधिको द्रष्टव्य इति नीतिः, किं पुनरेष महाबलवान् कृष्णो यः स्वस्मादधिकोऽस्ति?। तथा रोहिण्याः स्वयंवरे हि दशमो दशार्हो वसुदेव आत्मीयनृपाणां मुखान्धकारः स्वामिना स्वयमदर्शि, तदा च वसुदेवं जेतुं कोऽपि नो समर्थोऽभूत्, तद्वृद्धभ्रात्रा समुद्रविजयेन त्वत्सैनिका रक्षिता आसन्, तन्न विस्मर्तव्यम्!। द्यूते कोटिद्रव्यजयात् स्वसुतायाश्च जीवितव्यदानाद् ज्ञातो वसुदेवो घातितोऽपि स्वप्रभावान्न मृतः। सम्प्रति तु तस्य राम-कृष्णौ महाबलवन्तौ पुत्रौ संजातौ, एतावतीं च वृद्धिं प्राप्तौ ययोः कृते धनदो द्वारकानगरीं निर्ममे।

१ जरासन्धम्। २ मन्त्रिश्रेष्ठः। ३ विचारपूर्वकम्। ४ अविचारितम्। ५ दुष्टा आयतिः—परिणामो ययोस्ते। ६ शत्रुः।

एतौ अतिरथौ वीरौ, यौ महारथाः पञ्च पाण्डवा अपि [1]व्यसने शरणं शिश्रियुः। तथा प्रद्युम्न-शाम्बौ सुतौ राम-केशवौ इवाऽद्वितीयपराक्रमशालिनौ । तथा भीमा-ऽर्जुनौ बाहुबलात् कृतान्तस्यापि भीषणौ । अथाऽन्यैर्बहुभिर्वीरैर्व्याहृतैः किम्? तत्रैकोऽरिष्टनेमिर्लीलया स्वकीयभुजदण्डेन पृथिवीमेकच्छत्रीकर्तुं समर्थोऽस्ति । हे प्रभो! मगधाधीश्वर! त्वदीये सैन्ये तु धौरेयौ शिशुपाल–रुक्मिणौ, परं तयोर्बलं तु रुक्मिणीहरणे बलभद्रसंग्रामे दृष्टम्!। कौरव्यो दुर्योधनस्तथा गन्धारदेशाधीशः शकुनिश्चैतौ हि अस्थिभुग्वत् [3]छलबलौ, अनयोर्वीरगणना नास्ति। हे प्रभो! अहमेवं शङ्के–कृष्णसैन्ये तु कोटिसंख्या महारथाः सुभटाः सन्ति, तेष्वयमङ्गदेशस्वामी कर्णोऽपि सागरे सक्तुमुष्टिसमो विद्यते । यदुसैन्ये नेमि-राम-केशवास्त्रयोऽतिरथा वर्तन्ते, आत्मीयबले तु त्वमेक एवाऽतिरथोऽसि, तेन कारणेन उभयोः सैन्ययोर्महदन्तरम् । यं समुद्रविजयनृपपुत्रम् अच्युतादयः सुरपतयोऽपि भक्त्या नमस्कुर्वन्ति तेन श्रीअरिष्टनेमिना सार्द्धं युद्धाय कः प्रोत्सहेत?। तथा कृष्णाधिष्ठायकैः सुरैरसुरैरिव च्छलयित्वा ते कालकुमारपुत्रो निपातितस्तेन हेतुना दैवं पराङ्मुखं जानीहि। अमी यदवो बलिनोऽपि [4]नयं प्रमाणीकुर्वन्तो मथुरानगरीतः प्रणश्य द्वारकानगरीं ययुः, परं हे विभो! त्वया तु यष्टिना आहत्य बिलात् कृष्टः सर्प इवाऽसौ आहूतः कृष्णस्तव संमुखीन आगात्, न पुनः स्वयमिति सर्वेऽपि जानन्ति । इयत्यपि गते हे मगधाधिप! अमुना सह योद्धुं

१ विपत्तौ । २ शुनकवत् । ३ छलमेव बलं ययोस्तौ । ४ नीतिम् ।

तव न युज्यते, त्वयि अयुध्यमाने एष केशवः स्वयं व्यावृत्य स्वनगरीं यास्यति" । इति तद्वचनैः क्रुद्धो जरासन्धोऽर्धचक्री इति जगाद–'रे दुराशय ! मायिभिर्यदुभिर्निश्रितं त्वं भेदितोऽसि !; यत् त्वं मां शत्रुबलं कथयन् भीषयसि तद् वृथैव, रे रे कातर ! किं फेरुफेत्कारैः[1] कदापि सिंहो बिभेति ? । रे रे दुर्मते ! मौनं कृत्वा स्वकीयं मुखमदृश्यं कुरु। एषोऽहमेक एव स्वबलाद् गोपानां बलं भस्मसात् करोमि, सङ्ग्रामनिवर्तनकरं तवेमं मनोरथं धिग् धिक्' । अथ डिम्भको मन्त्री तद्भावसंदेशवचनमकथयत्[2]— 'सम्प्रति प्राप्तावसर एष सङ्ग्रामः स्वामिना न त्याज्यः । संग्रामे संमुखीननराणां मरणमपि वरं, यतस्तद् यशस्करम्, परं संग्रामात् पराङ्मुखानां जीवितमपि वृथैव ज्ञेयं, हे प्रभो ! ईदृशो न्यायोऽस्ति । स्वकीये सैन्ये चक्ररत्नमिवाऽच्छेद्यं चक्रव्यूहं विरचय्य समीपागतं रिपुसैन्यं हनिष्यामः' । तच्छ्रुत्वा जरासन्धो हृष्टस्तं 'साधु साधु' इति जगाद, चक्रव्यूहाय च महौजसः सेनास्वामिन आदिक्षत्। अथ स्वस्वामिशासनाद् हंसक-डिम्भकप्रधानौ तथाऽपरेऽपि सेनानाथाश्चक्रव्यूहं चक्रिरे। तत्र सहस्रारके[3] चक्रेऽर्ध्यरम्[4] एकैको भूपतिः स्थितः । तेषां नृपाणां प्रत्येकं शतगजाः, रथानां द्वे सहस्रे, पञ्चसहस्रतुरङ्गमाः, महाबलधारिणश्च षोडशसहस्रपदातय आसन् । प्रधेः[5] परिधौ[6] सपादषट्सहस्रनृपा अभूवन् । चक्रमध्ये च साधिकैः पञ्चसहस्रैर्नृपैः

१ शृगालशब्दैः । २ जरासन्धाशयानुकूलवचनम् । ३ सहस्रम् अरा यस्मिंस्तस्मिन् । ४ अरे इत्यध्यरम्—प्रत्यरम् । ५ प्रधिश्चक्रनाभिः । ६ वर्तुले ।

सहितो मगधाधिपोऽस्थात्। जरासन्धस्य पृष्ठे गान्धारनृप-सैन्धवनृपबलमभूत्, दक्षिणपार्श्वे शतं कौरवा अभवन्, वामपार्श्वे मध्यदेशभूपाला अस्थुः, पुरतस्तु गणनराधिपा अभूवन्। अग्रतश्च शकटव्यूह-सहिताः पञ्चाशद् राजानः प्रधेः सन्धौ सन्धौ अभूवन्। गुल्मा गुल्मान्तराद् अन्तरान्तरं संस्थिताः, गणाधिपाश्च महाबलान्विता महीभुजश्चक्रव्यूहाद् बहिरपि चित्रैर्व्यूहैरस्थुः। अथ जरासन्धराजः सत्यसन्धं महाबलवन्तं महाभुजं नानाविधसङ्ग्रामविख्यातकौशलं कोशलानगरीनायकं भूपतिं हिरण्यनाभं तस्य चक्रव्यूहस्य सेनानीत्वेऽभ्यषिञ्चत्, तदा च दिनकरोऽस्तं ययौ।

अथ यदवो निशायां चक्रव्यूहप्रतिद्वन्द्वम् अरिराजभिर्दुर्भेद्यं गरुडव्यूहं निष्पादयामासुः। अस्य व्यूहस्य मुखे महातेजसां कुमाराणामर्धकोटिः, मस्तके च सीरपाणि-शार्ङ्गपाणी तस्थतुः। अक्रूरः कुमुदः पद्मः सारणो विजयी जयो जरत्कुमारः सुमुखो दृढमुष्टिर्विदूरथोऽनाधृष्टिर्दुर्मुखः सुमुखश्चैते वसुदेवपुत्रा रथलक्षसहिताः कृष्णस्य पृष्ठरक्षका अभवन्। तेषां च पृष्ठे रथकोटिसंयुक्तो राजा उग्रसेनो बभूव, तस्यापि पृष्ठरक्षकत्वे चत्वारस्तत्पुत्रा अभूवन्। सपुत्रं भोजवृष्णिपुत्रं रक्षितुं तत्पृष्ठतो धर-सारण-चन्द्र-दुर्धर-सत्यकाश्चेति राजानस्तस्थुः। अथ दक्षिणपक्षमाश्रित्य महाभुजः समुद्रविजयराजो भ्रातृभिर्भ्रातृसुतैश्च सार्धं तस्थौ। महानेमिः सत्यनेमिर्दृढनेमिः सुनेमिः प्रभुररिष्टनेमिर्विजयसेनो मेघो महीजयस्तेजः-

१ गणाश्चतुर्विधसेनास्तासामधिपाः। २ गुल्माश्चतुर्विधसेनाः। ३ बलदेव—कृष्णौ। ४ उग्रसेनम्।

सेनो जयसेनो जयस्तथा महाद्युतिः, एते समुद्रविजयराजस्य कुमाराः पार्श्वतोऽभूवन्; तथाऽन्येपि पञ्चविंशतिलक्षरथसंयुक्ता भूपालाः समुद्रविजयनृपस्य पार्श्ववर्तिनः पुत्रवदस्थुः। वामपक्षं तु समाश्रित्य रामस्य पुत्रास्तथा महायोद्धारो युधिष्ठिरप्रमुखाः पाण्डवास्तस्थुः। उल्मूको निपधः शत्रुदमनः प्रकृतिद्युतिः सात्यकिः श्रीध्वजो देवानन्द आनन्दः शान्तनुः शतधन्वा दशरथो ध्रुवः पृथुर्विप्रथुर्महाधनुर्दृढधन्वाऽतिवीर्यो देवनन्दनश्चेत्येते पञ्चविंशतिलक्षरथैः परिवृताः कौरववधोद्यताः पाण्डवानां पृष्ठे तस्थुः। तेषां च पृष्ठे चन्द्रयशाः सिंहलो बर्बरः काम्बोजः केरलो द्रविडश्चेति षड् भूपाः षष्टिसहस्ररथैः संयुक्तास्तस्थुः। तेषां च पृष्ठे धैर्यवतां पर्वतप्रायः शाम्बनमहाराजस्तस्थौ। पक्ष्मणो रक्षणाय च भानुर्भामरो भीरुकोऽसितः संजयो भानुको धृष्णुः कम्पितो गौतमः शत्रुञ्जयो महासेनो गम्भीरो बृहद्ध्वजो वसुवर्मा कृतवर्मा उदयः प्रसेनजिद् दृढवर्मा विक्रान्तश्चन्द्रवर्मा चेत्यस्थुः। इति गरुडध्वजविनिर्मितो गरुडव्यूहोऽभूत्।

अथ भ्रातृस्नेहाद् युयुत्सुं श्रीनेमिनं विज्ञाय सौधर्मेन्द्रो निजसारथिना मातलिनाम्ना सार्धं जैत्रशस्त्रभृतं स्वकीयं रथं प्रैषीत्। सूर्योदयं विस्तारयन्निव स रथो रत्नदेदीप्यमानोऽतीव भासुरो मातलिनोपनीतः, स च श्रीअरिष्टनेमिनाऽलञ्चक्रे। ततः कृष्णवृद्धपुत्रमनाधृष्टिं राजा समुद्रविजयः स्वयं सेनानीत्वे पट्टबन्धपूर्वमभ्यषिञ्चत्। समस्तेऽपि हरिसैन्ये जयजयारवो बभूव, जरासन्धसैन्ये तु सर्वतोऽपि गाढं प्रक्षोभोऽजनिष्ट। अथ

१ कृष्णरचितः।

द्वयोर्व्यूहयोः सुभटैः परस्परं बद्धाञ्चलैरिव अविस्फोटं यथा स्यात्तथा प्रसर्पद्भिरुद्धतं महायुद्धं प्रारेभे। द्वयो-र्व्यूहयोः [1]संफेटे विचित्राणि शस्त्राण्युत्पेतुः, यथा युगान्तोद्भ्रान्तयोः पूर्वपश्चिमसमुद्रयोः कल्लोला उत्पतन्ति। द्वयोरपि सेनान्योस्तौ व्यूहौ परस्परं प्रहेलिकावद् निरन्तरं दुर्भेद्यतां प्रजग्मतुः। चिरं युद्ध्वा जरासन्ध-सैनिकैः स्वामिभक्तितो दृढतरा अपि केशवाग्रसैनिका अभज्यन्त। ततो गरुडव्यूहस्यात्मेव गरुडध्वजः स्वयं पताकां पाणि चोत्क्षिपन् तान् सैनिकान् स्थिरीचकार। व्यूहस्य पक्षाविव दक्षिण–वामपार्श्वे स्थितौ महानेम्यर्जुनौ, व्यूहस्याग्रे चक्षुरिव चाऽनाधृष्टिस्ते त्रयोऽपि चुकुपुः। [2]महौजा महानेमिः सिंहनादाख्यं शङ्खं दध्मौ, अनाधृष्टिर्वलाहकाख्यम्। अर्जुनश्च देवदत्ताख्यं दध्मौ। अथ तन्निनादैर्यादवास्तूर्यकोटी-र्नादयन्, शङ्खनादश्च शङ्खैः शङ्खराजवद् अनुजग्मे। शङ्खत्रयनिनादेन तेन च तूर्यनादेन परसैन्ये भटा महासमुद्रे पाठीन–पीठ-नक्र-चक्र-मत्स्य-कच्छपादय इवाऽक्षुभ्यन्। विक्रमतत्पराः शरवर्षिणो नेम्यनाधृ-ष्ट्यर्जुनसेनान्यः कल्पान्तकाले सागरा इव वैरिसेनामाक्रमयामासुः। तेषां भुजबलमसहिष्णवः [3]परैऽतीव विदुद्रुवुः। स च चक्रव्यूहस्त्रिषु स्थानेषु तैस्त्रिभिरभञ्जि, यथा मदोन्मत्ता वनगजा गिरिनदीतटं शतखण्डी-कुर्वन्ति। ते च सरितां प्रवाहा इव स्वयंविहितमार्गाश्चक्रव्यूहं प्रविविशुः, तदनु अन्येऽपि सैनिकाश्चक्र-व्यूहं प्रविविशुः। अथ दुर्योधनो, रुधिरराजतनयो, रुक्मी चेति त्रयो युयुत्सवस्तान् सैन्यान् संस्थापयन्त

---

१ सगमे। २ महानेमि०। ३ शत्रवः।

उत्थिताः। महारथनृपैः परिवृतो दुर्योधनोऽर्जुनं, रुधिरसुतोऽनाधृष्टिं, रुक्मी च महानेमिमरुधत्। तेषां षण्णामपि अन्योन्यं द्वन्द्वयुद्धमभूत्, अन्येषां च सहस्रशस्तद्दृष्टाणां महारथानां सुभटानां च तथैव युद्धमभवत्। तत्र वीरंमन्यं[1] दुर्मदं विब्रुवाणं रुक्मिणम् असर्षणो[2] महानेमिर्निःशस्त्रं रथरहितं च चक्रे, तदा च वध्यकोटिमुपेयुषो रुक्मिणो रक्षार्थं शक्रन्तपादयः सप्त पार्थिवा अन्तरा निपेतुः, तेषां सप्तानामपि समकालं वर्षतो बाणान् धनूंषि च महानेमिर्बाणैः कमलनालवत् चिच्छेद। शक्रन्तपनृपश्चिरं युद्ध्वा रिपवे शक्तिं चिक्षेप, तां जाज्वल्यमानां दृष्ट्वा सर्वेऽपि यदवश्चुक्षुभुः। तस्याः शक्तेर्मुखोद्भूता विविधशस्त्रधारिणोऽतिक्रूरकर्माणः सहस्रशः किङ्करा अन्तरा निपेतुः। अथ मातलिर्भगवन्तमरिष्टनेमिनमुवाच—'भगवन्! अयं नृप इमां शक्तिं तपसा बलीन्द्राद् प्राप, यथा पुरा रावणो धरणेन्द्राद् अमोघविजयामलभत, तद् इयं वज्रेण भेदनीया'। इत्युक्त्वा श्रीनेमिशासनाद् महानेमिबाणे स[3] शीघ्रं वज्रं समाक्रमयत्। महानेमिस्तं वज्रबाणं विमुच्य त्वरितं तां शक्तिं भुव्यपातयत्, तं च नृपं रथरहितं निःशस्त्रं च चकार। अन्येषां च षण्णां राज्ञां चापानच्छिदत्। तदा रथान्तरचटितो रुक्मी पुनरप्यढौकत, शक्रन्तपाद्यो रुक्मी च संभूय अष्टाऽपि ते राजानो वीरमानिनो महानेमिना समं युयुधिरे। रुक्मी यद्यद् धनुरादद्दे तत्तद् महानेमिरच्छिदत्, एवं तस्य रुक्मणो निरन्तरं विंशतिर्धनूंषि छिन्नानि। ततः स सहसा महानेमये कौवेरी-

१ आत्मानं वीरं मन्यते इति वीरंमन्यस्तम्। २ क्रोधनः। ३ मातलिः।

नाम्नीं गदां चिक्षेप, तां च महानेमिकुमार आग्नेयेन वाणेन भस्मीचक्रे। तदाऽन्याक्षेपासहो रुक्मी मेघवत् शरलक्षाणि वर्षन्तं वैरोचनशरं महानेमये प्रचिक्षेप, तमपि महानेमिर्माहेन्द्रवाणेन त्वरितमेव न्यवारयत्, रुक्मिणं चाऽन्येन शरेण ललाटे ताडयामास, तेन घातेन दुःखितं तं वेणुदारी जहार। ततस्ते सप्तापि नृपा महानेमिनः शीघ्रं दुद्रुवुः। समुद्रविजयराजो द्रुमनृपं, स्तिमितो भद्रराजम्, अक्षोभ्यश्च वसुसेनमजेपीत्। सागरः पुरिमित्रमवधीत्। संग्रामे हिमवत् स्थिरो हिमवान् धृष्टद्युम्नमभाङ्क्षीत्। धरणोऽष्टकनृपम् अभिचन्द्रश्च उत्कटं शतधन्वानं निपातयामास, पूरणो द्रुपदं, सुनेमिः कुन्तिभोजं, सत्यनेमिर्महापद्मं, दृढनेमिश्च श्रीदेवमभाङ्क्षीत्। एवं च तैर्यदुवीरैर्भग्नाः परसैन्यनृपाः सेनानीत्वे स्थापितं हिरण्यनाभनृपं शरणं ययुः।

इतश्च सुभटौ भीमार्जुनौ महौजसो वलभद्रपुत्राश्च निखिलान् कौरवान् व्यद्रावयन्, यथा सूर्यभयैस्तमांसि दिशो दिशं यान्ति। पतद्भिरर्जुनवाणैर्दिशामन्धकारो जज्ञे, गाण्डीवनाम्नो धनुषो निर्घोषैश्च विश्वमपि विधुरमभूत्। तस्य वाणान् वेगाद् आकर्षतः संदधतो मुञ्चतश्च गगनस्थितैरनिमेषैः सुरैरप्यन्तरं नाऽलक्ष्यत। अथ दुर्योधनः कासिस्त्रिगर्तः सवलः कपोतो रोमराजश्चित्रसेनो जयद्रथः सौवीरो जयसेनः शूरसेनः सोमकश्चैते सर्वेऽपि मिलित्वा अपास्तक्षत्रियधर्मा अर्जुनमयोधयन्। सहदेवः शकुनिना समं, भीमो दुःशासनेन समं, नकुल उलूकेन समं, युधिष्ठिरश्च शल्येन समं युयुधे। पाण्डवपुत्रा द्रौपदीकुक्षिस-

म्भवाः ससैनिका दुर्मर्षणादिभिः षड्भिः समं, रामसुताश्च शेषै राजभिः सममतीव युयुधिरे । दुर्योधनादिनृपाणां समकालं वर्षतां शरान् किरीटी[1] शरैः कृत्वा कमलनाललीलया चिच्छेद । सोऽर्जुनः शरैर्दुर्योधनस्य सारथिमवधीत्, रथ्यान् रथं चाऽभाङ्क्षीत्, तस्य च सन्नाहं[2] पृथिव्यामपातयत् । ततोऽङ्गशेषः स विलक्षः पदातिमात्रवद् वेगात् शकुनिनृपरथे शकुनिवदुत्पत्य[3] ययौ। अर्जुनः कासिप्रमुखान् दशाऽपि वाणवृष्ट्या उपदुद्राव, यथा जलधरः करकवृष्ट्या गजानुपद्रवति । इतश्च शल्यराजः शरेण युधिष्ठिररथध्वजं चकर्त, तदा युधिष्ठिरोऽपि तस्य सशरं धनुरच्छिदत् । ततः स शल्योऽन्यधनुरारोप्य महावाणैर्युधिष्ठिरं तिरयामास, यथा मेघर्तुर्मेघैर्दिनकरमाच्छादयति । तदा युधिष्ठिरः शल्याय दुःसहाम् अकालोद्भवविद्युतमिव विश्वविक्षोभकरीं शक्तिं मुमोच, सा च परवाणैरस्खलिता वेगाद् निपत्य अशनिर्गोधामिव शल्यमवधीत्, तदा च वहवो नृपाः प्रणेशुः । भीमोऽपि दुर्योधनभ्रातरं दुःशासनं द्यूतकपटजयं स्मारयन् लीलया जघान । मायायुद्धैस्तथा शस्त्रयुद्धैः शकुनिनाऽतियोधितः सहदेवोऽपि जीविताऽन्तकरं वाणं चिक्षेप, शकुनौ तस्य असंप्राप्तमेव वाणं दुर्योधनः क्षत्रव्रतं विमुच्य निशितवाणेन चिच्छेद, तदा च तं मद्रीसुतं[4] उच्चैरुवाच–'रे दुर्योधन ! द्यूते इव रणेऽपि तव प्रकटं छलम् !, परम् असमर्थानां हीदं वलम् !; अथ युवां शृगालवद् महामायिनौ साधु प्राप्तौ, अहं सममेव वां हनिष्यामि, युवयोर्वियोगो माऽस्तु' ।

१ अर्जुनः । २ कवचम् । ३ पक्षिवत् । ४ सहदेवः ।

इत्युक्त्वा सहदेवस्तीक्ष्णैर्बाणैर्दुर्योधनं तिरोदधे, यथा शरत्कालः कीरैर्वनमाच्छादयति । दुर्योधनोऽपि शरैर्माद्रेयमुपदुद्राव, तस्य च संग्राममहावृक्षस्य मूलं धनुर्दण्डं चिच्छेद। ततो दुर्योधनः सहदेवविनाशाय मन्त्रसत्कृतं कीनाशमुखसमानमेकं बाणं मुमोच, तदाऽर्जुनो गरुडबाणेन तं बाणमन्तराऽपि दुर्योधनजयाशया समं शीघ्रं निवारयामास । शकुनिरप्येतीव धनुरास्फाल्य बाणवृष्टिभिर्मेघो गिरिमिव सहदेवं विष्वग् व्यानशे, तदा महाभुजः सहदेवः शकुनेः ससारथीन् रथ्यान् रथं च ममन्थ, तन्मस्तकं च तरोः फलमिव चकर्त । नकुलोऽपि शस्त्रैरंशुभिर्दिवाकर इव उलूकं हेलया विरथीकृत्य त्वरितं विद्रावयामास, तदा स दुर्मर्षणरथमगमत्; ते च दुर्मर्षणप्रमुखाः षडपि नृपाः ससैनिकैर्द्रौपदीपुत्रैर्द्रुतं विद्राविता दुर्योधनमाश्रयामासुः । ततो दुर्योधननृपः कासिप्रमुखैर्नृपैः संभूय अर्जुनेन सह युयुधे, सुरैः परिवृतः शक्र इव रामपुत्रैः परिवृतोऽर्जुनोऽपि विविधैर्बाणैः शत्रुसेनां विदारयामास। ततो निखिलान् वैरिणोऽन्धीकुर्वन् अर्जुनो दुर्योधनस्य पृथग्भूतान् प्राणानिव जयद्रथं शरैरवधीत् । अथ आकर्णमाकृष्टकोदण्डो वीरप्रष्ठः कर्णोऽधरोष्ठं दशन् अर्जुनं हन्तुकामोऽभ्यधावत । तौ वीरौ कर्ण-पार्थौ सुरैरपि कुतूहलात् प्रेक्ष्यमाणौ पाशकैरिव बाणैर्विचिक्रीडतुः । अनेकशो भग्नस्यन्दनः प्रक्षीणोपराऽस्त्रः खड्गमात्रधारी वीरकुञ्जरः कर्णः कथञ्चिदर्जुनेन बाणैर्निपातितः, तदा भीमः सिंहनादं चकार, अर्जुनः शङ्खं दध्मौ, सर्वेऽपि च पार्थसैनिका जितकासिनो जगर्जुः । अथ दुर्योधनः क्रोधाध्मातो भीमसेनहननाय एकाग्रमना महागजसेनया सममधाविष्ट, तदा

भीमस्तु रथं रथेन तुरङ्गं तुरङ्गेण गजं च गजेन आस्फाल्यास्फाल्य दुर्योधनसैन्यं निःशेषमकरोत्; एवं तैः सार्द्धं युध्यमानस्य भीमसेनस्य युद्धश्रद्धाऽपि नाऽपूर्यत! । अथ वीरंमन्यो राजा दुर्योधनः स्वयं स्वान् सुभटान् आश्वासयन् कुञ्जराय कुञ्जर इव भीमसेनाय ढुढौके । तौ मेघाविव गर्जन्तौ केसरिणाविव च क्रुद्धौ द्वावपि वीरौ विविधायुधैश्चिरं युयुधाते । ततो द्यूतवैरं स्मरन् भीमसेनो महतीं गदामुद्यम्य रथ-रथ्य-सारथिसहितं दुर्योधनं यममन्दिरेऽनयत् । तस्मिन् हते तस्य निर्नायकाः सैनिकाः सेनान्यं हिरण्यनाभं शरणं प्रतिपेदिरे । वाम-दक्षिणपार्श्वस्थिताः पाण्डवाः सर्वेऽपि यदवश्च अनाधृष्टिं सेनान्यं परिवव्रिरे ।

अथ पोताग्रं निर्यामक[1] इव सेनाया मुखमधिश्रितो हिरण्यनाभः क्रुद्धो यदून् विब्रुवन् दधावे । तदा राजाऽभिचन्द्रस्तमभाषत—'रे नृपाधम! त्वं विटवत् किं विब्रवीषि? क्षत्रिया हि न वचनशूराः किन्तु पराक्रमशूराः' । अथ हिरण्यनाभोऽभिचन्द्राय तीक्ष्णान् शरान् चिक्षेप, तान् सर्वान् पार्थो[2]ऽन्तरा मेघधारा[3] अनिल इव चिच्छेद । ततः सोऽर्जुनायापि दुर्वारां बाणधोरणीं मुमोच, तदाऽन्तरा आगत्य भीमस्तं गदया रथात् कपित्थमिवाऽपातयत्! । स लज्जितः सन् पुनरपि रथमारुह्य कोपेन दष्टाधरः समस्तेऽपि यदुकटके तीक्ष्णान्बाणान् अखण्डधारं ववर्ष; स सादी[4] न, स निषादी[5] वा न, स रथ्यपि न, स पदातिश्च न, यस्तेन हिरण्यनाभेन तत्र महत्यपि यदुसैन्ये शरैर्न प्रहतः । अथ

१ पोतवाहः । २ अर्जुनः । ३ द्वितीयाबहुवचनम् । ४ अश्वारोहः । ५ हस्त्यारोहः ।

क्रोधाध्मातः समुद्रविजयपुत्रो जयसेन आकृष्टधनुर्दण्डो हिरण्यनाभेन समं योद्धुमढौकिष्ट। 'रे जामेय[1]! मुधा यमवदनं किमायासीः ?' इति चिब्रुवन् हिरण्यनाभो जयसेनस्य सारथिमवधीत्। स जयसेनोऽपि त्वरितं तस्य कवचं चापं ध्वजं च चकर्त, सारथिं च धर्मराजगृहे निनाय। तदा क्रुद्धो हिरण्यनाभो मर्माविद्भिर्दशभिः कठिनैर्बाणैः प्रहृत्य जयसेनं जघान। अथ खड्गखेटकधारी महासुभटो जयसेनभ्राता महीजयो रथादुत्तीर्य हिरण्यनाभं प्रत्यधाविष्ट, तदा हिरण्यनाभो दूरादपि क्षुरप्रबाणेन तन्मस्तकमहरत्। अथ भ्रातृद्वयवधक्रुद्धोऽनाधृष्टिर्युयुधे, अन्येऽपि च जरासन्धनृपा भीमार्जुनादिभिर्यदुभिश्च सह द्वन्द्वयुद्धेन पृथक्पृथग् अयुध्यन्त। ज्योतिष्काणां पतिरिव प्राग्ज्योतिष्कनृपो[2] भगदत्तो गजस्थितो महानेमिमभ्यधावत। सोऽवोचत्–'नाऽहं ते भ्रातृश्यालको[3] रुक्मी अश्मको वाऽस्मि, किन्त्वहं नारकिवैरिकृतान्तोऽस्मि, तद् भो! अपेहि' इत्युक्त्वा स वेगेन हस्तिनं प्रेरयामास। सारथिर्महानेमिरथं मण्डलेनाऽभ्रमयत्, ततो महानेमिस्तत्कुञ्जरं तलपादेषु बाणैरहन्, तदा जर्जरचरणः स गजो भगदत्तसहितः पृथ्वीतले पपात। 'नाऽसि रुक्मी !' इति हसित्वा महाबलोऽपि महानेमिः प्रकृत्या करुणापरस्तं धनुष्कोटिभागेन संस्पृशन् मुमोच। इतश्च भूरिश्रवाः सात्यकिश्च तौ द्वावपि जरासन्ध-वासुदेवजयकाङ्क्षिणौ युयुधाते। सुरद्विपौ दन्तैरिव दिव्यैरायसैरस्त्रैश्च युध्यमानौ तौ जगत्रितयभयङ्करौ समभूताम्। क्षीणपानीयौ मेघाविव तौ चिरात्

---

१ भगिनीपुत्र ! । २ प्राग्ज्योतिष्कदेशस्य नृपः । ३ तव भ्रातुः कृष्णस्य श्यालकः ।

क्षीणशस्त्रौ मुष्टामुष्टि विधायिनौ भुजदण्डाभ्यामयुध्येताम् । तौ वीरौ गाढैः पतनोत्पतनैर्भूमिमकम्पयताम्, उभावपि च भुजास्फोटशब्दैर्दशाऽपि दिश आस्फोटयन्ताविव युयुधाते । अथ सात्यकिर्भूरिश्रवसं योक्त्रबन्धेन बद्ध्वा गलं पृष्ठे वालयित्वा जानुना च हृदयमाक्रम्याऽवधीत् । इतो हिरण्यनाभनृपस्य चापं वीरोऽनाधृष्टिरच्छिदत्, सोऽप्यनाधृष्टये परघातनं परिघममुञ्चत्, उद्यद्भिः स्फुलिङ्गज्वालाजालैरुद्योतितनिखिलदिगन्तरम् आपतन्तं तं परिघं तीक्ष्णबाणैरनाधृष्टिस्त्वरितं खण्डयामास । तदा तस्याऽनाधृष्टेरन्तकरणस्पृहो हिरण्यनाभो रथादुत्तीर्य चर्म-करवालपाणिपद्मः पद्भ्यामभ्यधाविष्ट, अनाधृष्टिरपि द्रुतं रथादुत्तीर्य खड्ग-खेटकव्यग्रकरकमलो विचित्रचारीभिर्विचरन् सुचिरं तं हिरण्यनाभमखेदयत् । लघुहस्तोऽनाधृष्टिश्छलं प्राप्य करवालेन हिरण्यनाभवपुर्ब्रह्मसूत्रेण दारुवद् अच्छिदत् । ततो जरासन्धस्य नृपा जरासन्धशरणमुपेयुः, तदानीं सूर्योऽस्ताचलमगात् । सोऽनाधृष्टिरपि यदु-पाण्डवैः पूजितः कृष्णसमीपे ययौ, कृष्णाज्ञया च समस्ता अपि यादवादयः स्वं स्वं शिबिरमभ्ययुः ।

अथ जरासन्धराजराजस्तदैव हि मन्त्रयित्वा महाबलवन्तं शिशुपालभूपालं सेनापट्टेऽभ्यषिञ्चत् । यदवोऽपि गरुडध्वजशासनतो गरुडव्यूहं विधाय तथैव सङ्ग्रामभूम्यां प्रातःकाले आतस्थुः । तथैव च स शिशुपालनृपश्चक्रव्यूहं निर्मितवान्, ततो जरासन्धः सङ्ग्रामभूमिमाशिश्राय । अथ जरासन्धनृपेण पृष्टो हंसकमन्त्री परसैनिकानङ्गुल्या दर्शयन् नामग्राहमित्युच्चैरभाषत—"अयं कृष्णाश्वेन रथेन गजध्वजोऽनाधृष्टिः,

एष नीलाश्वेन रथेन युधिष्ठिरः, अयं श्वेताश्वरथेन कपिध्वजोऽर्जुनः, अयं नीलोत्पलदलकान्तितुरङ्गमेण रथेन भीमः, अयं स्वर्णवर्णाश्वरथेन हरिध्वजो राजा समुद्रविजयः, अयं तु शुकवर्णतुरङ्गमरथेन वृषध्वजोऽरिष्टनेमिः, अयं शबलाश्वरथेन कदलीध्वजोऽक्रूरः, एष तित्तिरकल्मापाश्वरथेन सात्यकिः, अयं कुमुदद्युतितुरङ्गमरथेन महानेमिकुमारः, अयं पुनरुग्रसेनराजः शुकतुण्डप्रभहयरथेन ज्ञेयः, जरत्कुमारोऽयं कनकपृष्ठाश्वो मृगध्वजः प्रेक्ष्यताम्, अयं काम्बोजैर्वाजिभिः श्लक्ष्णरोमपुत्रः सिंहलाभिधानः, अयं तु कपिलरक्ततुरङ्गमो जलकपिध्वजः सिन्धुदेशमण्डनः श्रीवीतभयपत्तनेश्वरो मेरुनृपः, एष च पद्मरथपुरो राजा पद्मकान्तितुरङ्गमैः पद्मरथः, अयं पारापतप्रभाश्वः कमलध्वजः सारणो विलोक्यताम्, पञ्चतिलकयुक्तैस्तुरङ्गमैरेष कुम्भध्वजो विदूरथो रामभ्राता दृश्यताम्, सैन्यान्तरयम् अतीव धवलैस्तुरङ्गैर्गरुडध्वजस्तव शत्रुः कृष्णोऽन्तर्गगनबलाकाभिः प्रावृषेण्यो जलधर इव द्रष्टव्यः, अस्य कृष्णस्य दक्षिणपार्श्वस्थितो रिष्टरत्नवर्णैस्तुरङ्गैस्तालध्वजोऽयं जङ्गमः कैलास इव बलभद्रो विलोकनीयः । अन्येऽपि विविधवाजि-रथ-ध्वजा बहवो महारथाः पराक्रमशालिनो यदवः सन्ति, ते च सर्वेऽपि साम्प्रतं कथयितुं न हि शक्याः" ।

तच्छ्रुत्वा जरासन्धराजः क्रोधाद् धनुरास्फालयन् राम-केशवौ प्रति रथं त्वरितमेव प्रेरयामास । ततश्च युवराजो जरासन्धपुत्रो यवनकुमारः कोपेन वसुदेवपुत्रान् अक्रूरादीन् हन्तुमधावत । अष्टापदस्य सिंहैः सममिव तैः सह महाभुजस्य यवनस्य संहार इव भीषणो महासङ्ग्रामो बभूव । अथाऽद्वैतबलो रामलघु-

भ्राता सारणो विविधैः शस्त्रैर्वर्षाकालस्य मेघ इव वर्षन् तं यवनं रुरोध, तदा स मलयपर्वतवत्तुङ्गेन मलयाभिधेन गजेन सारणरथं रथ्यैः सार्द्धमभञ्जयत् । अथ तस्मिन् गजे परिणते स सारणः खड्गेन यवनमस्तकं वातान्दोलिततरोः फलमिव तत्कालं चिच्छेद, तस्य चोत्तिष्ठतो हस्तिनः शुण्डादण्ड-दन्तं चकर्त, तदा च कृष्णसैन्यं वर्षाकाले मयूरकुलमिव हर्षेण नर्तयामास । अथ धनुर्धरो जरासन्धनृपः पुत्रवधं दृष्ट्वा कोपाक्रान्तो मृगारिर्मृगानिव यदून् हन्तुं प्रववृते । आनन्द-शत्रुदमन-नन्दन-श्रीध्वज-ध्रुव-देवानन्द-पीठ-हरिषेण-नरदेव-चारुदत्ता एते बलभद्रस्य पुत्रा रणमुखे प्राप्ता यज्ञेऽजा इव क्रुद्धेन जरासन्धेन जघ्निरे । कुमारवधदर्शनतः केशवसेना पलायिष्ट, तां च व्याघ्रो गोत्रा[1]मिव निघ्नन् मगधाधिपो[2]ऽनुययौ । अथ सेनानीः शिशुपालो हसन् केशवमुवाच—'हे कृष्ण ! एतद् गोकुलं न हि, अयं नूनं क्षत्रियाणां सङ्ग्रामोऽस्ति !' । तदा कृष्णोऽपि बभाषे—'हे राजन् ! गच्छ, यतः पश्चादपि त्वया गम्यम् । माद्रीमातः[3] ! रुक्मिराजस्य समरे त्वं कियच्चिरमस्थास्तत् स्मर !' । तया मर्माविधा हरिगिरा बाणेनेव विद्धः स महामानी शिशुपालः क्रुद्धो धनुरास्फाल्य केशवस्य हननाय शितान्[4] नाराचानमुञ्चत्, तदा केशवो बाणैस्तस्य कार्मुकं कवचं रथं चाऽच्छिदत् । ततश्च स खड्गमाकृष्य उद्धूमवह्निरिवाऽधावत, तस्य च सम्मुखं विब्रुवाणस्य दुर्मतेः शिशुपालस्य खड्गं मुकुटं मस्तकं चाऽनुक्रमेण हरिश्चिच्छेद । तस्य चेदिराजस्य वधेन क्रुद्धो जरासन्धो यम इव

१ गोसमूहम् । २ जरासन्धः । ३ माद्री माता यस्य सः, तत्सम्बोधनम्—शिशुपाल ! । ४ तीक्ष्णान् ।

भीषणः पुत्रै राजभिश्च सममभ्यधावत, यदूँश्चैवमूचे—'रे रे ! मुधैव मा म्रियध्वम्, तौ दुर्मती गोपालौ अर्पयत, अधुनाऽपि किञ्चन न क्षतम् !' । तद्गिरा सर्वेऽपि यदवो दण्डाघृष्टाः सर्पा इव कुपिता भ्रकुटिभीषणा बभूवुः, पूत्कारं च कुर्वन्तो विविधशस्त्रधारिणोऽभ्यधावन्त । तत एकोऽपि अनेकीभूयेव जरासन्धः समन्ताद् घोरैः शरैर्यदुसैन्यान् मृगान् व्याध इव विव्याध । योद्धारः पदातयो रथिनः सादिनो निषादिनश्च योधिनो जरासन्धस्याऽग्रतः स्थातुं नाऽशकन् । वातकम्पितं तूलमिव अशेषं यदुसैन्यं जरासन्धबाणैः पीडितं दिशो दिशि विदुद्राव । तत्र सङ्ग्रामे जरासन्धः पन्नगवद् यदूनां भीषणो बभूव, यदवस्तु परितो भेकत्वं ययुः । अथवा यदुसैन्ये महासरसि महिषवज्जरासन्धः सुभटजलचरजीवान् मर्दयामास । अष्टाविंशतिर्जरासन्धसुता दृष्टिविषपन्नगा इव शस्त्रविषं विक्षिपन्तो बलभद्रमुपदुद्रुवुः । अन्येऽप्येकोनसप्ततिर्जरासन्धसुताः केशवं जिघांसन्तो दानवा देवमिव रुरुधुः । तैः समं राम-कृष्णयोर्महासङ्ग्रामः प्रववृते, परस्परशस्त्रसंभूतस्फुलिङ्गकणवर्षाकालः समागादिति तत्र सर्वैरपि व्यतर्क्यत । अथ रामस्तान् अष्टाविंशतिमपि रामसुतान् हलेनाकृष्य मुशलेन तण्डुलानिवाऽपिषत् । ततश्च 'अद्याऽप्युपेक्षितोऽयं गोपालो मारयति !' इति जल्पन् जरासन्धो वज्रसमानया गदया रामं न्यहन्, तेन गदाघातेन तु रामो रुधिरं ववाम, तदा च समस्तेऽपि यदुकटके महान् हाहारवोऽभवत् । पुनरपि रामे प्रहारं कर्तुमानसं जरासन्धं श्वेतवाहनोऽर्जुनोऽन्तरा आपत्याऽयोधयत् । अथ रामस्य वैधुर्यं प्रेक्ष्य क्रुद्धो धुताधरः केशवः

पुरःस्थितान् एकोनसप्ततिमपि जरासन्धपुत्रानवधीत् । 'मरिष्यत्येवाऽयं रामः, किमर्जुनेन हतेन ?, अधुना तु कृष्णं मारयामि' इति विचिन्त्य मगधाधिपः कृष्णमभ्यधाविष्ट । तदा च 'कृष्णोऽपि हत एव' इति सर्वत्राऽपि ध्वनिरभूत् । अत्रान्तरे श्रीनेमिं मातलिरिति बभाषे—"भगवन् ! अष्टापदस्य पुरतः कलभ इव जगत्त्रितयनाथस्य भवतः पुरोऽयं जरासन्धः कियन्मात्रः ? । जगदीश ! अद्याऽयं त्वया ह्युपेक्षितः सन् अयादवं करोति, तद् मनागपि निजबललीलायितं दर्शय । प्रभो ! यद्यपि त्वमाजन्मतः सावद्यकर्मतो विमुखः, तथापि वैरिणाऽऽक्रान्तं स्वकुलं नोपेक्षणीयम्" । तेनेत्युक्तो विभुः कोपं विना पौरन्दरं शङ्खं करेण गृहीत्वा अतिमेघशब्दं दध्मौ । आकाश-पृथिव्युदरम्भरिभिस्तद्ध्वनिभिर्जरासन्धसैनिका अतीव चुक्षुभुः, यदुसैन्यं च पुनः सङ्ग्रामसमर्थं स्वस्थीबभूव । ततः श्रीनेमेराज्ञया मातली रथं सङ्ग्रामे समुद्रावर्तसन्निभं भ्रमयामास; स्वामी च आकृष्टेन्द्रचापो नवमेघ इव अतिदुःसहाभिः शरधाराभिर्ववर्ष, तद्भयेन सर्वेऽपि परसैन्यसुभटाः परितस्तत्रसुः । प्रभुः केषाञ्चिद् ध्वजांश्चिच्छेद, केषांचिद् धनूंषि, केषाञ्चिद् रथानभाङ्क्षीत्, केषांचिच्च मुकुटान् पातयामास । प्रहारवार्ता तु दूरे, परं कल्पान्तकालसूर्यमिव स्वामिनं परसैन्यसुभटाः सम्मुखं विलोकितुमपि नो समर्थाः । एकोऽपि स्वामी मुकुटबद्धानां राज्ञां लक्षमभाङ्क्षीत्, यत उद्भ्रान्तस्य महासमुद्रस्य पुरः किं पर्वता अपि तिष्ठन्ति ? । 'प्रतिवासुदेवो वासुदेवेनैव वध्य' इति मर्यादामनुपालयँश्च त्रैलोक्यनाथोऽपि श्रीनेमिप्रभुर्जरासन्धं नो जघान । प्रभुः सर्वाण्यपि परसैन्यानि रुद्ध्वा रथं भ्रमयन्नस्थात्,

यदुसैनिकाश्च पुनरपि लब्धोत्साहा युयुधिरे। अत्रान्तरे सिंहैर्मृगा इव पाण्डवैरवशिष्टाः कौरवाः स्वैराज्ञिरे। रामोऽपि स्वस्थीभूत उदस्ताऽयोग्र-हलशस्त्रोऽनेकशः शत्रुसैनिकान् योधयित्वाऽवधीत्। इतश्च जरासन्धो यादवान् दुर्जयान् ज्ञात्वा क्रोधेन समग्रेऽपि यदुसैन्ये स्वकीयां जराविद्यां मुमोच, तदा तत्कालं यदुकटकं तया जराविद्यया निर्बलं निश्चिन्तसंपतितभूमितलशस्त्रसमूहं च समभूत्। ततश्चिन्तातुरः केशवो निजपितृव्यनन्दनं श्रीमदरिष्टनेमिनं समर्थं विज्ञाय तस्याग्रे सर्वं सैन्योदन्तं कथयामास। तन्निशम्य प्रभुः श्रीमदरिष्टनेमिर्भ्रातृस्नेहेन स्वस्नपनसलिलमाहात्म्यवानपि महापुरुषलक्षणत्वाद् अन्यं कृष्णस्य जरानिराकरणप्रतिकारं कथयितुं लग्नः—"हे भ्रातः! पातालपृथिवीनायकं धरणनागाधिराजमुद्दिश्य अष्टमतपः कुरु, तद्देवगृहे भाविनस्त्रयोविंशतीर्थङ्करस्य श्रीपार्श्वनाथस्य बिम्बं सुरासुरविद्याधरनरेन्द्रैः पूर्वं पूजितमस्ति, तत्स्नपनजलेन सर्वेषां यदूनां जरा यास्यति, नाऽत्र सन्देहः। ततस्त्वं तद्बिम्बं तत्पार्श्वे मार्गय, तव प्रबलपुण्यप्राग्भारेण सोऽर्पयिष्यति"। इति चिन्तानिराकरणं श्रीनेमिवचनं श्रुत्वा केशवस्तथैव यथाविधि अष्टमतपो विधाय धरणेन्द्रं सन्तुष्टीचक्रे। ततस्तेन दत्तं श्रीपार्श्वनाथबिम्बं गृहीत्वा तत्स्नपनजलेन समस्तेऽपि स्वकीयसैन्ये केशवश्छटात्रयं दत्तवान्। तन्महिम्ना सर्वं सैन्यं जरारहितं जातं, प्रागिव च तथैव वैरि-

---

१ उदस्तम्—उत्क्षिप्तम् अयोग्रं—मुशलं हलशस्त्रं च येन सः।

सैन्येन समं सङ्ग्रामं कर्तुं लग्नम् । अयं जरामोचनाधिकारः श्रीशङ्खेश्वरपार्श्वनाथसत्कतीर्थकल्प-श्राद्धविधिप्रभृतिग्रन्थेषु विद्यते, तेन नाऽत्र केनचित् संशयः कार्यः ।

अथ विगतजराविद्याबलं यदुसैन्यं स्वसैन्यं मारयद् दृष्ट्वा मनसि विलक्षीभूतोऽपि मानधनो जरासन्धो गोवर्धनायेदं स्वाऽभिमानगर्भितं वचनमवदत्–'भो भो गोपाल ! इयच्चिरं त्वं शृगालवद् माययैव जीवितोऽसि, माययैव मम जामाता कंसो हतः, कालोऽपि माययैव मारितः, अशिक्षिताऽस्त्रेण त्वया सङ्ग्राम एव न हि क्रियते; परमद्य तव प्राणैः सार्द्धमेव मायापर्यन्तं नयामि, स्वपुत्र्या जीवयशसश्च प्रतिज्ञां पूरयामि' । तदा हसित्वा हरिरूचे–"हे राजन् ! इत्थं त्वं सत्यं ब्रवीषि, अहमीदृक्षोऽस्मि, परं स्वस्य शिक्षितास्त्रता मम दर्श्यताम् !। 'अहमेक एव' इति नाऽहं त्वद्वत् स्वश्लाघनः, परमिदमेकं किञ्चिद् ब्रवीमि यत्–त्वत्पुत्र्या अचिरेणैव अग्निप्रवेशात् प्रतिज्ञा पूरिष्यते, नान्यथा; इदं मम वचः सत्यं कृत्वैव माननीयम्" । इति केशववचनेन क्रुद्धो जरासन्धस्तीक्ष्णान् बाणानमुञ्चत्, सर्वान् तत्कालं हरिश्चिच्छेद । उभावपि तौ जरासन्ध-केशवौ ससंरम्भौ अष्टापदाविवाऽयुध्येताम्, धनुर्दण्डशब्दैश्च सर्वा दिशो ध्वनयन्तौ महासङ्ग्रामं चक्रतुः । तयो रणसंमर्दाद् जलनिधयश्चुक्षुभुः, पर्वताश्चकम्पिरे, गगने च खेचराः संत्रेसुः । पर्वतयोरिव तद्रथयोर्गतागतमसहिष्णुः पृथिव्यपि क्षणात् सर्वसहत्वं मुमोच । मगधेश्वरस्य दैवतानि अस्त्राणि गोविन्दो दैवतैरस्त्रैरायसानि च आयसैर्लीलयैव प्रत्यहन् । अथ सर्वाऽस्त्रसमूहे विफले जातेऽमर्प-

पूरितो विलक्षीभूतचेता जरासन्धोऽन्यास्त्रैर्दुर्वारम् अमोघाऽस्त्रं स्वकीयं चक्ररत्नं सस्मार, तदैव चक्ररत्नमागतम् । ततो जयतृष्णावान् कोपान्धो मगधाधिपः करेण चक्रं गगने भ्रमयित्वा कृष्णायाऽमुचत् । तत्रोच्चैश्चक्रे आपतति सति गगने खेचरा अप्यकम्पन्त, लब्धदैन्यावस्थानि च कृष्णसैन्यानि सर्वतश्चुक्षुभुः । तच्चक्रं स्खलयितुं कृष्णो रामः पञ्च पाण्डवा अन्येऽपि च महारथा निजनिजान्यस्त्राणि प्रचिक्षिपुः । वृक्षैरुत्पूरनदीप्रवाह इव तैः सर्वैरस्खलितं तच्चक्रमागत्य तुम्बेन कृष्णं हृदयेऽताडयत् । भेदनीत्या[1] भेदितमिव स्वपार्श्वे स्थितं तच्चक्रम् उद्यतं स्वप्रतापमिव केशवः करेणाऽग्रहीत् । तदा 'अयं नवमो वासुदेवो भरतक्षेत्रे उत्पन्नः' इति घोषिणः सुरा आकाशाद् गन्धोदक-पुष्पवृष्टिममुञ्चन्, जयजयारवं चोच्चैरवदन् । अथ कृष्णः संजातकारुण्यो मगधाधिपमूचे–"एषाऽपि किं मम माया ?, अधुनाऽपि जानीहि, अद्यापि स्वगृहे याहि, ममाज्ञामङ्गीकुरु, पुनः स्वसम्पदाऽतीव एधस्व, दुःखफलप्रदं मानं मुञ्च, अद्यापि जरन्नपि जीव, मा म्रियस्व" । तदा स मानी जजल्प–'एतच्चक्रं मयैव चिरकालं लालितं मम उल्मुकप्रायम्[2], अथवा कुम्भकारचक्रसमानं, त्वं यदि मुञ्चसि तद् मुञ्च' । इति मगधेश्वरवचनेन क्रुद्धः केशवस्तच्चक्रं जरासन्धाय मुमोच, अहो ! एतद्धि सत्यं यत् परेषामायुधानि पुण्यवतां स्वकीयानि स्युः ।

---

१ सामाद्युपायेषु तृतीयोपायो भेदनीतिः । २ अलातसदृशम्–अङ्गारप्रायम् ।

शीर्षं जरासन्धधराधवस्य, तेनाऽरिणा छिन्नमधः पपात ।
तुर्यक्ष्मां[1] सोऽगमदच्युतस्योपरि व्यधुः पुष्पघनं[2] च देवाः ॥ १ ॥

॥ इति पण्डितश्रीकनकविजयगणिचरणपङ्कजभ्रमरसदृश–श्रीगुणविजयगणिविरचिते श्रीमदरिष्टनेमि-
चरिते सुललितगद्यबन्धे अष्टमतपआचरण–धरणेन्द्रध्यानधरण–श्रीपार्श्वनाथबिम्बप्रापण–
तत्स्नपनसलिलच्छटात्रयवितरण–जरानिराकरण–जरासन्धवधतद्गतिकथन–
केशवकुसुमवृष्टिभवनो नाम अष्टमः परिच्छेदः ॥ ८ ॥

## ॥ अथ नवमः परिच्छेदः ॥

अथ श्रीनेमिनाथः कृष्णशत्रुनृपान् रोधाद्[3] अमुञ्चत् । तेऽपि तं नमस्कृत्य विरचिताञ्जलिपुटा एवमवदन्– "हे प्रभो ! तदैव ह्यस्मत्प्रभुर्जरासन्धो वयं च जिता यदैव यदुकुले त्रिजगत्स्वामी त्वमवातारीः[4] । एकोऽपि वासुदेवः प्रतिवासुदेवस्य हन्तैव, न संशयः, तदा किं पुनर्यस्य त्वं सहायो भ्राता चाऽसि ? ।

१ चतुर्थनरके । २ पुष्पवृष्टिम् । ३ निरोधाद्–निग्रहात् । ४ अवतारमग्रहीः ।

प्राग् अस्माभिर्जरासन्धेन चैतन्न ज्ञातं, तद् अकार्यम् अकृष्महि, ईदृशी भवितव्यता केनोल्लङ्घ्यते ? । अथाऽद्य त्वां शरणं प्राप्तानामस्माकं सर्वेषां शिवं भवतु, यतो जगति त्वमेवैकोऽकारणं बान्धवोऽसि । त्वच्छरणे शिवमेवागतमस्ति, अतो भवत्पार्श्वेऽस्माभिः शिवमार्गणं क्रियते"। इत्युक्त्वा स्थितैस्तै राजभिः समं श्रीनेमिर्हरिसमीपेऽगात्। हरिरपि रथादुत्तीर्य स्वामिनं गाढमालिलिङ्ग, नेमिवचनेन तान् सर्वान् पार्थिवान् स्वीचक्रे, तथा च जरासन्धनृपपुत्रं सहदेवं पितृव्यसमुद्रविजयाज्ञया मगधदेशतुर्यांशं दत्त्वा राजगृहे नगरे तत्पितुः पदे आत्मनः कीर्तिस्तम्भमिव गोविन्द आरोपयामास । समुद्रविजयपुत्रं महानेमिं शौर्यपुरे, हिरण्यनाभनन्दनं रुक्मनाभं कोशलानगर्यां, राज्यम् अनाददानस्य उग्रसेनराजस्य पुत्रं धरनामानं मथुरापुर्यां केशवः संस्थापयामास । अथ प्रत्यक्पयोधौ सूर्यमण्डलं ममज्ज, तदा च नेमिनाथेन विसृष्टो मातलिर्देवलोकमगात् । कृष्णः कृष्णाज्ञया चाऽन्येऽपि स्वं स्वं शिबिरमभ्ययुः, समुद्रविजयस्तु वसुदेवागमनोत्सुकोऽस्थात् ।

अथ द्वितीयदिवसे समुद्रविजयसहितं वासुदेवं तिस्रः स्थविराः खेचर्य एयुः, ताश्चेत्यूचुः—"हे प्रभो ! प्रद्युम्न-शाम्बान्वितो वसुदेवः सविद्याधरोऽचिरादयमागच्छति, तस्य चेष्टितं श्रूयताम्—इतः स्थानात् प्रद्युम्न-शाम्ब-खेचरैः सार्द्धं वसुदेवो वैताढ्ये ययौ, तत्र शूर्पक-नीलकण्ठा-ऽङ्गारक-मानसवेगादयः सर्वेऽपि पूर्ववैरिणो मिलित्वा मिलित्वा तमयोधयन् । तद्युद्धान्तर्वर्त्तने दिवसे आसन्नदेवता ऊचुः—'जरासन्धो

मारितः, कृष्णो वासुदेवोऽभूत्' । तन्निशम्य सर्वेऽपि खेचराः सङ्ग्रामं विहाय विद्याधरेशाय मन्दरवेगाय व्यजिज्ञपन् । सोऽपि तच्छ्रुत्वा तानेवं समादिशत्—'भो भो ! यूयं सर्वेऽपि मिलित्वा महाप्राभृतकरा आगच्छत, वसुदेवद्वारा हरिशरणं वयं यास्यामः' । इत्युक्त्वा वसुदेवसमीपे गत्वा स विद्याधरेन्द्रो निज-भगिनीं प्रद्युम्नायाऽदात्, अपरश्च त्रिपथर्षभनृपोऽपि स्वपुत्रीं तस्मै एव ददौ । देवर्षभ—वायुपथौ नृपौ अपि परमानन्देन स्वपुत्र्यौ शाम्बकुमाराय ददतुः । ते सर्वेऽपि विद्याधरेशा वसुदेवेन सममद्याऽऽयान्ति, अग्रतश्चै-तदाख्यातुं वयं प्रेषिताः स्मः" । एवं तासु वृद्धासु ब्रुवाणासु तत्कालं सविद्याधरः प्रद्युम्न—शाम्बसहितः सर्वेषां नयनोत्सवो वसुदेवस्तत्र समागात् । ते सर्वेऽपि खेचराः केशवं स्वर्णै रत्नैर्विविधमुक्ताफलैर्गज-वाजि-पदातिभिश्चाऽऽनर्चुः । अथ जयसेनप्रमुखाणां प्रेतकार्यं केशवोऽकरोत्, जरासन्धप्रमुखाणां च प्रेतकार्यं सहदेवो व्यधात् । पत्युः पितुश्च सकुलस्यापि संहारं वीक्ष्य सा जीवयशा जीवन्ती वह्नौ प्रविवेश, निज-प्रतिज्ञां च पूरयामास । यत्र यदव आनन्दं चुकूर्दिरे तत्र सेनपल्लीग्रामस्थाने जनार्दन आनन्दपुरं चक्रे, तथा च शङ्खपुराभिधं नवीनं नगरं नाऽतिदूरं नाऽत्यासन्नं वासयामास, तत्र च स्वयं कारिते प्रासादे श्रीपार्श्वनाथबिम्बं कृष्णमहाराजः स्थापयामास । ततस्तस्मात् स्थानात् खेचरैर्भूचरैश्च परिवृतो गोवर्धनः षड्भिर्मासैर्भरतार्धं साधयामास, मगधेषु च ययौ । तत्र चैकयोजनपृथुलाम् एकयोजनलम्बां भरतार्धवा-सिनीभिर्देवदेवीभिश्चाऽधिष्ठितां कोटिशिलानाम्नीं महाशिलां कृष्णो वामबाहुना पृथ्वीतश्चतुरङ्गुलमुच्चै-

रुह्ये । तां महाशिलां प्रथमो वासुदेवो भुजाग्रे, द्वितीयो मस्तके, तृतीयः कण्ठे, तुर्यस्तु उरःस्थले, पञ्चमो हृदि, षष्ठः कट्यां, सप्तमो जङ्घयोः, अष्टमो जानुपर्यन्तं, नवमश्च भूमितश्चतुरङ्गुलमुच्चैरुत्पाटयति; यतोऽवसर्पिणीकाले ते क्रमतः पतद्बलाः ।

ततः कृष्णो द्वारकापुरीमगात्, तत्र षोडशसहस्रराजभिस्तथा देवैश्च भक्त्या वासुदेवपदत्वेऽभ्यषेचि । अथ विष्णुः पाण्डवान् कुरुदेशाय, अन्यानपि भूचरान् खेचरांश्च स्वस्वस्थानाय विससर्ज । समुद्रविजयादयो दश दोष्मन्तो दशार्हा, बलदेवादयः पञ्चसङ्ख्या महावीरा, उग्रसेनाद्याः षोडश सहस्रा राजानः, प्रद्युम्नप्रभृतयः सार्धत्रिकोटयः कुमाराः, दुर्दान्ताः शाम्बादयः षष्टिः सहस्राः कुमारा, वीरसेनादयो वीरा एकविंशतिसहस्राणि, महासेनप्रभृतीनां महौजसां महतां महर्द्धिकानां तलवर्गाणां षट्पञ्चाशत् सहस्राणि, अन्येऽपि च इभ्य-श्रेष्ठि-सार्थपतिप्रभृतयः सहस्रशो विरचिताऽञ्जलयः श्रीकृष्णं सिषेविरे । अथ षोडशसहस्रनृपा वासुदेवाय भक्त्या विविधरत्नानि द्वे द्वे च मनोज्ञे कन्ये ढौकयामासुः । ताभ्यो द्वात्रिंशत्सहस्रकन्याभ्यः कृष्णः षोडशसहस्रकन्याः परिणीतवान्, अष्टौ सहस्राणि बलदेवः, अष्टौ सहस्राणि चाऽन्ये कुमाराः पर्यणैषुः । ततः कृष्णो रामः सर्वे कुमाराश्च रम्यरमणीभिः परिवृताः क्रीडोपवन-पर्वतादिषु महानन्देन रेमिरे ।

अथ तान् क्रीडतो दृष्ट्वा राजा समुद्रविजयः शिवादेवी च श्रीनेमिं प्रेमोत्कण्ठया गिराऽभिदधे–'हे

वत्स! त्वां पश्यतामस्माकं सदैव हि नेत्रोत्सवोऽस्ति, परम् अनुरूपकन्यापाणिग्रहणेन तम् अधिकं कुरु'। तदा आजन्मतोऽपि भवोद्विग्नो ज्ञानत्रयधरः प्रभुः श्रीनेमिरूचे—'अहमनुरूपाः कन्याः क्वापि न पश्यामि; एता हि दुःखे पाताय भवन्ति, तेन कारणेनाऽमूभिः स्त्रीभिरस्माकं सृतम्!, यदा ह्यनुरूपास्ताः सम्पत्स्यन्ते तदा तु परिणेष्यामि'। एवं गम्भीरया वाण्या श्रीनेमिः प्रकृत्या सरलौ पितरौ विवाहोपक्रमाग्रहाद् निवारयामास।

इतश्च यशोमत्या जीवोऽपराजिताच्च्युत्वा उग्रसेननृपभार्याया धारिणीदेव्या उदरेऽवातरत्। पूर्णेषु मासेषु पुत्र्या जन्म बभूव, तस्याश्च पिता राजीमतीति नामाऽकरोत्। अद्वैतरूप-लावण्यधारिणी साऽनुक्रमेण ववृधे। अथ द्वारकावासी धनसेनश्रेष्ठी स्वपुत्रीं कमलामेलाम् उग्रसेननृपपुत्राय नभःसेनाभिधानाय ददौ। अन्यदा नारदो भ्रमन् नभःसेनकुमारस्य गृहे समाययौ, परं विवाहव्यग्रमनसा तेन स नाऽर्चितः। ततस्तस्याऽनर्थपातनेच्छया स नारदो रामपुत्रनिषधसुतस्य शाम्बादीनामतिवल्लभस्य सागरचन्द्रस्य सदनेऽगात्। सागरचन्द्रोऽभ्युत्थाय सत्कृत्य च तमपृच्छत्—'हे देवर्षे! त्वया भ्रमता किञ्चिदप्याश्चर्यमदर्शि?, यतस्त्वं हि तदालोकप्रियोऽसि'। सोऽपि जगाद—'जगत्यप्याश्चर्यभूता धनसेनस्य कन्या कमलामेलानाम्नी अत्रैव प्रेक्षिताऽस्ति, सा च नभःसेनायाऽधुनैव दत्ता'। इति कथयित्वा नारद उत्पत्याऽन्यत्राऽगात्। ततः सागरचन्द्रस्तस्यां रक्तोऽभवत्, तामेव मनसि दध्यौ, तस्या एव नाम मुखे मन्त्रवद-

जपत्, पित्तोन्मत्तः कनकमिव च तामेव सर्वतोऽपश्यत्। अथ स नारदः कमलामेलागृहे जगाम। तत्र च तया सत्कृत्याऽऽश्चर्यं पृष्टः सन् स कूटमतिरिति बभाषे—'हे भद्रे! मया द्वे आश्चर्ये दृष्टे, तत्रैकं रूपसम्पदा सागरचन्द्रकुमारः, द्वितीयं पुनः कुरूपेण नभःसेनः!'। तन्निशम्य सा तत्कालं नभःसेनं मुक्त्वा सागरचन्द्रेऽरज्यत। तस्याश्च रागं ज्ञात्वा नारदो गत्वा सागरचन्द्राय कथयामास। तस्या विरहसागरे सागरचन्द्रं पतितं प्रेक्ष्य तन्माता अपरे च कुमारा गाढं दुःखिता बभूवुः। तदा तत्र शाम्बकुमार आययौ, तथावस्थस्य च सागरचन्द्रस्य हास्येन पृष्ठतः कराभ्यां दृशौ पिदधे। सागरः कथयामास—अहो! त्वं किं कमलामेला[1]ऽसि?'। शाम्बोऽपि जगाद—'एषोऽहं कमलामेलोऽस्मि!'। तदा पुनरपि सागरचन्द्रो बभाषे—'तर्हि त्वमेव मम कमलां मेलयिष्यसि, अतोऽन्योपायचिन्तनेन पर्याप्तम्'। तद्वचनम् अप्रतीच्छन्[2]पि शाम्बः सर्वैः कुमारैः प्रबलं मद्यं पाययित्वा मानितः। ततो गतमदावस्थः सोऽचिन्तयत्—'किं मया नन्विदं दुष्करं कार्यं प्रत्यपादि!, परमधुना तु मया तन्निर्वाह्यम्'। ततश्च प्रज्ञप्तिविद्यां स्मृत्वाऽन्यैः कुमारैः सार्धं नभःसेनविवाहदिवसे शाम्बकुमार उद्यानमगात्, तत्र च सुरङ्गया गृहात् कमलामेलामानाय्य तां रक्तां सागरचन्द्रेण समं विधिना छन्नं[3] पर्यणाययत्। इतश्चैनां गृहेऽपश्यन्तस्तस्याः पितृश्वशुरवर्गीया इतस्ततो विलोकयन्तस्तदुद्यानमाययुः, तत्र च कृतविद्याधररूपाणां यदूनां मध्यवर्तिनी

१ कमला मेलयति—सङ्गमयतीति कमलामेलः। २ अस्वीकुर्वन्नपि। ३ गुप्तम्।

कमलामेलां विलोक्य ते सर्वेऽपि विष्णवे व्यजिज्ञपन्। कृष्णो गाढं क्रुद्धः सन् आगत्य कमलामेलाहरणकारिणस्तान् हन्तुकामोऽयोधयत्, यतः स हि सदैवाऽन्यायाऽसह एव। ततः सहसा शाम्बः स्वस्वरूपं विधाय कमलामेलासहितं च सागरचन्द्रं गृहीत्वा कृष्णपादयोरपतत्। तत्सर्वं दृष्ट्वा विलक्षीभूतः कृष्ण ऊचे–'रे रे! किमिदं त्वया कृतम्?, यदेवं हन्त! आश्रितोऽयं नभःसेनस्त्वया वञ्चितः!'। 'अथाऽद्य अस्य शाम्बस्य किं क्रियते?' इति नभःसेनमबोधयत्, सागरचन्द्रायैव च केशवः कमलामेलां दत्तवान्। नभःसेनोऽपकर्तुमसमर्थस्तत्प्रभृति सागरचन्द्रस्य सर्वदा छिद्रं विलोकयामास।

इतश्च प्रद्युम्नस्य वैदर्भ्यां पत्न्याम् अनिरुद्धनामा पुत्रोऽभूत्, यौवनं च प्राप। तदा च वैताढ्यपर्वते शुभनिवासनाम्नि नगरे बाणाभिधानो विद्याधराधिपो महाबलो महामानी चाऽभूत्, तस्य उषानाम्नी कन्यकाऽतीवरूपवती। सा च निजाऽनुरूपवल्लभप्राप्त्यै गरीयसा निश्चयेन गौरीं विद्यामाराधयामास। सन्तुष्टा सा तामभाषत–'कृष्णवासुदेवस्य पौत्रः सुरवरोपमानोऽनिरुद्धस्तव वरो भावी'। बाणेनाऽपि गौरीविद्याप्रियः शङ्कराभिधो देव आराधितः, सोऽस्य सङ्ग्रामाङ्गणेऽजय्यत्वं ददौ। ततस्तं प्रति गौरी जगाद–'भवता यत् सर्वत्राऽजय्यत्ववरो दत्तस्तन्न सुष्ठु कृतम्, यतो मया तत्पुत्र्या उषायाः पूर्वं ननु वरो दत्तोऽस्ति'। ततश्च शङ्करो बाणं बभाषे–'त्वमजय्यः स्त्रीकार्यादन्यतो भविष्यसि'। बाणस्तेनापि वरेण जहर्ष। सा उषा रूपसम्पत्त्वेन कैः कैर्भूचरैः खेचरैश्च बाणाद् न ययाचे?, परं स तु अरोचकी केषाञ्चि-

दपि नाऽदात् । अथोपाऽनुरागिणी चित्रलेखां विद्याधरीं प्रेष्याऽनिरुद्धकुमारं मनसीव स्वकीयगृहे आनाययत्, तां च गान्धर्वविवाहेन परिणीय गृहीत्वा च स चचाल, 'उषां हृत्वाऽहमनिरुद्धो व्रजामि' इत्युच्चैश्च जगाद । ततः क्रुद्धो वाणासनी वाणविद्याधरेन्द्रो महाबलैः कृत्वा व्याधोऽस्थिभुग्भिः क्रोडमिव अनिरुद्धकुमारं रुद्धवान् । तदानीं चोषा पाठसिद्धां विद्यां पत्ये ददौ, तया सोऽपि वर्द्धितबलो वाणेन समं चिरं युयुधे । अथ वाणविद्याधरेण नागपाशैरनिरुद्धः कलभवद् बद्धः, तदा प्रज्ञप्त्या विद्यया गोवर्धनायाऽकथि । ततश्च तत्कालं बलभद्र–प्रद्युम्न–शाम्बसहितो हरिस्तत्र समाययौ, गरुडध्वजदर्शनमात्रेणाऽपि च ते नागपाशा दुद्रुवुः । वाणोऽपि शङ्करदत्तवरेण आत्मबलेन च गर्वितो मदोन्मत्तः कृष्णमूचे–'त्वं किं मद्बलं न जानासि ? । त्वं सदाऽन्यकन्यकानां हरणमकार्षीः, ततश्च तव पुत्रप्रमुखाणां तद् अनुक्रमायातं, परं तत्फलमहमद्य दर्शयामि' । तदा कृष्णोऽपि जगाद–'हे दुष्टाशय ! रे विद्याधराधम ! इयं तव वचनयुक्तिः का ?, कन्या ह्यवश्यं यस्य कस्याऽपि दातव्या, ततस्तद्धरणे को दोषोऽस्तु ?' । इति श्रुत्वा स वाणो विद्याधरपरिवृतो भ्रकुटीभीषणवदन आकृष्टवाणासनः कृष्णाय वाणांश्चिक्षेप, तानन्तराऽपि च्छेदेच्छेकः केशवश्चिच्छेद । एवं तयोर्वीरयोश्चिरं शराशरि प्रववृते । पश्चाद् गरुडः कृष्णभुजङ्गमिव कृष्णस्तं निरस्त्रीकृत्य खण्डशो निकृत्य च प्रेतराजस्य गृहे प्राघूर्णकमिवाऽनैषीत् ।

१ धनुर्धारी । २ श्वभिः । ३ वराहम् । ४ आकृष्ट वाणासन–धनुर्येन सः । ५ छेदे छेकश्चतुरः ।

अनिरुद्धमुषान्वितमेष हरिः, परिगृह्य मुदा स्मररूपधरम् ।
हलिशाम्बरमाङ्गजयुक् च ततस्त्वरितं कृतवान् स्वपुरागमनम् ॥ १ ॥

॥ इति पण्डितश्रीकनकविजयगणिचरणपङ्कजभ्रमरसदृश–श्रीगुणविजयगणिविरचिते श्रीमदरिष्ट-नेमिचरिते सुललितगद्यबन्धे वसुदेवप्रद्युम्नशाम्बागमन–निखिलविद्याधरमिलन–आनन्द-पुरेतिसेनपल्लीग्रामनामान्तरस्थापन–शङ्खपुरनिवेशन–श्रीपार्श्वनाथबिम्बप्रतिष्ठापन–कोटिशीलोत्पाटन–केशववासुदेवपरपट्टाभिषेकविधान–राजीमतीजन्मोपादान–सागरचन्द्रकुमाराख्यान–उषाकुमारीहरण–बाणविद्याधराधीशवधवर्णनो नाम नवमः परिच्छेदः ॥ ९ ॥

## ॥ अथ दशमः परिच्छेदः ॥

इतश्च श्रीनेमिकुमारोऽपरैः कुमारैः समं क्रीडया पुर्यां पर्यटन् चक्र–खड्ग–शङ्ख–गदा–धनुःशोभितायां वासुदेवस्यायुधशालायां निःशङ्कं प्रविवेश । तत्र प्रभुणा चक्ररत्नं सूर्यबिम्बमिव अतिभास्वद् दृष्टं, पुनः शार्ङ्गधनुः-कौमुदीकीगदा-नन्दाभिधानखड्गान् भुजङ्गराजवद् भीषणान् ददर्श, तथा पाञ्चजन्यं शङ्खं

जन्यनाट्यनान्दीवादित्रं[1] महत्तरं कृष्णस्य यशःकोशमिव कुमारैः सार्धं श्रीनेमिरैक्षिष्ट । अथ कुतूहलात् शङ्खमादित्सुम्[2] अरिष्टनेमिनं विज्ञाय शस्त्रशालारक्षश्चारुकृष्णः प्रणम्येत्यब्रवीत्—'हे प्रभो! यद्यपि त्वं हरेभ्राताऽसि, महाबलवांश्चाऽसि, तथापि शङ्खमादातुमपि न हि शक्तोऽपि तर्हि पूरयितुं कुतः सामर्थ्यं स्यात्?, इमं हि शङ्खमादातुम् आध्मातुं च हरिं विना न कोऽपि क्षमः, तद् मिथ्यैव प्रयासं मा कार्षीः!'। तदा श्रीनेमिः स्मित्वा तं शङ्खमुदभ्रे, लीलयैव च दध्मौ, तदा च प्रमुदन्त-शङ्खज्योत्स्नास्त्रयस्त्रिंशचन्द्रसत्कप्रभा इव राजन्ते स्म । द्वारकाप्राकारसंमूर्च्छदुद्वेलसमुद्रध्वनेः[3] सदृशः स शङ्खशब्दो गगन—पृथिव्यौ पूरयामास। तदा दुर्गाः पर्वतशिखराणि प्रासादाश्च गजकर्णवच्चकम्पिरे, राम-कृष्णौ दशार्हा अन्येऽपि च महासुभटाश्चुक्षुभुः, स्तम्भानुन्मूल्य त्रोटितशृङ्खला हस्तिनः पलायाञ्चक्रिरे, अश्वा अपि निरस्तवदनबन्धना अपलायन्त, इन्द्रवज्रनिर्घोषादिव तद्ध्वनेर्नगरीलोका अमूर्च्छन्, शस्त्रशालारक्षकाश्च मृता इव निपत्याऽस्थुः । अथ गोविन्दो मनसि दध्यौ—'एष शङ्खः केन वादितः?, किं कश्चिच्चक्रवर्ती समुत्पन्नः?, अथवा किमत्र भुवि इन्द्रः समागात्?। मया हि शङ्खे पूरिते सामान्यनृपाणां क्षोभो जायते, परमनेन तु शङ्खे पूरिते मम रामस्याऽपि च क्षोभोऽभवत्!'। इति चिन्तयन्तं केशवं शस्त्ररक्षका व्यजिज्ञपन्—'प्रभो! अद्याऽरि-

---

१ जन्य युद्ध, तदेव नाट्य, तस्य नान्द्या वादित्रसमानम् । २ ग्रहीतुमिच्छुम् । ३ द्वारकानगर्याः प्राकारेण सह आस्फाल्यत उद्वेलसमुद्रस्य ध्वनेः ।

ष्टनेमिना लीलया पाञ्चजन्यः शङ्खः पूरितः'। तन्निशम्य विस्मयापन्नो मनस्यश्रद्दधानश्च यावत् कृष्णस्तस्थौ तावत्तत्र श्रीनेमिरपि समागात्। अथ उचिततज्ञः कृष्णः ससम्भ्रमोऽनर्घ्ये आसने श्रीनेमिनमुपवेश्य सगौरवमभाषत–'भ्रातः! किमद्य त्वया शङ्खोऽयं पूरितो यन्नादेन सर्वाऽपि पृथिवी क्षोभिताऽद्यापि वर्तते?'। नेमिनाऽपि 'आम' इति कथिते स्वयं भुजबलमपि परीक्षितुमनाः केशवस्तं गौरवप्रदानपूर्व-कमवादीत्–'पाञ्चजन्यं पूरयितुं मां विना कोऽपि नान्यः समर्थः, भवताऽस्मिन् पूरिते तु भ्रातः! सम्प्र-त्यहं हृष्टोऽस्मि। परं मानद! मां विशेषेण प्रीणयितुं निजभुजबलमपि दर्शय, बान्धव! मयैव सार्धं बाहु-युद्धेन युध्यस्व'। नेमिना 'एवमस्तु' इति कथिते कुमारपरिवारितौ वीरकुञ्जरौ नेमि-केशवौ आयुध-शालां जग्मतुः। अथ प्रकृत्या सदयः प्रभुर्मनसि दध्यौ–'मम हृदयेन भुजेन पादेन वाऽऽक्रान्तः केशवः कथं भावी?, तेन कारणेन यथाऽयमनर्थं न यायाद् मम भुजबलं च जानीयात् तथा मया कर्तव्यम्'। इति ध्यात्वा स्वामी कृष्णमूचे–'भ्रातः! इदं मुहुर्मुहुर्भूलुठनाकुलं युद्धं प्राकृतलोकानां वर्तते, परमावयोस्तु परस्परं भुजवालनेनैव युद्धं भूयात्'। तद्वचः प्रपद्य कृष्णो वृक्षशाखामिवाऽऽयतां स्वभुजां दध्रे, तां च श्रीनेमिर्लीलया कमलनालमिवाऽनामयत्। पश्चात्तथैव प्रभुरपि स्ववामभुजां दध्रे, तत्र च सर्वबलेन केश-वस्तरौ कपिरिव ललम्बे। नेमेर्बाहुस्तम्भः कृष्णेन मनागपि नाऽनाम्यत, वनगजेन महापर्वतस्य दन्तभूमिः किं विदार्यते?। ततो नेमिभुजस्तम्भं मुक्त्वा स्वविलक्षतां निह्नुवानो गोवर्धनः श्रीनेमिनं समालिङ्गन्निति

जगाद–'भ्रातः! यथा मम बलेन रामस्तृणवज्जगद् मन्यते तथाऽहं तव बलेन विश्वं तृणमिव मन्ये'। इत्युक्त्वा नेमिनं व्यसृजत्। ततो राममूचे–"भ्रातः! त्वया त्रिभुवनोत्तरं भ्रातुर्वीर्यं दृष्टम्?। वासुदेवोऽप्यहम् अस्य बाहौ पादपे पक्षीवाऽभवम्!, ततो मन्ये, अमुष्य बलेन सदृशश्चक्रवर्ती सुरेन्द्रोऽपि वा न। ईदृशेन बलेनाऽयं समस्तमपि भरतक्षेत्रं किं न साधयति?, आवयोरयं बान्धवः किमेवमेव तिष्ठति?"। तदा रामो बभाषे–'यथाऽयं बलेन चक्रितोऽप्यधिको ज्ञायते तथैव शान्तया मूर्त्या राज्यनिःस्पृहो निर्लोभश्च लक्ष्यते'। इति रामेण कथितेऽपि नेमिबलेन साशङ्कं कृष्णं दृष्ट्वा देवताऽवदत्–"भो भोः केशव! मा ताम्यः स, जिनभाषितं शृणु—प्राग् नमिजिनेन कथितामस्ति यद् नेमिः कुमार एव सन् तीर्थङ्करो भावी, तद् अस्य राज्यश्रिया नाऽर्थः, स्वसमयं प्रतीक्षमाणोऽयम् आजन्मतोऽपि ब्रह्मचारी दीक्षामादास्यते, हे कृष्ण! अन्यथा मा चिन्तय"। इति देव्याऽपि प्रोक्तः केशवः प्रीतो बलदेवं व्यसृजत्, स्वयं तु अन्तःपुरं जगाम, तदैव च नेमिमाजूहवत्। तत्रोभौ नेमि-गोविन्दौ रत्नमयस्नानकरणासनोपविष्टौ वाराङ्गनालोठ्यमानजलकुम्भौ तत्कालं स्नानं चक्रतुः, देवदूष्यैरुन्मृष्टाङ्गौ दिव्यचन्दनैश्च विलिप्तौ तत्रैव हरि–नेमिनौ भोजनं विदधाते।

अथ सर्वानपि कञ्चुकिपुरुषान् कृष्ण ऊचे–'एष मम भ्राता नेमिः स्वसादप्यधिकोऽस्ति, तेन कारणेन क्वचिदप्यन्तःपुरे न स्खलनीयः। सर्वासामपि भ्रातृस्त्रीणां मध्यवर्त्त्ययं नेमिकुमारः स्वच्छन्दं रमतां,

तत्र युष्माकं कश्चनाऽपि दोषो न ज्ञेयः'। पश्चात् सत्यभामाद्याः पत्नीः प्रति विष्णुरूचे—'मम ह्ययं प्राणभूतो युष्माकं च देवरो नेमिर्माननीयः, निःशङ्कं च क्रीडनीयः'। इति तत्राऽन्तःपुरे कृष्णेन कथिते सति ताभिः सर्वाभिर्भ्रातृजायाभिः पूजितो नेमिर्निर्विकारो भोगपराङ्मुखो विजहार। प्रीतो हरिरात्मनो निर्विशेषेण नेमिना सहैव सान्तःपुरः क्रीडापर्वतादिषु रेमे ।

अन्येद्युर्वसन्ततौ दशदशार्हैः कुमारैः पौरलोकैश्च समं केशवः सान्तपुरो रैवताचलोद्याने नेमियुक्तो ययौ। तत्र च नन्दने सुरासुरकुमारा इव कुमारा नगरीलोकाश्च विविधां क्रीडां चक्रुः । केऽपि बकुलवृक्षतले बकुलसुगन्धशालिनीं मदनजीवनौषधिं मदिरां पपुः, केऽपि करेषु वीणां गृहीत्वा तत्र वसन्ततौ फागगानं चक्रिरे, केऽपि क्षीवा[1] युवानः किन्नरा इव सस्त्रियो ननृतुः, केऽपि चम्पका-ऽशोक-बकुलप्रमुखेषु तरुषु सप्रियाः पुष्पाहरविद्याधरा इव पुष्पाणि अवचिच्यिरे, केऽपि विदग्धा मालिका इव स्वयं पुष्पाभरणानि ग्रथित्वा स्वमृगलोचनानामङ्गेषु निदधुः, केऽपि लतागृहेषु नवपल्लवतल्पेषु निजरमणीभिः समं कान्दर्पिका देवा इव रेमिरे, केऽपि भोगिनः पुरुषा गाढतरं श्रान्ताः सलिलसारणीतटे भोगिन इव मलयाचलमारुतं पपुः, केऽपि सस्त्रियो रति-मन्मथविडम्बिनः कङ्केल्लिशाखावलम्बिदोलासु आन्दोलनेन चिक्रीडुः। केचित् कङ्केल्लिपादपान् प्रियाणां चरणप्रहारेण, केचिद् बकुलवृक्षान् मद्यगण्डूषप्रदानेन, केचित्

१ मत्ताः ।

तिलकवृक्षान् सरागदृष्टिप्रक्षेपेण, केचिद् गाढालिङ्गनप्रदानेन कुरुबकतरून्, तथा अन्ये कामिनोऽन्यानपि वृक्षान् अन्यैर्दोहदैः विशेषपुष्प-फलयुक्तांश्चक्रुः । अथ कृष्णो नेमिना समं सत्यभामादिभिः परिवृतः क्रीडन् इतस्ततो वने वनगज इव बभ्राम । नेमिं पश्यन् केशवो दध्यौ–'यदि नेमेर्भोगेषु मनः स्यात् तदा मम श्रीः कृतार्था बान्धवत्वं च सार्थकं भवेत्, तद् आलम्बनोद्दीपनैर्विभावैः पुनः पुनर्मयैषोऽनुकूल्यः, एवं च यदि मम मनोरथः पूर्येत तदा वरम्' । एवं विचिन्त्य कृष्णो मालां ग्रथित्वा मुक्ताहारमिव नेमिकण्ठे निचिक्षेप । विचक्षणाः सत्यभामाद्या अपि सर्वा विष्णुवनिताः स्वपतिभावविदो विचित्रपुष्पाभरणैः श्रीनेमिप्रभुमुपतस्थिरे । तासां मध्ये च काऽपि सुन्दरी पीनोन्नतस्तनाग्राभ्यां स्पृशन्ती स्नेहेन नेमेर्धम्मिल्लं मनोज्ञपुष्पमालाभिः पृष्ठतो बबन्ध, काऽप्यग्रस्थिता उदस्तभुजलता प्रादुष्कृतदोर्मूला हरिवल्लभा नेमेः शिरसि मुकुटं विदधे, काऽपि पाणिना कर्णे विधृत्य मदनस्य जयध्वजमिव कर्णावतंसकं रचयामास, काऽपि नेमिना सह क्रीडाकालक्षेपविधित्सया बाह्वोर्नवं कुसुमाङ्गदं भूयो भूयो बन्धयामास; एवं ता ऋतूचितमुपचारं नेमेर्विदधुः, तथैव नेमिरपि तासु निर्विकारमुपाचरत् । एवं विचित्रक्रीडाभिरहोरात्रं कृष्ण उद्याने स्थित्वा पश्चाद् द्वारिकायां सपरिवार आययौ । राजा समुद्रविजयोऽन्ये दशार्हा राम-केशवौ सर्वेऽपि यदवश्च श्रीनेमिपाणिग्रहणोत्सवे सोत्साहा उत्कण्ठिताश्च तस्थुः । क्रमेण वसन्तसमयः सनेमेर्हरेः क्रीडतो व्यतीयाय ।

तदनन्तरं ग्रीष्मर्तुः स्मरमिव सूर्यं प्रौढीकुर्वन् आगात्। वालातपोऽपि केशवप्रताप इवाऽसह्योऽभवत्, निशायामपि प्राणिनां कर्मेव घर्मो नाऽशाम्यत्। तत्रतौ विलासिनो युवानः श्वेते कदल्यन्तस्त्वक्सदृशे मृगनाभि-कर्पूरादिसुगन्धद्रव्यधूपिते वस्त्रे पर्यधुः। कुञ्जरकर्णचञ्चलं तालवृन्तं स्त्रियो मदननृपस्य शासनमिव हस्ताद् ईषदपि नाऽमुञ्चन्। विचित्रकुसुमरसद्विगुणीकृतसौरभैश्चन्दनजलैर्युवानः स्वं पुनः पुनरभ्यषिञ्चन्। कामिनीभिरभितो हृदि आहितानि कमलनालानि मुक्ताहारेभ्योऽप्यधिकं सौभाग्यं लेभिरे, जलार्द्रं पुनः पुनर्गाढं हृदये निपीडयन्तो युवानो वल्लभामिव नाऽमुञ्चन्। एवंविधे घर्मभीषणे ग्रीष्मे सान्तःपुरः कृष्णो नेमिना समं रैवतपर्वतोद्यानसरोवरं ययौ। तदन्तर्मज्जनक्रीडां कर्तुं सनेमिः केशवः सान्तःपुरो मानससरसि हंस इव प्रविवेश। तत्र आकण्ठं निमग्नानां कृष्णकामिनीनां वदनैर्नवोद्भिन्नकमलिनीखण्ड-भ्रान्तिस्तत्कालम् अजायत। हरिः काञ्चित् प्रति स्वयमञ्जलिजलेनाऽऽचिक्षेप, तदा साऽपि च्छेका गण्डूषसलिलेनैव तं प्रत्याक्षिपत्। काभिश्च जलभीरुभिर्विलगन्तीभिर्भीरुभिर्जनार्दनः सशालभञ्जीक[1]स्तम्भशोभां दधौ। असकृत्कल्लोला इव उच्छलन्त्यस्ता हरिणीदृशो रभसतः कृष्णस्योरस्तटे आस्फालयन्ति स्म। जलाघातेन हरिललनानां नयनानि स्वकीयभूषणाऽञ्जनाऽपोहोत्पन्नया[2] रुषेवाऽधिकं ताम्रत्वं दधुः। काऽपि

१ परितो वेष्टयमानाभिः पुत्तलिकाभिर्युक्तस्य स्तम्भस्य शोभाम्। २ स्वकीयभूषणस्याऽञ्जनस्य अपोहो—अपगमस्तेनोत्पन्नया क्रुधा।

कृष्णेन विपक्षाभिधानग्रहणेनाऽऽकारिता सती तं लीलाकमलेन ताडयामास। चिरमपरां कान्तां प्रेक्षमाणं केशवं काचिदभ्येत्य नयनयोः कमलपरागमिश्रितैः सलिलैर्जघान। कृष्णं परितः पुनः पुनर्मृगलोचना गोपभावलीलाहल्लीसकखेलनं सारयन्त्यो भ्रेमुः। तत्र भ्रातुरुपरोधात् प्रभुरपि भ्रातृस्त्रीभिः सहास्यवाक्याभिर्वेष्ट्यमानो निर्विकारोऽक्रीडत्। 'हे देवर! इदानीं क्व यासि?' इत्युक्त्वा ता हरेः प्रियाः समकालं चपेटाताडितैर्नीरैर्नेमिमाजघ्नुः। उदकाच्छोटनपातिभिः केशववधूनां करैरुत्पल्लवो वृक्ष इव स्वामी रराज। जलक्रीडामिषेण स्त्रीस्पर्शज्ञापनाय ता नेमिकण्ठे आशिश्लिषुः, हृदये आजघ्नुः, भुजे चाऽव्यधुः। काऽपि क्रीडया श्रीनेमेर्मस्तकोपरि च्छत्रमिव सहस्रपत्रम् अन्तःपुरच्छत्रधरीवाऽधारयत्। काचिच्च हासेन नेमिनः कण्ठस्थले कमलनालं चिक्षेप, यथा गजस्य कण्ठे आलानशृङ्खला क्षिप्यते। काऽपि कामिनी यत्किञ्चिदपदिश्य नेमिं शतपत्राम्बुजेन मदनशल्यैरप्यनाहते हृदये जघान। अविकारः प्रभुरपि ताः सर्वाः कृतप्रतिकृतैः क्रीडयामास। क्रीडन्तं बान्धवं पश्यन् केशवोऽत्यन्तं मनसि जहर्ष, तत्राऽम्भसि च नन्दीश्वरगज इव चिरं तस्थौ। अथ सम्पूर्णीकृतजलक्रीडो हरिः सरोवरान्निर्गतः, सत्यभामा-रुक्मिण्यादयोऽपि तीरे गत्वाऽवतस्थिरे।

श्रीनेमिरपि राजमरालवत् सरोवरान्निरगात्, रुक्मिण्यादिभिश्च समाश्रितं तीरप्रदेशं शिश्रिये। तत्र रुक्मिण्युत्थाय स्वयं रत्नमयमासनमदात्, स्वकीयोत्तरीयवस्त्रेण च श्रीनेमेरङ्गं ममार्ज। तदा च सत्यभामा

हास्य-विनयपूर्वकं नेमिनमभाषत—"हे देवर! त्वं सदाऽस्माकं वचनानि सहसे, तेनाऽभीता त्वां कथयामि—सुन्दर! षोडशसहस्रस्त्रीभर्तुः केशवस्य भ्राता त्वमेकामपि कन्यां किं नोद्वहसि ? । तव रूपं त्रैलोक्येऽपि सर्वोत्कृष्टं लावण्यकलापपावितं च वर्तते, यौवनं च नवोद्भेदं दरीदृश्यते, एवं च सत्यपि केयं ते स्थितिः ? । पितरौ भ्रातरो वयं च भ्रातृजायास्तव विवाहाय याचामहे, देवर! एषां वाञ्छितं कुरुष्व। पत्नीपरिग्रहमन्तरेण[1] वण्डमात्र[2] इवैकाङ्गस्त्वं कियन्तं कालं नेतासि[3] ?, अहो! स्वयमपि मनसि विमृश। कुमार! त्वं किमज्ञोऽसि ? नीरसोऽसि ? अथवा क्लीबोऽसि ? तदस्मान् कथय, स्त्रीभोगेन विना त्वम् अरण्यकुसुमवद् वर्तसे। यथा आदिदेवः प्रथमं तीर्थं प्रावर्तयत् तथा स एव पाणिग्रहणमङ्गलान्यपि दर्शयामास। तेन कारणेन त्वमेकवारं कामिनीं परिणय, भोगसुखानि भुङ्क्ष्व, समये च यथारुचि ब्रह्मव्रतमपि प्रतिपद्येथाः, परं गार्हस्थ्ये ब्रह्मव्रतं नोचितं, किं मन्त्रजापोऽशुचिस्थाने भवेत् ?" । अथ जाम्बवती जगाद—'देवर! तव वंशे मुनिसुव्रतः कृतविवाहो जातपुत्रश्च तीर्थङ्करो बभूव, प्रागपि जिनशासने कृतपाणिग्रहणा मुक्तिं गताः श्रूयन्ते, तन्ननु त्वमपि जानासि। त्वं नूनं नूतनो मुमुक्षुरसि यो मुक्तानामपि मार्गं विहाय जन्मतोऽप्येवं स्त्रीपराङ्मुखोऽभूः !' । अथ कृतप्रणयकोपा सत्यभामोचे—'सखि! अमुं त्वं वृथैव साम्ना[4] किं वदसि ? । नूनमयं सामसाध्यो नास्ति, यतः पित्रा वृद्धभ्रात्राऽन्यैश्चाऽपि सानुनयं विवाहार्थेऽयं प्रोक्तः,

१ विना । २ वण्डः स्त्रीरहितः, भाषायां 'वांढो' इति ख्यातः । ३ निर्गमयिष्यसि । ४ मिष्टवचनेन ।

परं तानपि खलु न मेने । तद् अस्माभिः सर्वाभिर्मिलित्वा एप निरुध्यताम्, यद्यस्मद्वचनं न मंस्यते तदा सर्वथा न मोक्तव्यः !' । अथ लक्ष्मणादयः कथयामासुः–'अयं हि देवर आराध्यः, एवं सकोपमिव नो वाच्यम्, अस्य प्रसादनमेवोपायः' । इत्युक्ते रुक्मिण्याद्या हरिवल्लभाः पाणिग्रहणाय कृताग्रहाः प्रार्थयमाना नेमेः पादयोर्निपेतुः । ताभिश्च नेमिनं तथा प्रार्थ्यमानं प्रेक्ष्य कृष्णोऽप्युपेत्य विवाहाय प्रार्थयाञ्चक्रे । अपरेऽपि यदव आगत्य नेमिमूचिरे–'नेमे ! भ्रातुर्वचनं कुरु, शिवादेवी-समुद्रविजयौ अन्यांश्चाऽपि स्वजनान् मोदय' । एवं साग्रहैस्तैः सर्वैरुपरुद्धो नेमिश्चिन्तयामास–'अहो एतेपामज्ञानम् !, ममाऽप्यदो दाक्षिण्यं धिक् । केवलममी स्वयं भवसागरे न पतन्ति, किन्तु अपरानपि आवद्धस्नेहपापाणशिलया पातयन्ति । अथाऽमीपां वचनं सम्प्रति वाङ्मात्रेणाऽनुमन्तव्यं, समये तु आत्महितमवश्यं विधातव्यम् । यच्च प्राग् ऋपभजिनो विवाहं विदधे तत् तथाभोग्यकर्मत्वात्, यतः कर्मणां गतिर्विभिन्ना वर्तते' । एवं विमृश्य प्रभुस्तद्वचनं प्रतिपन्नवान्, तन्निशम्य समुद्रविजयादयः सर्वेऽपि जहृपुः ।

अथ ग्रीष्मर्तुमतिवाह्य सपरिवारः केशवो नेमियोग्यकन्याविलोकनोत्सुको द्वारकायामाययौ । तत्र सत्यभामा जगाद–'प्रियतम ! मम कनिष्ठा भगिनी राजीमतीनाम्नी नेमेरनुरूपा कन्याऽस्ति' । तदा कृष्णस्तामुवाच–'हे सत्यभामे ! सत्यं त्वं मम हिताऽसि, यन्नेमेरनुरूपकन्याचिन्तासागरे पतितोऽहं त्वया समुद्धृतोऽसि' । अथ कृष्णः स्वयमुत्थाय यदुभिर्नगरीलोकैश्च ससम्भ्रमैर्विलोक्यमान उग्रसेनगृहे ययौ ।

उग्रसेनोऽपि कृष्णम् अर्घ्यपाद्यादिना सत्कृत्य सिंहासने चोपवेश्य आगमनकारणमपृच्छत् । कृष्णोऽपि कथयामास—'राजन् ! तव राजीमतीनाम्नी या कन्या सा मम लघुभ्रातुर्गुणैर्मदधिकस्य नेमेर्योग्याऽस्ति' । तदा उग्रसेनोऽप्येवमुवाच—'प्रभो ! अस्माकं भाग्यं फलितं यद् हरिर्गृहम् आगात्, अस्मांश्च कृतार्थान-कार्षीत् । एतद्गृहम्, इयं लक्ष्मीः, एते वयम्, इयं कन्या, सर्वं चाऽपरं तवाऽऽयत्तं, ततः स्वामिन् ! स्वायत्ते वस्तुनि प्रार्थना का ?' । इत्युक्त्वा मुदितो गोविन्दस्तद् समुद्रविजयाय गत्वा कथयामास । समुद्र-विजयोऽपीदमवादीत्—'वत्स ! तव पितृषु भक्तिर्भ्रातृषु च गाढं वात्सल्यमस्ति यद् अस्माकं प्रमोदकृद् नेमेर्भोगाभिमुख्यमकार्षीः । इयत्कालं मम मनोरथो मनस्येव विलीनोऽभूद् यद् अरिष्टनेमिः कन्यापाणि-ग्रहणमनुमंस्यते' । अथ क्रोष्टुकिनैमित्तिकमाहूय राजा समुद्रविजयो नेमि-राजीमत्योर्विवाहने शुभदिवसं पप्रच्छ । तदा क्रोष्टुकिरप्येवमुवाच—'राजन् ! अन्येऽपि शुभारम्भा नूनं वर्षतौ न युज्यन्ते तद् विवाहस्य तु का वार्ता ?' । अथ समुद्रविजयोऽवदत्—'अत्र कालक्षेपो नाऽर्हति, कृष्णेन कथञ्चिदपि अरिष्टनेमिः पाणिग्रहणाय प्रवर्तितोऽस्ति । अथ विवाहविघ्नं मा भूत्, तद् आसन्नं दिवसं वद, त्वदनुज्ञया च गान्धर्व इव विवाहो भूयात्' । तदा विमृश्य क्रोष्टुकिरकथयत्—'राजन् ! यद्येवं तर्हि श्रावणस्य श्वेतषष्ठीदिने एतत्कार्यं करणीयम्' । तन्निशम्य हृष्टः समुद्रविजयस्तं क्रोष्टुकिं सत्कृत्य तद्दिवसं मनस्यधारयत्, उग्रसे-नाय चाऽऽख्यापयामास । ततो द्वावप्यसज्जताम् । कृष्णोऽपि द्वारावत्यां प्रतिहट्टं प्रतिगोपुरं प्रतिगृहं

चाऽद्भुतानि रत्नमञ्च-तोरणादीन्यकारयत् । अथ विवाहासन्नदिने दश दशार्हा, राम-केशवौ, तारस्वरमारब्धगीतगानाः शिवादेवी-रोहिणी-देवक्यादयो मातरो, रेवत्यादयो बलभद्रपत्न्यः, सत्यभामाद्या विष्णुपत्न्यो, महत्तराश्चाऽपरा धात्र्यो नेमिनाथं पूर्वाभिमुखं महासने स्थापयामासुः, बलभद्र-केशवौ च प्रीत्या स्वयं स्नपयामासतुः । बद्धप्रतिसरं[1] पाणौ च नाराचधारिणं नेमिनं कृत्वा गोविन्द उग्रसेनगृहेऽगात् । तत्र अवालेन्दुसदृशवदनां[2] राजीमती बालां केशवस्तेनैव विधिना स्वयमधिवासयामास । ततो गोविन्दः स्वगृहे जगाम ।

रजनिं व्यतिक्रम्य वैवाहिकगृहे गन्तुं नेमिनं संवाहयामास । अथ श्वेतच्छत्रेण मनोज्ञचामरैश्च विभासमानो, अतीवोज्ज्वलसदशवस्त्रधारी, मुक्ताभरणादिभूषितो, अतिसुगन्धिना गोशीर्षचन्दनेन विहिताङ्गरागः श्रीमदरिष्टनेमिः श्वेततुरङ्गमरथमारुरोह । नेमिकुमारस्य पुरतः कोटिशो यदुकुमारा हयहेषारवनिर्घोषैर्वधिरीकृतसर्वदिग्मुखा अचलन्, पार्श्वतो गजारूढाः सहस्रशो राजानः, पृष्ठे दश दशार्हा राम–केशवौ चाऽवतस्थिरे । तथा महार्घ्यशिविकाचटिताः सर्वा अन्तःपुरवनिता अपरा अपि वरकामिन्यो मङ्गलगायिन्यश्चेलुः । एवं महद्धर्या श्रीमदरिष्टनेमिः पुरतो मङ्गलपाठकैरुच्चैर्मङ्गलानि पठद्भी राजमार्गे प्रतस्थे । मार्गे गृहहट्टवलभीस्थितानां पौरस्त्रीणां प्रेमार्द्रा दृशो मङ्गलाऽक्षतवद् नेमेरुपरि निपेतुः । पौरलोकैः

१ बद्धं प्रतिसर—करसूत्र यस्य तम् । २ पूर्णचन्द्रसममुखाम् ।

परस्परं दर्श्यमानः सहर्षं वर्ण्यमानश्च श्रीनेमिरुग्रसेनगृहसमीपमाससाद । नेम्यागमनतुमुलस्वरेण घनगर्जितेन मयूरीव राजीवलोचना[1] राजीमती गाढोत्कण्ठाऽभवत् । अथ भावविदः सख्यस्तामूचिरे—'हे सुन्दरि ! त्वं धन्याऽसि यस्याः पाणिं नेमिकुमारो ग्रहीष्यति । कमललोचने ! यद्यपि नेमिरिहागन्ता, तथाप्युत्सुका वयं तमायान्तं गवाक्षस्थिताः पश्यामः' । सखीभिः स्वमनोगतभावकथनाद् मुदिता साऽपि सखीपरिवृता सम्भ्रमात् शीघ्रं गवाक्षं प्रति प्रचचाल । मालतीकुसुमगर्भितं धम्मिल्लं सचन्द्रमेघवद् बिभ्रती, श्रवणालङ्कारपङ्कजे नेत्राभ्यां पराभवन्ती, समुक्ताकुण्डलाभ्यां कर्णाभ्यां जितशुक्तिपुटा, पक्वबिम्बा बिम्बिकेव सालक्तकाऽधरदला, कण्ठे हेममेखलकम्बुवत्[2] सनिष्कं[3] बिभ्रती, आत्तबिसौ चक्राविव[4] हाराङ्कितौ वक्षोजौ धारयन्ती, कमलखण्डेन तटिनीव करकमलेन राजमाना, कन्दर्पकोदण्डलतेव मुष्टिग्राह्यमध्या शोभन्ती, सुवर्णफलकेन इव नितम्बेन मनोरमा, रम्भा[5]तुल्यजङ्घायुगला, रत्नतुल्यनखसन्ततिः, चन्द्रप्रतिमश्वेतसदशचीवरा, गोशीर्षचन्दनविलेपनाऽन्विता, एवंविधा सा राजीमती विमानमध्ये देवाङ्गनेव गवाक्षे निषसाद ।

तत्रस्था सा राजीमती प्रत्यक्षं मदनमिव हृदये मदनदीपनं नेमिनं दूरादपि ददर्श । सा दृशा पश्यन्ती

---

१ कमलनेत्रा । २ हेम्नो मेखला यस्मिन् स चाऽसौ कम्बुश्च, तद्वत् । ३ कण्ठभूषणम् । ४ चक्रवाकपक्षिणाविव । ५ रम्भा कदली ।

मनसीति दध्यौ–'अयं मनसोऽप्यगोचरो वरो दुष्प्रापः। त्रैलोक्यैकभूषणम् एषोऽपि वरो यदि मम संपद्यते तदा किं मम जन्मनः फलं सम्पूर्णं न जातम् ?। यद्यप्ययं मां परिणेतुमनाः स्वयं समागतस्तथाप्यहं न प्रत्येमि, यतः कैः पुण्यैः खल्वयं प्राप्यते ?'। एवं चिन्तयन्त्यास्तस्या राजीमत्या दक्षिणलोचनं स्फुरितं, बाहुरपि दक्षिणः पस्पन्दे, मनस्तन्वोश्च संतापो जज्ञे। ततो धारागृहपुत्तलिकेव नेत्राभ्यामश्रुपूरं वर्षन्ती सा सखीनां गद्गदाक्षरं तत्स्फुरणादि कथयामास। तदा सख्योऽप्यूचुः–'हे सुभगे ! हे सखि ! शान्तं पापम्, अमङ्गलं हतम्, तव सकलाः कुलदेवताः शिवङ्करा भवन्तु, धीरा भव, असौ पाणिग्रहणोत्सुकस्ते वरः समागात्, महोत्सवे प्रवर्तमाने किमिदममङ्गलचिन्तनम् ?'।

अथ नेमिरागच्छन् अनेकशः प्राणिनां करुणस्वरं शुश्राव। संविदानोऽपि[1] प्रभुः 'किमेतद् ?' इति सारथिमपृच्छत्। तदा सारथिरकथयत्–'हे प्रभो ! किं न जानासि ?, एते हि नानाविधाः प्राणिनस्तव विवाहे गौरवाय भोज्यसात् कर्तुमानीताः सन्ति। तत्र मेषाद्या भूचराः, तित्तिर्याद्याः खेचरा, ग्राम्या आटविकाश्चैते पञ्चत्वं यास्यन्ति। स्वामिन् ! आरक्षरक्ष्यमाणा अमी वाटकमध्ये आरटन्तः सन्ति, यतः सर्वेषामपि हि प्राणभयं महद्भयम्'। इति सारथिमुखान्निशम्य दयावीरो नेमिस्तं बभाषे–'यत्रैते जीवा वर्तन्ते तत्र त्वं मे रथं नय'। स सारथिस्तत्कालं तथैव चकार, तत्र च भगवान् विविधान् प्राणिनः

१ सम्यग्जानन्नपि।

प्राणाऽपहारचकितान् ददर्श । केऽपि ग्रीवायां रज्जुभिर्बद्धाः, केऽपि पादयोर्बद्धाः, केऽपि पञ्जरमध्ये क्षिप्ताः, केऽपि च पाशेषु पातिताः । उन्मुखा दीनलोचनाः कम्पमानशरीरकास्ते दर्शनादपि आनन्ददायिनं श्रीनेमिनं प्रेक्षाञ्चक्रिरे । ततस्ते प्रभुं प्रति स्वस्वभाषाभी 'रक्ष रक्ष' इत्यवदन्, तांश्च सर्वानपि स्वामी सारथिमाज्ञाप्याऽमोचयत् । ततस्तेषु जीवेषु स्वं स्वं स्थानं गतेषु प्रभुः स्वगृहं प्रति रथं निवर्तयामास । तदा समुद्रविजयराजो, राम-केशवौ, शिवादेवी-रोहिणी-देवक्यादयोऽन्येऽपि स्वजनवर्गाः स्वस्वयानानि मुक्त्वा प्रभोरग्रतोऽभूवन् । शिवा-समुद्रविजयौ साश्रुलोचनौ कथयामासतुः—'पुत्र ! कस्मात्कारणाद् अकस्मादस्मादुत्सवात् त्वं निवृत्तः ?' । ततो नेमिरभाषत—'एते प्राणिनो यथा बन्धनैर्बद्धास्तथा वयमपि कर्मबन्धनैर्नियन्त्रितास्तिष्ठामः । अथ यथैषां बन्धनाद् मोक्षः कृतस्तद्वत् स्वकीयमात्मानपि कर्मबन्धरहितं कर्तुं सर्वसौख्याऽद्वैतकारणं दीक्षामादास्ये' । तन्नेमिवचो निशम्य तौ द्वावपि शिवादेवी-समुद्रविजयौ मुमूर्च्छतुः, सर्वे यदवश्च अश्रुपूर्णदृशो रुरुदुः । तदा जनार्दनः शिवा-समुद्रविजयौ समाश्वास्य रुदितं च प्रतिषिध्य नेमिनं कोमलवचनेन बभाषे—"हे मानद ! मम रामस्य तातपादानां च त्वं सदा मान्योऽसि । तवेदं रूपं निरुपमं यौवनं च नूतनमस्ति । किञ्च सा राजीवलोचना राजीमत्यपि स्नुपा देववनितेवाऽनुपमरूपा तवाऽनुरूपा वर्तते, तत्कथय, तव वैराग्यकारणं किमस्ति ? । ये चैते जीवा दृष्टास्तेऽपि हि त्वया मोचिताः, तत् पितॄणां भ्रातॄणां च मनोरथं संपूर्णं कुरु । एतौ हि शोकसागरे

निर्मंग्नौ पितरौ उत्प्रेक्षितुं नाऽर्हसि, भ्रातः ! तत्रापि खलु सर्वसाधारणीं कृपां कुरु। यथा भवता दीनाः प्राणिनः प्रीणितास्तथा रामादीन् भ्रातृनपि स्वविवाहदर्शनात् प्रीणय"। अथ भगवान्नेमिरूचे–"बान्धव! पित्रोर्भवतामपि चाऽहं किञ्चिदपि शोकस्य कारणं न पश्यामि। मम वैराग्यकारणं तु चतुर्गतिरयं संसारः, यत्रोत्पन्नैः प्राणिभिर्भवे भवेऽपि दुःखान्येवाऽनुभूयन्ते। जीवस्य भवे भवेऽपि माता पिता भ्रातरोऽन्येऽपि च सम्बन्धा अनेकशोऽभूवन्, परं कोऽपि कर्मदायादो[1] नास्ति, स्वयमेव स्वं कर्म भुज्यते। हे हरे! यदि अन्येनाऽन्यस्य दुःखं छिद्येत तदा विवेकिना पित्रोरर्थे स्वकीयाः प्राणा अपि प्रदीयेरन्, परं पुत्रादिषु सत्स्वपि जन्तुर्जन्म-जरा-मृत्युदुःखानि स्वयं भुङ्क्ते, कस्यचिदपि कोऽपि त्राता नास्ति। यदि पितुर्दृष्टेरानन्दमात्रं पुत्रा भवन्ति तद् मां विनाऽपि महानेमिप्रभृतयः सुखहेतवो वर्तन्ते। अहं तु जरत्पान्थजन[2] इव संसारमार्गगतागतैः खिन्नोऽस्मि, ततस्तद्धेतुकर्मणां छेदे प्रयतिष्ये। कर्मच्छेदश्च दीक्षां विना खलु न साध्यते, अतस्तामेवाऽहमादास्ये, हरे! वृथाऽऽग्रहं मा कृथाः"। अथ समुद्रविजयनृपो जगाद–"वत्स! त्वं गर्भेश्वरोऽसि[3], अतीव सुकुमारशरीरश्चाऽसि, तत् कथं व्रतकष्टं सहिष्यसे?। पुत्र! महाघोरा ग्रीष्मकालातपाः सोढव्या दूरे तिष्ठन्तु, परं छत्रं विनाऽन्यकालातपा अपि अतीव दुःसहाः। क्षुधा-पिपासादयः परिषहा अन्यैर्नरैरपि सोढुं न शक्यन्ते तर्हि हे वत्स! सुरभोगार्हशरीरेण[4] भवता ते कथं सहिष्यन्ते?"।

---

१ कर्मणा दायादो—भागी। २ वृद्धपथिकपुरुषः। ३ गर्भादेव ईश्वरः—श्रीमान्। ४ देवभोगाना योग्य शरीर यस्य तेन।

ततो नेमिरब्रवीत्—"हे पितः ! उत्तरोत्तरदुःखसमूहान् नारकान् जानतां नृणां किमिदं दुःखमुच्यते ?। तपोदुःखैरनन्तसुखावहो मोक्षः प्राप्यते, विषयसुखैस्तु अनन्तदुःखदायी नरको लभ्यते, ततः स्वयं विमृश्य ब्रूत, मनुष्याणां किं कर्तुं युज्यते ?। सर्वोऽपि विमृशन् जनो वेत्त्येव, परं विरलो विमृशेत्" । तच्छ्रुत्वा पितरौ राम-केशवादयोऽन्येऽपि च नेमेः प्रव्रज्यानिश्चयं ज्ञात्वा उच्चैःस्वरं रुरुदुः । नेमिकुञ्जरस्तु स्वजनस्नेहनिगडान् त्रोटयन् सारथिप्रेरितस्यन्दनः स्वगृहमगात् । अथ समयं ज्ञात्वा तत्र लोकान्तिकदेवा अभ्येयुः, नेमिनं च नत्वा ते प्रोचुः—'हे नाथ ! तीर्थं प्रवर्तय' । तत इन्द्रादिष्टजृम्भकदेवपूरितैर्द्रविणैर्भगवान् वार्षिकं दानं दातुं प्रारेभे ।

अथ व्यावृत्तं श्रीनेमिनं प्रेक्ष्य व्रतकाङ्क्षिणं च श्रुत्वा आकृष्टवृक्षा वल्लीव राजीमती पृथ्व्यां पपात । तां भीताः सख्यः सुगन्धिभिः शीतलजलैः सिषिचुः, कदलीदलनिर्मितैर्व्यजनैश्चाऽवीजयन् । ततः प्राप्तसंज्ञा उत्थाय कपोलयुगलल्लुलितकेशा अश्रुधारार्द्रीकृतकञ्चुका साऽतीव विललाप—"एप मनोरथोऽपि नासीद् यन्नेमिर्मम वरो भवेत् । रे दैव ! त्वं केन प्रार्थितोऽसि यन्नेमिर्मम वरो विहितः ?, अथ च वरं कृत्वाऽकाण्डे दण्डपातवत् त्वं विपरीतं कुतोऽकार्षीः ?, निश्चितं खलु त्वमेवैको महामायी त्वमेव च विश्वासघातकोऽसि । यद्वा मयेदं स्वभाग्यप्रत्ययात् प्रागपि ज्ञातं यद् जगत्त्रयोत्कृष्टोऽयं वरो नेमिः क, मन्दभाग्या चाऽहं क ?। हे नेमे ! यदि त्वयाऽऽत्मनोऽननुरूपाऽहं ज्ञाता तद् मम पाणिग्रहणं प्रपद्य मनोरथः किमु-

त्पादितः ?, उत्पाद्य च स्वामिन् ! मम मनोरथः किं भग्नः? यतो महतां हि प्रतिपन्नं कार्यं यावज्जीवमपि निश्चलमेव । प्रभो ! यदि भवन्तोऽपि प्रतिपन्नाच्चलन्ति तत् सागरा नूनं मर्यादामुल्लङ्घयिष्यन्ति । यद्वा तवापि दोषो नास्ति, मम कर्मणामेवाऽयं दोषो यद् भवत्पाणिग्रहणं वचसैवाऽहं प्राप्नवम् । इदं मनोज्ञं मातृगृहम्, अयं दर्शनीयो दिव्यमण्डपः, इयं रत्नवेदिका, अन्यदपि आवयोर्विवाहाय कृतं सर्वमेतद् मुधाऽभूत्। 'धवलैर्यद् गीयते तत्सर्वं सत्यं न' ईदृशी लोकोक्तिः सत्या संजाता, यतस्त्वमादौ मम भर्ता गीतोऽसि, परं न चाऽभवः। हे नाथ ! किमहं पूर्वभवे युग्मिनां वियोगमकार्षं यत् पत्युः करस्पर्शसुखमपि नाऽऽसदम् ?" । इति विलपन्ती सा हस्ताभ्यां हृदयस्थलं जघ्ने, हारं त्रटत्रटिति त्रोटयामास, कङ्कणानि च बभञ्ज ।

अथ तां सख्य एवमूचुः—"हे सखि ! विषादं मा कुरु, कस्तेन समं तव सम्बन्धः ?, किं वा तेन सह तव कार्यम् ? । स तु निःस्नेहो निःस्पृहो लोकव्यवहारपराङ्मुखो वसतेर्वन्यजीववद् गृहवासात् सदैव भीरुः किमपि न जानाति । निर्दाक्षिण्यो निष्ठुरमनाः स्वेच्छाचारी नन्वयं वैरी नेमिर्यदि यातस्तद् यातु, साधु सम्प्रत्येव ह्येवंविधोऽयं ज्ञातः । यद्यसौ त्वां परिणीय एवं हि निर्ममः स्यात् तदा कूपमध्ये प्रक्षिप्य तव वर्तिकर्तनं कृतं भवेत्। अथ तेन सृतम् !, अन्येऽपि यदुकुमाराः प्रद्युम्न-शाम्बप्रमुखा बहवः सन्ति, तेषु तव रुचितो वरोऽस्तु । हे सुभ्रु ! त्वं नूनं सङ्कल्पमात्रेण नेमये दत्ताऽभूः, परं मुग्धे ! तदपरिग्रहाद् अद्यापि त्वं कन्यकैवाऽसि" । तदा सकोपा राजीमती जगाद—"हे सख्यः ! अस्मत्कुलकलङ्ककारणं कुल-

टाकुलसमानं किमिदमुच्यते ? । नेमिर्जगत्त्रयोत्कृष्टोऽस्ति, कोऽपरस्तत्सदृशो वरः ? । अथवा सदृशो भवतु, किं तेन समं मम कार्यम् ?, यतः कन्यादानमेकवारमेव स्यात् । मया मनसा वचसा च स नेमिरेव वृतः, गुरुजनोपरोधिना तेनाऽप्यहं गेहिनी प्रपन्नास्मि, तथापि यदि त्रैलोक्यनरोत्तमो नेमिर्मां नो पर्यणैषीत् तर्हि प्रकृत्याऽनर्थभूतैर्भोगैरेव मे सृतम् । तेन यद्यप्यहं विवाहकर्मणि पाणिना न स्पृष्टा, तथापि तस्यैव पाणिः दीक्षादानकृते मां स्प्रक्ष्यति" । इत्थं विहितप्रतिज्ञा सा राजीमती अन्यवरं वदन्तं सखीजनं प्रतिषिध्य नेमिनमेव ध्यायन्ती कालं निनाय ।

इतश्च, श्रीनेमिर्दिवसे दिवसे दानं ददौ, समुद्रविजयनृपाद्याश्च सवेदना बाला इव रुरुदुः। प्रभुस्तां राजीमत्याः प्रतिज्ञां जनाद् ज्ञानत्रितयाच्च विदाञ्चकार, तथापि हि स निर्मम एव तस्थौ । अथाऽनुक्रमेण वार्षिकदाने परिपूर्णे दत्ते सति शक्रादयः सुरेश्वरा जगद्गुरोः श्रीनेमेर्दीक्षाभिषेकं चक्रुः । तत उत्तरकुरुनाम्न्यां रत्नशिबिकायां सुर-नरवरैरुत्पाट्यमानायां प्रभुरारुरोह । तत्र प्रभोः पुरतः सौधर्मेन्द्रेशानेन्द्रौ चामरे दध्राते, सनत्कुमारश्छत्रं, माहेन्द्रः खड्गं, ब्रह्मेन्द्रो दर्पणं, लान्तकेन्द्रः पूर्णकुम्भं, महाशुक्रेन्द्रः स्वस्तिकं, सहस्रारेन्द्रो धनुः, प्राणतेन्द्रः श्रीवत्सम्, अच्युतेन्द्रो नन्द्यावर्तम्, अवशिष्टाश्चमरेन्द्रादयस्तु शस्त्रधारिणो बभूवुः । अथ महामना भगवान् पितृभिर्मातृभिर्बलभद्र-गोविन्दाद्यैश्च भ्रातृभिः समावृतो राजमार्गेण प्रतस्थे, यदा च राजीमत्या निजगृहसमीपमागतः प्रभुर्दृष्टस्तदा सा नवीभूतशोकेन पुनः पुनरमूर्च्छत् । ततश्च श्रीनेमिरुज्जयन्तगिरिभूषणं

नन्दनवनोपमम् उपवनं प्रोन्मीलन्नूतनकेतकैः प्रकटीकृतहास्यमिव, गलितपतितैर्जम्बुभिः परितो नीलरत्नबद्धोर्वीकमिव, कदम्बकुसुमशय्याशयनोन्मत्तमधुकरम्, उद्धर्हबर्हिणाम् आरब्धकेकारव-नाटकमनोज्ञं, मदनराजशस्त्राऽङ्गारसमस्फुटत्कुटजवनखण्डं, मालती-यूथिकापरागामोदपर्यस्तपथिकजनसमूहम्, एतादृशं सहस्राम्रवणं प्रविवेश । ततश्च प्रभुः शिबिकात उत्तीर्य यद् आभरणादिकं मुमोच तद् इन्द्रः कृष्णाय ददौ । जन्मतस्त्रिशतवर्षेषु व्यतीतेषु श्रावणश्वेतषष्ठीदिने पूर्वाह्णे चित्रानक्षत्रगते चन्द्रे कृतषष्ठतपाः प्रभुः पञ्चमुष्टिकं केशोत्पाटमकरोत् । केशान् शक्रेन्द्रः प्रैतीयेष, प्रभोः स्कन्धे च देवदूष्यं न्यधात् । केशान् शक्रः क्षीरसमुद्रे प्रक्षिप्य पुनश्च समागत्य जनकोलाहलं न्यषेधत्, प्रभुश्च सर्वसामायिकं ललौ । तदैव जगद्गुरोर्मनः-पर्यवज्ञानमुत्पन्नं, तदा च नारकाणामपि क्षणं यावत् सुखमुत्पेदे । नेमिकुमारेण समं सहस्रं राजानः प्राव्रजन् । ततश्च शक्रः केशवादयश्च नेमिं नत्वा स्वं स्वं स्थानकं जग्मुः ।

अथ द्वितीयदिने प्रभुः गोष्ठे वरदत्तविप्रगृहे परमान्नेन पारणं चकार, तदा च पञ्च दिव्यानि—गन्धजलवृष्टिं पुष्पवृष्टिं दुन्दुभिध्वनिं वस्त्रवृष्टिं वसुधारां च देवा विदधुः, गगने च हृष्टा देवा 'अहो ! दानम्, अहो ! दानम्' इति वारं वारं कथयामासुः । ततः कर्मबन्धान्निवृत्तो घातिकर्मक्षयोद्यमवान् श्रीनेमिरन्यत्र विहर्तुं प्रववृते ।

---

१ कुटजा गिरिमल्लिकाः, भाषायाम् 'इन्द्रवरणाना पुष्पो' । २ यूथिका अम्बष्ठा, भाषायाम् 'जुइ' । ३ जग्राह ।

इतश्च श्रीनेमेर्लघुभ्राता रथनेमी राजीमतीं पश्यन् इन्द्रियवशंवदो मदनातुरो जज्ञे । सोऽपूर्ववस्तुभिर्नित्यं राजीमतीमुपाचरत्, तद्भावाऽविदुरा सरलाशया साऽपि मुग्धा न न्यषेधत् । सा च 'भ्रातृस्नेहादसौ मां नित्यमुपास्ते' इत्यमंस्त, स तु 'एषा ममोपचारं रागेण गृह्णाति' इत्यमंस्त । स तुच्छधीर्नित्यं राजीमत्या गृहे ययौ, भ्रातृजायामिषाच्च तस्यां हास्यं चकार। अन्यदा एकान्तस्थितां तां रथनेमिरदो बभाषे— 'हे मुग्धे ! त्वामहं परिणयामि, त्वं यौवनं मुधा मा नय । मृगाक्षि ! यत्त्वां भोगाऽनभिज्ञो मम बान्धवस्त्यक्तवान्, परं स एव भोगसुखैर्वञ्चितः, तव किं गतम् ? । हे सुन्दरि ! स तु प्रार्थ्यमानोऽपि तव वरो नाऽभूत्, अहं तु त्वां प्रार्थयमानोऽस्मि, आवयोर्महदन्तरं पश्य !' । सा स्वभावतः सरलाशया तस्य तेन भावेन पूर्वोपचारकारणं तदानीमेव बुबुधे । ततश्च सा धर्मज्ञा तं धर्मकथनात् प्रतिबोधयामास, परं स दुर्मतिस्तु तस्मादध्यवसायाद् न व्यरंसीत् । अन्यदा महाबुद्धिमती सती राजीमती आकण्ठं पयः पपौ, तस्मिंश्च रथनेमौ आगते वान्तकृद् मदनफलं जघ्रौ । ततः सा रथनेमिं जगाद—'भो भोः ! सुवर्णस्थालमानय' । सोऽपि किङ्करवत् तत्कालमानिनाय। ततः सा तन्मध्ये पीतं दुग्धं ववाम, 'हे रथनेमे ! इदं पिब' इति च जगाद । तदा स ऊचे—'किमहं श्वाऽस्मि यद् वान्तपानाय त्वं मां वक्षि ?'। साऽभाषत—'त्वमपि इदमपेयम् इति किं जानासि ?' । सोऽवदत्—'केवलं नाऽहमेव जानामि, बाला अपीदं विदन्ति' । ततो राजीमती बभाषे—'रे रे ! यदि जानासि तदा नेमिना वान्तां मामुपभोक्तुं किं वाञ्छसि ?, तस्य

भ्राताऽपि भूत्वा कथमेवं कर्तुमिच्छसि ?। अतः परं नरकायुःकारणमिदं मा वादीः' । एवं तया प्रोक्तः स लज्जितः क्षीणमनोरथो विमनायितो मौनं विधाय निजगृहं जगाम। राजीमती च नेमिनाथेऽतीव रागतत्परा संविग्ना दिवसान् वर्षसमानान् गमयन्ती तस्थौ। श्रीनेमिरपि व्रतात् चतुःपञ्चाशद्दिनानि विहृत्य रैवतगिरौ सहस्राम्रवणे वने आययौ, तत्र च वेतसतरुतलेऽष्टमतपःस्थस्य ध्यानान्तर्वर्तिनः श्रीनेमिनाथस्य घातिकर्माणि जीर्णरज्जुवत् तुत्रुटुः, आश्विनमासे अमावास्यायां तिथौ पूर्वाह्णकाले चित्रानक्षत्रस्थे चन्द्रे स्वामिनः केवलज्ञानं समुत्पेदे। तत्कालं च चलितासनाः सुरेन्द्रास्तत्राययुः, प्राकारत्रितयभूषितं च समवसरणं चक्रुः। पूर्वद्वारेण प्रभुः प्रविश्य, तत्र विंशतिधन्वशतोन्नतं चैत्यवृक्षं प्रदक्षिणीकृत्य, 'तीर्थाय नमः' इति कथयित्वा स द्वाविंशतितमस्तीर्थङ्करः पूर्वसिंहासने पूर्वाभिमुख उपाविशत्, तत्कालं चाऽन्यास्वपि दिक्षु श्रीनेमिनाथप्रतिरूपाणि रत्नसिंहासनस्थितानि व्यन्तरदेवा विकुर्वणयाञ्चक्रुः। अथ चतुर्विधा देवा देव्यश्च यथास्थानं चन्द्रे चकोरा इव स्वामिमुखे दत्तदृशस्तस्थुः। तथा च तत्रोपवने समवसृतं स्वामिनं तदुद्यानपालका गत्वा केशवायाचख्युः, तदा कृष्णो रूप्याणां सार्धद्वादशकोटीस्तेभ्यो वनपालकेभ्यः प्रदाय, गजारूढो नेमिनाथवन्दनोत्कण्ठः प्रचचाल। दशभिर्दशार्हैर्मातृभिः कोटिसङ्ख्यैः कुमारैः समस्ताऽन्तःपुरेण षोडशसहस्रराजभिश्च परिवृतो महत्यर्द्ध्या हरिः समवसरणं जगाम। दूरादपि गजादुत्तीर्य, सर्वाण्यपि च राजचिह्नान्यपास्य, उत्तरद्वारेण तत्समवसरणप्राकारे केशवः प्रविवेश। तत्र श्रीनेमिं त्रिः प्रद-

क्षिणीकृत्य नत्वा चाऽनुसौधर्मेन्द्रं निषसाद, अन्येऽपि च यथास्थानमुपाविशन् । अथ इन्द्र-गोविन्दौ पुनः प्रभुं प्रणम्य भक्तिभरगर्भितवचनेन स्तोतुं प्रारेभाते—"हे जगन्नाथ ! समस्तजगदुपकारिणे आजन्म ब्रह्मचर्यधारिणे कृपालताजलदाय भव्यजीवतायिने तुभ्यं नमोऽस्तु । प्रभो ! त्वं भाग्येन चतुःपञ्चाशद्दिनैरपि शुक्लध्यानेन घातिकर्माणि क्षपितवानसि । नाथ ! केवलं यदुकुलं त्वया न विभूषितं, किन्तु केवलज्ञानालोकसूर्येण इदं जगत्त्रयमपि अलङ्कृतम् । हे जिनेन्द्र ! हे यदुकुलगगनदिनकर ! अगाधोऽप्ययं भवसागरो भवत्पादप्रसादतो निश्चितं गोष्पदमात्रो भवेत् । तीर्थनाथ ! यदुवंशमण्डन ! ललनाललितैः सर्वस्य चित्तं भिद्यते, परं वज्रतुल्यहृदयोऽभेद्यस्त्वमेक एव त्रिजगत्यपि विद्यसे, नाऽन्यः कश्चित् । स्वामिन् ! त्वयि व्रतग्रहणनिषेधिन्यो बन्धूनां ता वाण्यः सम्प्रति तवेमां सम्पदं पश्यतामतीव पश्चात्तापाय भवन्ति । दुराग्रहैः स्वजनवर्गैस्तदा त्वं भाग्येन न स्खलितः, अथ जगत्पुण्यैरस्खलितोत्पन्नकेवलज्ञान हे प्रभो ! नो भवाम्बुधिपतनाद् रक्ष रक्ष । यत्र तत्र स्थितस्यापि यदा तदा च कार्यं कुर्वतो मे हृदये त्वमेक एव भूयाः, अन्येन किं प्रयोजनम् ?" ।

इति स्तुत्वा तयोः शक्र-कृष्णयोर्विरतयोस्ततः प्रभुः सर्वभाषाऽनुगवाण्या धर्मदेशनां दातुं लग्नः—"सर्वशरीरिणां सम्पदो विद्युद्विलासादतीवचपलाः, संयोगाश्च स्वप्नप्राप्तार्थसदृशा महावियोगान्ताः, यौवनं मेघच्छायासमानं गमनस्वभावं, प्राणिनां शरीराण्यपि जलबुद्बुदप्रायाणि, तस्मादसारेऽस्मिन् संसारे सारं

किमपि नो विद्यते, एकं दर्शन-ज्ञान-चारित्रपरिपालनं तु सारमस्ति । नवानामपि तत्त्वानां श्रद्धानं सम्यग्दर्शनं कथ्यते, यथावस्थितानां तेषां तत्त्वानां बोधो ज्ञानमुच्यते, सावद्ययोगविरमणं मुक्तिकारणं चारित्रं कीर्तितम्। तच्चारित्रं साधूनां सर्वतो गृहस्थानां च देशतः स्यात्। यो देशचारित्रविरतो, विरतानां सेवाकारी, संसारस्वरूपं च जानानः स श्रावकः समुच्यते । श्रावको मद्यं, मांसं, म्रक्षणं, मधु, उदुम्बरपञ्चकम्, अनन्तकायम्, अज्ञातं फलं, रजनीभोजनं, अपक्वगोरससंपृक्तद्विदलं, पुष्पितौदनं, दिनद्वयातीतं दधि, कुथितान्नं च वर्जयेत् । एवं दयाप्रधानः श्रावकः सन् भोज्येष्वपि विचारमतिरनुक्रमेण संसारसागरान्निस्तारं प्राप्नोति" । इति प्रभोस्तां देशनां श्रुत्वा वरदत्तनृपः संसारात् परं वैराग्यं प्राप, दीक्षाग्रहणोत्सुकश्च संजातः ।

अथः कृष्णः प्रणम्य प्रभुं पप्रच्छ—'प्रभो! त्वयि सर्वोऽपि रागवान्, परमस्या राजीमत्या विशेषाऽनुरागे किं नु कारणम् ?'। ततः श्रीनेमिरपि धन-धनवतीभवादारभ्य तया सार्धं स्वसम्बन्धम् अष्टभवावधि कथयामास । अथ वरदत्तनृप उत्थाय नत्वा च कृताञ्जलिः स्वामिनं विज्ञपयामास—"हे नाथ ! त्वत्तः श्राद्धधर्मोऽपि प्रपन्नः प्राणिनां महाफलदायी स्यात्, यथा स्वातिनक्षत्रजलं शुक्त्यां मुक्ताफलकारणं भवति । परं त्वयि गुरौ प्राप्ते तावता नाऽहं संतुष्यामि, को हि कल्पतरौ प्राप्ते पात्रमात्रमभीप्सति ? । तेन कारणेन तव प्रथमशिष्यत्वम् अहमभीप्सामि, दयानिधे ! दयां कुरु, भवसमुद्रतारणी च दीक्षां

देहि' । इत्युक्तवन्तं तं राजानं प्रभुः स्वयं प्राव्राजयत्, तदनु च क्षत्रियाणां सहस्रद्वयं प्राव्रजत् । धनदेव-धनदत्तौ यौ धनभवे बान्धवौ, तथाऽपराजितभवे यो विमलबोधो मन्त्री, ते त्रयोऽपि स्वामिना समं संसारं भ्रान्त्वाऽस्मिन् भवे राजानोऽभूवन् । ते च त्रयोऽपि तत्र समवसरणे आयाता अभूवन्, राजीमतीप्रसङ्गाच्च पूर्वभवैः श्रुतैरेव उत्पन्नजातिस्मृतयो जातपरमवैराग्याः प्रभोः समीपे तदैव व्रतं जगृहुः । श्रीनेमिनाथस्तैः समं वरदत्तादीन् एकादश गणधरान् यथाविधि स्थापयामास । स्वामी तेभ्य उत्पाद-व्यय-ध्रौव्यात्मिकां त्रिपदीं ददौ, तत्त्रिपद्यनुसाराच्च ते द्वादशाङ्गीं रचयामासुः । अथ भूरिकन्यासमावृता यक्षिणी राजकन्या प्राव्रजत्, तां च स्वामी प्रवर्तिनीपदे प्रत्यष्ठापयत् । दश दशार्हा, राम-केशवौ, उग्रसेनो नृपः, प्रद्युम्न-शाम्बाद्याश्च कुमाराः श्राद्धत्वमङ्गीचक्रिरे । शिवादेवी-रोहिणी-देवकी-रुक्मिणीप्रभृतयो राज्ञ्योऽन्याश्च योषितः स्वामिसमीपे श्रावकधर्मं प्रपेदिरे । एवं तस्मिन् समवसरणे प्रभोः सङ्घोऽभूत् । प्रातःकाले प्रथमपौरुष्यां प्रभुर्देशनामदात्, द्वितीयपौरुष्यां तु वरदत्तगणधरो देशनां ददौ । ततो भगवन्तं प्रणम्य शक्राद्याः सुराः कृष्णादयश्च राजानः स्वं स्वं स्थानं ययुः । तत्तीर्थजन्मा त्रिवदनः श्यामवर्णः पुरुषवाहनो बीजपूर-पर्शु-चक्रसंयुक्तदक्षिणकरत्रयो नकुल-त्रिशूल-शक्तिसहितवामकरत्रय एवंविधो गोमेधनामा

क्षिणकरद्वया पुत्रा-ऽङ्कुशसहितवामकरद्वया कुष्माण्डीति द्वितीयनामधारिणी अम्बिका प्रभोः शासनदेवी समभवत् ।

अधिष्ठितो निर्जर-निर्जरीभ्यां[1], ताभ्यां स नेमिर्विहितुं[2] विहारम् ।
ऋतुद्वयं[3] मासचतुष्टयेन, व्यतीत्य तेनाऽचलदन्यदेशे ॥ १ ॥

॥ इति पण्डितश्रीकनकविजयगणिचरणपङ्कजभ्रमरसदृश-श्रीगुणविजयगणिविरचिते श्रीमदरिष्टनेमिचरिते सुललितगद्यबन्धे श्रीनेमिनाथकुमारावस्थाक्रीडा-दीक्षाग्रहण-केवलज्ञानोत्पत्तिवर्णनो नाम दशमः परिच्छेदः ॥ १० ॥

## अथ एकादशः परिच्छेदः ।

इतश्च पञ्च पाण्डवाः कृष्णमहाराजप्रसादात् स्वपुरे स्थिता हृष्टा वारकेण द्रौपद्या सार्द्धं रेमिरे । अन्यदा भ्रमन्नारदो द्रौपद्या गृहे समागात्, परं तया तु 'अयमविरतः' इत्यवज्ञाय नाऽभ्युत्थानदानादि-

---

१ देव-देवीभ्याम् । २ विधातुम् । ३ वर्षाशरद्रूपम् ।

ना सत्कृतः । तत 'एषा कथं नु दुःखभाजनं भाविनी ?' इति चिन्तयन् विरुद्धो नारदः क्रुद्धस्तद्गृहान्निरगात् । अत्र कृष्णभयेन तस्या हरणकारकमपश्यन् ततो धातकीखण्डभरतेऽगात् । तत्र चम्पानगरीपतेः कपिलाभिधस्य वासुदेवस्य सेवकं पद्मनाभम् अमरकङ्कानगरीराज्यकारिणमभिजगाम । स राजा उत्थाय सत्कृत्य च तं मुनिमन्तःपुरे नीत्वा निजस्त्रीः प्रदर्शयन्नूचे—'हे नारद ! ईदृश्यो वनितास्त्वया क्वापि दृष्टाः ?' । तदा 'ममाऽर्थोऽनेन सेत्स्यति' इति विमृशन्नारदो बभाषे—'हे राजन् ! कूपमण्डूकवत् त्वमेताभिः स्त्रीभिः किं प्रमोदसे ? । जम्बूद्वीपस्य भरतक्षेत्रे हस्तिनापुरे पञ्चपाण्डवानामग्रमहिषी द्रौपदीति शोभास्पदं वर्तते, तस्याः पुरस्तात् तवैता हि स्त्रियः सर्वा अपि चेट्यः !' । इत्युक्त्वा नारद उत्पत्य ततो ययौ । अथ द्रौपदीमीप्सुः पद्मनाभः पातालवासिनं पूर्वसङ्गतिकं देवं तपसाऽऽराधयामास । प्रत्यक्षीभूतं देवं 'किं करोमि ?' इति कथयन्तं पद्म ऊचे—'अत्र द्रौपदीमानीय मह्यमर्पय' । तदा सोऽप्याख्यत्—'स्वपतीन् मुक्त्वा नान्यं नरं द्रौपदी वाञ्छति, परं त्वदाग्रहादानयामि' इत्युक्त्वा हस्तिनापुरे जगाम । ततोऽवस्वापनीं निद्रां दत्त्वा निशि सुप्तां द्रौपदीमपहृत्य समानीय च स देवः पद्माय ददौ । तत्र प्रबुद्धा द्रौपदी निजं स्थानमप्रेक्षमाणा विधुरा 'किं स्वप्नमथवा इन्द्रजालम् ?' इति हृदये चिन्तयामास । ततस्तां पद्मो बभाषे—'हे मृगलोचने ! मा भैषीः, त्वं मयाऽऽनायिताऽसि, मया च समं यथेष्टं भोगान् भुङ्क्ष्व । इयममरकङ्का पुरी, अत्राऽहं पद्मनाभो राजा तव सम्प्रति पतिर्बुभूषुरस्मि' । ततः प्रत्युत्पन्नबुद्धिः सा सती

तं नृपाधमं बभाषे–'यदि मासान्तरे मदीयः कोऽप्यत्र नागमिष्यति तदा त्वद्वचनं करिष्ये'। 'अत्र जम्बूद्वीपवासिनामागतिरशक्या' इति विमृशन् छद्मतत्परोऽपि हि पद्मस्तद्वचो मेने। 'मासपर्यन्तेऽप्यहं भर्तॄन् विना न भोक्ष्ये' इति शीलव्रतमहाधना सा उत्कृष्टमभिग्रहं जग्राह।

अथ पाण्डवा अपि द्रौपदीं गृहेऽपश्यन्तो जल-स्थल-वन-गिरि-गह्वरादिषु गाढं विलोकयामासुः, परं तद्वार्तामपि न प्रापुः। ततस्तन्माता कुन्ती समागत्य केशवायाऽकथयत्, यतः स एव तेषां शरणं, स एव च कष्टेषु त्राता बान्धवश्च। कृष्णोऽपि हास्य-विषादवान् तां कथयामास–'हे पितृभगिनि! अहो तव पुत्राणां सुभटत्वं यत् स्वकामिनीमपि रक्षितुं न शक्ताः!। अथाऽहं शुद्धिं करोमि, यूयं गृहे गच्छत'। इति तेन प्रोक्ता कुन्ती स्वगृहेऽगात्। अथ कृत्यमूढः कृष्णो यावदस्थात् तावत् स्वयं कृतमनर्थं द्रष्टुं नारद आगात्। कृष्णेन सत्कृत्य 'किं भवता क्वापि द्रौपदी दृष्टा?' इति पृष्टः स ऊचे—अहं धातकीखण्डेऽमरकङ्कानगरीं गतोऽभूवं, तत्र पद्मनाभनृपस्य भुवने द्रौपदीसदृशीमेकां वनितामद्राक्षम्, अन्यत्तु किमपि न जानामि,!। इत्युक्त्वा स उत्पत्याऽन्यत्र जगाम। तदा केशवेन ज्ञातम्–'अस्यैव कलिप्रियस्येदं कर्तव्यम्!'। पश्चात् पाण्डवान् बभाषे–'भो भ्रातरः! युष्माकं प्रिया पद्मनाभेन हृताऽस्ति, परं मनागपि मा खेदं कुरुध्वम्, एषोऽहं तामाहरिष्यामि'। ततः पाण्डवसहितः केशवो महासैन्यपरिवृतो मगधाभिधानप्राचीनाम्भोधितटे जगाम। तत्र पाण्डवाः कृष्णमूचुः–"हे प्रभो! अयं संसार इव महाभीषणोऽगाध-

जलः सागरो दृश्यताम् । इह पर्वता अपि पाषाणवत् कुत्रापि मग्नास्तिष्ठन्ति, कुत्रापि पर्वतप्राया जलचरास्तिष्ठन्ति, कृतजलशोषप्रतिज्ञो वडवानलोऽत्र कुत्रचिद्वर्तते, धीवरा इव वेलन्धरदेवाः कुत्रचित्तिष्ठन्ति, अत्र कल्लोलैः कमण्डलुसदृशा मेघा अपि उद्वर्त्यन्ते, तेन कारणेनैष समुद्रो मनसाऽपि कथमुल्लङ्घनीयः ?" । तदा कृष्णो 'युष्माकं का चिन्ता ?' इति कथयित्वा, विमलाशयस्तीरे निषद्य अष्टमतपसा सुस्थितदेवमाराधयामास । तत्कालं स सुरोऽपि प्रकटीभूय 'किमहं करोमि ?' इति जगाद । केशवोऽप्यवदत्—'नृपाधमेन पद्मेन द्रौपदी हृताऽस्ति, सा यथा धातकीखण्डनाम्नो द्वीपात् शीघ्रमानीयेत तथा कुरु' । देवो बभाषे—'यथा पद्मस्य पूर्वसङ्गतिकसुरेण हृत्वा साऽर्पिता तद्वत्तां युष्मभ्यमहमर्पयामि; यद्वा इदं यदि युष्माकं न रोचते तदा ससैन्य-वाहनं पद्मं समुद्रे क्षिपामि, द्रौपदीं च युष्माकं ददामि' । कृष्णो जगाद—'हे लवणसमुद्राधिष्ठायक ! हे सुरपुङ्गव ! एवं मा कार्षीः, किन्तु मम पाण्डवानां च षण्णां रथानां जलमध्येऽनाहतं मार्गं देहि यथा स्वयं गत्वा तं वराकं विजित्य द्रौपदीमानयामः, नूनमेष मार्गोऽस्माकं यशस्करः' । तदा सुस्थितस्तथा चकार । कृष्णः सपाण्डवः सागरं स्थलमिवोल्लङ्घ्य अमरकङ्कां राजधानीं ययौ । तद्बहिरुद्याने स्थित्वा कृष्णेनाऽनुशिष्य दारुकसारथिर्दूतत्वे प्रेषितः । स पद्मनृपसमीपे गत्वा वामपादेन तत्पादपीठमाक्रामन् भ्रूकुटीभयङ्करदर्शनो ललाटपट्टारोपितत्रिवलिः कुन्ताग्रेण लेखमार्पयत् । ततः स दारुकः

१ कृता जलशोषणे प्रतिज्ञा येन सः ।

पद्मनाभमित्यब्रवीत्–'रे रे ! त्वया पाण्डवानां कृष्णवासुदेवबान्धवाना प्रिया द्रुपदनृपपुत्री जम्बूद्वीपस्य भरतादानीताऽस्ति । अथ च स कृष्णो राजराजः पाण्डुसुतैः सह समुद्रेणापि प्रदत्तमार्ग इहागतो विद्यते, अतोऽधुना यदि जीवितुं वाञ्छसि तदा त्वरितं तां सतीमर्पय' । पद्मोऽपि मनसि चमत्कारं ग्रासः, क्रुद्धश्चोचे–'स कृष्णस्तत्रैव वासुदेवः, इह तु आत्मषष्ठः स ममाऽग्रे कियान्? । अतस्त्वं गच्छ, सङ्ग्रामे च शीघ्रं सज्जय' । दारुकोऽप्यागत्य तद्वचनं कृष्णाय कथयामास । ततस्तत्कालं पद्मः संनह्य सेनया सह आगात् । सैन्येषु आपतत्सु सेराक्षः केशवः पाण्डवानित्यभाषत—'अत्र पद्मेन सार्धं किं भवन्तो योत्स्यन्ते?, अथवा किं रथस्थिता भवन्तो युध्यमानं मां प्रेक्षिष्यन्ते?' । ततस्ते कथयामासुः—"हे प्रभो ! पद्मेन समं वयम् 'अद्य राजा पद्मनाभो वयं वा' इति कृतप्रतिज्ञा योत्स्यामहे" । ततश्च ते पद्मेन समं युयुधिरे । तत्कालं तेन सबलसैन्येन नृपेण पाण्डवा भग्नाः । तदा पाण्डवाः कृष्णमागत्य इदमवदन्–'स्वामिन् ! अयं पद्मो बलीयान् बलवत्सैनिकसमावृतः, अतोऽस्माभिस्तु अजय्यः, त्वयैव जेष्यते, अतोऽत्र यथोचितं कुरुष्व' । तदा केशवः स्मित्वा जगाद–"ननु यूयं तदैव जिता यदा 'अद्य राजा पद्मो वयं वा' इति वचनं युष्माभिः कथितम् !" । ततो 'राजाऽहमेव, नो पद्मः' इत्युक्त्वा कृष्णो युद्धाय चचाल, घनशब्दं च पाञ्चजन्यं शङ्खं दध्मौ । विस्तृणवता सिंहनादेन मृगकुलस्य गतिरिव तच्छ-

१ जम्बूद्वीपस्य भरते एव । २ आत्मना षष्ठः ।

ध्वनिना पद्मनाभस्य बलत्रिभागोऽभज्यत । ततः केशवः शार्ङ्गं धनुरास्फालयत्, तद्ध्वनिना पुनस्तस्य बलत्रिभागो जीर्णरज्जुवद् अत्रुटत् । अथाऽवशिष्टतृतीयभागबलः पद्मो रणाङ्गणात् प्रणश्य शीघ्रमेवाऽमरकङ्कायां प्रविवेश, लोहार्गलासंयुक्तानि च गोपुराणि पिदधे । अथ कृष्णोऽपि क्रोधात् प्रज्वलन् रथादुत्ततार । ततो वैक्रियसमुद्घातेन नरसिंहरूपधारी जज्ञे, यम इव क्रुद्धश्च व्यात्तवदन-दंष्ट्राभयङ्करः सोऽत्यूर्जितं गर्जन् पाददर्दरं[1] विदधे, तेन हि वैरिणां हृदयैः समं पृथिवी चकम्पे, प्राकारकपिशीर्षाणि बभ्रंशुः, देवकुलान्यपि पेतुः, मणिकुट्टिमतलानि भुवनानि च नरसिंहपाददर्दरैर्व्यशीर्यन्त । तत्पुर्यां नरसिंहभयात् केऽपि गर्तेषु लिलियिरे, केऽपि पानीयेषु प्राविशन्, केऽपि च मूर्च्छिता निपेतुः । अस्मिन् समये भीतः पद्मो द्रौपदीं विज्ञपयामास–'हे देवि ! ममापराधः क्षम्यताम्, यमादिवाऽस्मात् केशवाद् रक्ष रक्ष' । इति जल्पन्तं स्वशरणमागतं पद्मं प्रेक्ष्य सा प्रोचे–'भोः पद्म ! मामग्रे कृत्वा स्वयं च स्त्रीवेषं विधाय कृष्णं शरणं प्रयाहि, तथा जीविष्यसि, न चाऽन्यप्रकारेण' । इत्युक्तः स तथैव चक्रे, केशवस्य चरणयोश्च पपात । 'इयं का ?' इति कृष्णेन पृष्टा द्रौपदी कथयामास–'यो भवतामपराधकर्ता स एवाऽयं पद्मराजः' । तदाऽतिक्रुद्धो हरिर्बभाषे–रे रे नृपाधम ! स्त्रीवेषधरत्वेन मुक्तोऽसि, अरे लम्पट ! मम प्रसादेन याहि,

१ पादघातम् ।

स्वकुटुम्बानि संमिल'। ततः स केशवं नत्वा द्रौपदीं चाऽर्पयित्वा स्वस्थानमगात्। कृष्णोऽपि त्वरितं रथमारूढो द्रौपदी-पाण्डवसहितस्तेन मार्गेण चचले।

तदा च चम्पापुर्यां पूर्णभद्रोद्याने मुनिसुव्रतजिनः समवासार्षीत्। तत्पर्षदि उपविष्टः कपिलवासुदेवः कृष्णपूरितशङ्खध्वनिमाकर्ण्य प्रभुं पप्रच्छ–'हे स्वामिन्! मम शङ्खनाद इवाऽतीव चमत्कारकारी अयं कस्य शङ्खनादः?'। तदा स्वामी जगाद—'जम्बूद्वीपभरतार्धस्वामिनः कृष्णनाम्नो वासुदेवस्याऽयं शङ्खध्वनिः'। इति भगवतोक्ते 'किं द्वौ विष्णू एकत्र स्याताम्?' इति पुनः कपिलोऽपृच्छत्। भगवानपि द्रौपदी-पद्म-कृष्ण-पाण्डववृत्तान्तमवादीत्। ततः कपिल एवमूचे–'हे नाथ! मम साधर्मिकस्य इहाऽभ्यागतस्याऽतिथेः किमहं स्वागतिको भवामि?'। तदा स्वामी जगाद–'एकत्र द्वितीयोऽर्हन् चक्री वासुदेवो बलदेवः प्रतिवासुदेवश्च कदापि न मिलति, तेन कारणेन कारणागतेनाऽनेन समं तव मिलनं नो भावि'। इति जिनवचनं श्रुत्वाऽपि कपिलोऽत्युत्कण्ठया कृष्णं विलोकितुं कृष्णरथसीमन्तितमार्गे समुद्रतटे ययौ। तत्र समुद्रमध्ये गच्छतः कृष्णस्य रजत-स्वर्णपात्रसदृशान् श्वेत-पीतरथध्वजान् ईक्षाञ्चक्रे। ततः स 'कपिलनामाऽहं विष्णुस्त्वां प्रेक्षितुमागतोऽस्मि, तद्वलस्व' इत्यक्षरसंयुक्तं शङ्खं दध्मौ। तदा कृष्णोऽपि 'वयं दूरमागमाम, अथ भवद्भिः किञ्चिन्न वाच्यम्' इति प्रकटाक्षरं शङ्खं पूरयामास। तच्छङ्खध्वनिं श्रुत्वाऽसम्पूर्णेच्छः कपिलवासुदेवो चचले। अमरकङ्कापुरीं गत्वा 'किमेतद्?' इति पद्ममवदत्। पद्मोऽपि स्वापराधमकथयत्,

जजल्प च—'हे प्रभो ! त्वयि सत्यपि जम्बूभरतस्वामिना कृष्णेनाऽहं पराभूतः !'। तन्निशम्य कपिलोऽब्रवीत्—'रे रे दुरात्मन् ! त्वया कृतमन्यायं सोऽसमानबलः किं सहते ?, अहमपि अन्यायस्य पक्षपाती नाऽस्मि'। इति कथयित्वा क्रुद्धेन तेन कपिलेन पद्मो निर्वासितः, तद्राज्ये च तस्य पुत्रः स्थापितः।

अथ कृष्णः समुद्रमुत्तीर्य पाण्डवानेवमुवाच—'अहं यावत् सुस्थितं सुरमापृच्छे तावद् भो ! यूयं गङ्गानदीमुत्तरत'। ततस्ते नावं चटित्वा द्वाषष्टियोजनविस्तीर्णम् अतिभीषणं गङ्गाप्रवाहमुत्तीर्य परस्परमिदमवदन्—'अद्य विष्णोर्बलं विलोकयामः, अत्रैव नौका धार्यताम्, नावं विना तु गङ्गाप्रवाहं कथमसौ उत्तरिष्यति ?'। एवं ते कृतसङ्केता गङ्गानदीतटे निलीय तस्थुः। इतश्च कृतकार्यः सन् कृष्णराजो गङ्गामागात्। तत्र नावमपश्यन् एकस्मिन् भुजे सतुरङ्गमं रथं न्यस्य अन्यभुजेन तरीतुं लग्नः। यावद् गङ्गामध्ये गतस्तावद् अत्यन्तं श्रान्तः केशवश्चिन्तयामास—'अहो ! पाण्डुसुताः समर्था यद् नावं विना गङ्गां तेरुः'। तदा तं श्रान्तं ज्ञात्वा गङ्गा क्षणादपि स्ताघं ददौ, ततस्तत्कालं केशवस्तां सुखेनोत्ततार। तत्र स पाण्डवानूचे—'युष्माभिर्गङ्गा कथमुत्तीर्णा ?'। 'अस्माभिर्नौकया उत्तीर्णा' इति ते केशवाय कथयामासुः। तदा 'वालयित्वा नौः किं न प्रेषिता ?' इति कृष्णेन पुनरप्युक्तास्तेऽवोचन्—'युष्मद्बलं परीक्षितुं हि नौका न प्रेषिता'। तदा कुपितः कृष्णो जगाद—'भो भो ! यूयं मद्बलं सम्प्रति ज्ञास्यथ !, किं समुद्रतरणेऽमरकङ्कायां

पद्मजये च न ज्ञातम् ?'। इति कथयित्वा हरिर्लोहदण्डेन तेषां रथान् ममर्द, तत्र च रथमर्दननामकं पत्तनमभूत्। ततो विष्णुः पाण्डवान् देशरहितांश्चक्रे, स्वयं च ससैन्येन संभूय द्वारावती ययौ।

अथ पाण्डवाः स्वपुरं गत्वा तत् कुन्तीं कथयामासुः। साऽपि द्वारकां गत्वा वासुदेवमूचे—'त्वया निर्वासिता मम पुत्राः कुत्र तिष्ठन्तु ?, यतोऽस्मिन् भरतार्धे सा भूमिर्नास्ति या भवतो न भवेत्'। कृष्णः प्राक्क्रुद्धोऽपि तस्या उपरोधेन एवमुवाच—'दक्षिणसमुद्रतटे पाण्डुमथुराभिधां नूतनां नगरीं निवेश्य तव सुता वसन्तु'। इति श्रुत्वा ततः कुन्ती गत्वा तां केशवाज्ञां सुतेभ्यः कथयामास। ततस्ते समुद्रवेलापवित्रितं पाण्डुदेशमीयुः। कृष्णो हस्तिनापुरे स्वभगिन्याः सुभद्रायाः पौत्रम् अभिमन्युपुत्रं परीक्षितमभ्यषिञ्चत्।

इतश्च श्रीनेमिनाथः पृथिवीपीठं पावयन् क्रमेण भद्दिलपुरमाजगाम। तस्मिन् पुरे सुलसा-नागयोस्ते षट् पुत्रा आसन् ये देवक्युदरजाः प्राग् हरिणैगमेषिणा दत्ता अभूवन्। ते प्रत्येकं द्वात्रिंशतं कन्याः परिणिन्यिरे। अथ श्रीनेमिनाथेन प्रतिबोधितास्तु ते सर्वेऽपि दीक्षां जगृहुः। सर्वेऽपि ते चरमशरीरिणो द्वादशाङ्गधरा महातपस्तपस्यन्तः स्वामिना सह विहारं चक्रुः। इतश्च श्रीनेमिजिनो विहारं कुर्वन् द्वारकानगरीमाययौ, सहस्राम्रवणोद्याने च समवासार्षीत्। ते षड् देवकीसुताः षष्ठतपःपारणार्थिनस्त्रिधा युग्मिनो भूत्वा द्वारकापुरीं प्राविशन्। तेभ्योऽनीकयशो-ऽनन्तसेनौ देवकीगृहं जग्मतुः। तौ कृष्णसदृशौ प्रेक्ष्य अतीव प्रमुद्य देवकी सिंहकेसरैर्मोदकैः प्रत्यलाभयत्, ततस्तौ गतौ। तदनन्तरं च अपरौ तद्भ्रातरौ

अजितसेन-निहतशत्रू ईयतुः, तावपि सा तथैव प्रत्यलाभयत् । ततश्च अन्यौ देवयशः-शत्रुसेनौ उपेयतुः, तौ प्रति नत्वा देवकी रचिताञ्जलिरिति पप्रच्छ—'किं यूयं पुनः पुनर्दिग्मोहादिहागताः ?, किं वा यूयं ते एव न हि, अयं मम मतिमोहो जातः ? । अथवा किं सम्पदा स्वर्गतुल्यायामप्यस्यां नगर्याम् उचितं भक्त-पानादिकं महर्षयो न प्राप्नुवन्ति ?' । तदा तौ ऊचतुः—'अस्माकं दिग्मोहो न विद्यते, अस्यां नगर्याम् उचिताऽन्न-पानाद्यप्राप्तिरपि नास्ति, लोकोऽपि निर्भावो न विद्यते; किन्तु वयं षड् भ्रातरो भद्दिलपुरनिवासि-सुलसा-नागयोर्नन्दनाः स्मः, श्रीनेमिजिनसमीपे धर्मं श्रुत्वा षडपि प्राव्रजाम, त्रीणि च युगलानि भूत्वा तव गृहे क्रमेणागताः' । तन्निशम्य देवकी दध्यौ—'एते हि षडपि कृष्णस्य सदृशाः कथं सन्ति ? एवं हि तिला अपि तिलस्य तुल्या न भवन्ति । पूर्वं ननु अतिमुक्तकमुनिना जीवदष्टपुत्राऽहमाख्याताऽस्मि[1], तेन हेतुना किं नु एते मम सुताः स्युः ?' । एवं विमृश्य द्वितीयदिने संशयं प्रष्टुं समवसरणे श्रीनेमिसमीपे देवकी जगाम । स्वाम्यपि अग्रतस्तद्भावं विज्ञाय बभाषे—'हे देवकि ! अमी तव षड् सुता ननु जीवन्तो नैगमेषिणा सुलसाया अर्पिता अभूवन्' । तद् भगवतो वदनान्निशम्य अथ सा तान् षट् सुतान् उत्स्रवत्स्तनी पश्यन्ती अवन्दत, अभाषत च—'हे सुता ! यूयं महाभाग्येन दृष्टाः । मम पुत्राणामुत्कृष्टं राज्यम् अथवा दीक्षा, किन्तु एतन्ममाऽतीव खेदाय भवति यत् स्वयं मयैकोऽपि न लालितः' । ततो भगवान्

१ जीवन्तोऽष्टौ पुत्रा यस्याः सा, अष्टमः सुतो भावीत्यपेक्षया प्रोक्तमिदम् ।

जगाद—'देवकि ! मुधा मा खिद्यस्व, एतद्धि पूर्वभवकर्मफलम् इह भवे उदये आगतम् । पुरा भवे त्वं सपत्न्या रत्नसप्तकमहार्षीः, रुदत्यास्तस्याः पुनस्त्वया एकं रत्नमर्पितम्' । इति प्रभोर्मुखात् स्वकीयं प्राग्भवाधिकारं श्रुत्वा सा देवकी आत्मप्राग्जन्मपापं निन्दन्ती स्वगृहं ययौ, पुत्रजन्माऽभिलाषवती च चिन्तातुरा तस्थौ । तदा केशवेन 'मातः ! किमेवं दुःखिनी ?' इति प्रोक्ता सती सा बभाषे—"मम निष्फलेन जीवितव्येन किम् ? । त्वं नन्दगोकुले वर्धितः, तव षड् भ्रातरश्च सुलसा-नागगृहे वर्धिताः, कोकिलावद्[1] मया किमपि अपत्यं नो लालितं, स्तन्यपानं च नो कारितम्, हे कृष्ण ! तद् बाललालनकुतूहलात् पुत्रमिच्छामि । ते पशवोऽपि धन्या ये हि स्वयं स्वापत्यलालकाः" । तत 'एषोऽहं तव वाञ्छां पूरयामि' इत्युक्त्वा हरिर्ययौ, शक्रसेनान्यं च नैगमेषिणमष्टमभक्तेनाराधयामास । सोऽपि प्रत्यक्षीभूतः कथयामास—'तव मातुरष्टमपुत्रो भावी, परं स महापुण्यात्मा उद्भिन्नयौवनः प्रव्रजिष्यति' । तन्निशम्य केशवो हृष्टः । अनु तद्वचनं देवलोकाच्च्युत्वा महर्द्धिको देवो देवक्याः कुक्षिमागात् । समये सुतो बभूव । गजसुकुमाल इति नाम प्रतिष्ठितम् । रूपतः परं कृष्णमिव तं देवकुमारसमानं देवकी स्वयमतीवानन्देन लालयामास । सोऽतीव मातुर्वल्लभो भ्रातुश्च प्राणसदृश उभयोर्नेत्रचकोरचन्द्रः क्रमेण यौवनमाससाद । द्रुमनाम्नो नृपस्य

---

१ कोकिलाया अपत्यानि काक्या लाल्यन्ते इति लोकप्रसिद्धिः ।

कन्यां प्रभावतीं पित्राऽतीवाग्रहाद् गजसुकुमालः परिणायितः। तथा सोमशर्मविप्रसुतां क्षत्रियाणीभवां सोमानाम्नीं कन्यां सोऽनिच्छन्नपि मातृ-भ्रात्रोर्निर्बन्धाद् उपयेमे ।

तदा च तत्र श्रीनेमिः सहस्राम्रवणे समवसृतः। तत्पार्श्वे गजसुकुमालः सभार्योऽवहितः सन् धर्मं शुश्राव। ततश्च उत्पन्नमहावैराग्यः पत्नीभ्यामन्वितः कथञ्चित् पितरौ भ्रातॄंश्च समनुज्ञाप्य स्वामिसमीपे दीक्षां जग्राह। तस्मिंस्तु प्रव्रजिते तद्वियोगातुराः पितरौ केशवादयो भ्रातरश्चाऽतीव रुरुदुः। गजसुकुमालः सन्ध्यायां स्वामिनं[1] पृष्ट्वा श्मशानमध्ये प्रतिमया स्थितः, बहिर्गतेन च सोमशर्मणा दृष्टः। तदा स उत्पन्नक्रोधश्चिन्तयामास-'एष दुराशयः पाखण्डचिकीर्विडम्बनाय मम पुत्रीं परिणीतवान्'। इति जन्मान्तरवैरात् स क्रुद्धो विरुद्धधीस्तन्मस्तके ज्वलच्चिताङ्गारपरिपूर्णं घटीकण्ठं[2] मुमोच। तेन तापेनाऽतिदह्यमानोऽपि स समाधिमान् अधिसेहे, ततो दग्धकर्मेन्धन उत्पन्नकेवलज्ञानः शिवं ययौ।

प्रातः सपरीवारः केशवः स्वामिनं वन्दितुं गजसुकुमालं च द्रष्टुमुत्कण्ठापूर्णमनोरथो रथस्थितश्चचाल। द्वारकायाश्च निर्गच्छन् स बहिरेकं वृद्धं द्विजं देवकुलं प्रति मूर्ध्ना इष्टका वहन्तं ददर्श। तस्याऽनुकम्पया केशवः स्वयमापाकाद्[3] इष्टकां तस्मिन् देवकुले निन्ये, ततस्तत्पृष्ठगा अपरेऽपि च कोटिशो लोका इष्टका निन्यिरे; एवं तं विप्रं कृतार्थं कृत्वा हरिर्नेमिसमीपे गतवान्। तत्र च आत्मना मुक्तं निधिमिव गजसुकु-

१ श्रीनेमिनाथम्। २ स्फुटितघटकपालम्। ३ यत्र इष्टकाः पच्यन्ते तत्स्थानमापाकम्।

मालं नाऽपश्यत् । ततः केशवः 'क मे बान्धवो गजः ?' इति स्वामिनं पप्रच्छ । भगवानपि सोमशर्मद्विजाद् गजसुकुमालं मोक्षगतमाचख्यौ । ततो गोविन्दो मूर्च्छितः, क्षणाच्च लब्धसंज्ञः पुनरपि प्रभुं पप्रच्छ—'भ्रातृवधकर्ता स मया कथं ज्ञातव्यः ?' । स्वाम्यप्यवदत्—"सोमशर्मण उपरि मा कुपः, स हि त्वद्भ्रातुः सद्यो मोक्षसाधने सहायो जातः। चिरसाध्याऽपि सिद्धिः सहायवशात् क्षणेन स्यात्, यथा त्वयाऽद्य वृद्धब्राह्मणस्य इष्टकाऽर्पणात् तत्कार्यसिद्धिः क्षणेन जाता । यदि सोमशर्मा त्वद्भ्रातुरीदृशं कर्म न कुर्यात् तदा तस्य सिद्धिर्ननु कालक्षेपं विना कथं स्यात् ? । योऽतिभयभ्रान्तो व्रजंस्त्वां पुर्यां प्रविशन्तं प्रेक्ष्य म्रियते तं भ्रातृघातकं जानीथाः" । तदा भगवन्तं नत्वा केशवो मुहुरप्यपृच्छत्—'हे प्रभो ! मम भ्रातुरुपरि सोमशर्मणो विप्रस्य ऐहलौकिकं पारलौकिकं वा वैरम् ?' । अथ भगवानपि प्राह—"भोः कृष्ण ! पूर्वभवे त्वद्भ्रातृजीवस्य स्त्रीत्वे तस्याः सपत्न्या कस्मादपि कार्यहेतोर्बहिर्गतया तस्याः समीपे स्वपुत्रो मुक्तः । तया स्त्रिया सपत्नीर्ष्यया तस्य बालस्य मस्तके तत्कालकृतोऽत्युष्णो रोट्टलको मुक्तः । तस्य तापेन स कुसुमसदृशो मृतः, तन्माता च गृहमागतया दृष्टः । तस्या अतीव दुःखमभवत्। उभे अपि ते स्त्रियौ आयुःक्षयेण मृत्वा कियतो नरक-निगोद-तिर्यग्भवान् भ्रान्त्वा, पश्चाद् अकामनिर्जरया क्षीयमाणेषु कियत्स्वपि कर्मसु मनुष्यत्वे आगते । ततः पुण्यकरणाद् द्वे अपि सुरावभूताम् । ततः स्थानाच्च्युत्वा तौ द्वावपि देवौ सोमशर्म-गजसुकुमालौ जातौ । बालकजीवस्तु सोमा जाता । अत्रापि पूर्वजन्मवैराद् 'दुष्टेनाऽनेन मम पुत्री

परिणीता विडम्बिता च' इति मिषाद् दृष्टमात्रतोऽप्युत्पन्नक्रोधेन सोमशर्मणा तव बान्धवो मारितः । नाऽन्यथा पूर्वभवार्जितं कर्म भवेत्"। अथेति प्रभोर्मुखान्निजभ्रातृपूर्वभवसम्बन्धं श्रुत्वा भवस्वरूपं जानन्नपि केशवो महामोहमोहितोऽतीव रुदन् भ्रातुः संस्कारादि स्वयमकरोत्। ततः स्वपुरीं प्राविशत्, सोमशर्माणं च तथा मृतमपश्यत्। तं रज्ज्वा पादयोर्बद्ध्वा नरैश्चतुरशीतिचतुष्पथेषु अभ्रमयत्, बहिश्च गृध्रादीनां नूतनं बलिं क्षेपयामास ।

गजसुकुमालशोकेन बहवो यादवा वसुदेवं विना च नव दशार्हा नेमिसमीपे प्रवव्रजुः । स्वामिनो माता शिवादेवी, सप्त सहोदरा, अन्येऽपि च कृष्णकुमाराः स्वामिपार्श्वे दीक्षां जगृहुः । राजीमत्यपि वैराग्येण स्वामिसन्निधौ प्रवव्राज, एकनासापुटा नन्दकन्या अन्याश्च बह्वयो यदुस्त्रियः श्रीनेमिनिकटे प्राव्रजन् । कृष्णः कन्यापाणिग्रहणकारापणप्रत्याख्यानाऽभिग्रहम् आददे, तेन हेतुना तस्य सर्वाः पुत्र्यः स्वामिसमीपे चारित्रं जगृहुः । तथा कनकवतीं रोहिणीं देवकीं च विना सर्वा अपि वसुदेवपत्न्यः श्रीनेमिपार्श्वे प्रवव्रजुः । कनकवत्यास्तु गृहेऽपि भवस्थितिं विचिन्तयन्त्याः सद्यस्त्रुटितसकलकर्मणः केवलज्ञानमा-

१ "अयं गजसुकुमालपूर्वभवसंबन्धः परम्परया श्रुतोऽत्रानीतोऽस्ति, परं कुत्रापि ग्रन्थे दृष्टो न विद्यते" इति ग्रन्थकारः श्रीमद्गुणविजयः ।

विर्वभूव । प्रभुणा ज्ञापितैः सुरैः सा कृतमहिमा स्वयं दीक्षां गृहीत्वा स्वामिसमीपे ययौ । नेमिं दृष्ट्वा ततो वने गत्वा त्रिंशद्दिनानि कृताऽनशना मृत्वा सा कनकवती शिवमगात् ।

रामपौत्रो निषधपुत्रः सागरचन्द्रकुमारोऽग्रतोऽपि विरक्तधीरणुव्रतधरोऽभूत्, तदा च स प्रतिमाधरो बभूव । स बहिर्गत्वा श्मशाने कायोत्सर्गं ललौ । तत्र च निरन्तरं तच्छिद्रान्वेषिणा नभःसेनेन दृष्टः । तदा स तमूचे–'रे पाखण्डिन् ! इदं किं करोषि ?, साम्प्रतं कमलामेलाहरणकपटफलं लभस्व' । इत्युक्त्वा दुष्टाशयः स नभःसेनस्तस्य शिरसि घटकण्ठकं निधाय चिताङ्गारैरपूरयत् । सुधीः सागरचन्द्रस्तत् सम्यगधिसह्य स्मृतपञ्चपरमेष्ठिनमस्कारो मृत्वा देवलोकं ययौ ।

अन्यदा शक्रः सभायां जगाद–'भरतक्षेत्रे कृष्णो दोषान् विहाय सर्वदा गुणकीर्तनं कुरुते, कदापि चाऽधमयुद्धैर्न युध्यते' । तद्वचनमश्रद्दधत् कश्चित्सुरो द्वारावतीमागात्, तदा च हरिः स्वेच्छया क्रीडितुं रथस्थः प्राचलत् । तेन देवेन मार्गे कृष्णाङ्गो मृतोऽतिदूरादपि समस्तं लोकं दुर्गन्धेन बाधमानो भषणो विकुर्वित. । तं प्रेक्ष्य केशवो जगाद–'अहो ! अस्य कृष्णाङ्गस्य शुनो मुखे श्वेता दशना मरकतरत्नस्थाले मुक्ताफलानीव अतीव शोभन्ते !' । अथ देवो हैयहरीभूय कृष्णस्य हयरत्नमपाहरत्, अनुपदं च धाविताન् कृष्णसैनिकान् जिगाय । ततः कृष्णः स्वयं दधावे, नेदीयांश्च तमवदत्–'रे रे ! किं ममाऽश्वरत्नं

१ श्वा । २ अश्वहरणकर्ता भूत्वा ।

हरसि ? इदानीं मुञ्च, क्व यास्यसि ?'। तदा स देव उवाच–'भोः ! मां युद्धे विजित्य स्वकीयमश्वं गृहाण'। कृष्णोऽपि बभाषे–'तर्हि त्वं रथमादत्स्व, यतोऽहं रथ्यस्मि'। देव उवाच–'मम रथेन गजादिना वा पर्याप्तम्, बाहुयुद्धाद्यैश्च युद्धैरपि सृतम्, किन्तु आवाभ्यां पृष्ठाभ्यां युद्धं क्रियते'। ततः केशवः प्रत्यब्रवीत्–'अहं त्वया जितोऽस्मि, अश्वं नय, यतः सर्वात्ययेऽपि नीचयुद्धेन नाहं कदापि युध्ये'। तदा स देवस्तुष्टः सन् शक्रप्रशंसनवृत्तान्तकथनपूर्वकं 'हे महाभाग ! वरं वृणु' इति केशवमुवाच। कृष्णोऽपि देवमूचे–'सम्प्रति द्वारकापुरी रोगोपसर्गविधुराऽस्ति, तच्छान्त्यै किञ्चिद्देहि'। तदा स सुरः कृष्णाय भेरीं ददौ; कथयामास च—'इयं त्वया षण्मास्यन्ते षण्मास्यन्ते स्वकीयपुर्यां वाद्या; अस्याः श्रुतेन शब्देन प्राक्तना रोगाः क्षयं यास्यन्ति, नवाश्च षण्मासीं यावन्न भाविनः'। इति कथयित्वा स देवो ययौ। ततः केशवस्तां भेरीं तथैवाऽवादयत्, तदा नगर्यां रोगशान्तिरभवत्। अथ भेरीख्यातिं श्रुत्वा कोऽपि आढ्यो दाहज्वरपीडितो देशान्तरादागात्। भेरीपालं चोवाच–'हे अनघ ! इदं द्रव्यलक्षं गृहाण, मम च पलमात्रं भेरीखण्डमुपकाराय देहि, कृपां कुरु'। भेरीपालोऽपि द्रव्यलुब्धस्तस्याः खण्डं दत्तवान्, चन्दनखण्डेन च श्लिष्टसन्धिना पूरयामास। सोऽर्थलुब्धस्तथैवाऽन्येभ्योऽपि ददौ यथा सा भेरी मूलादपि चन्दनच्छेदकन्था बभूव। अन्यदा तु पुर्यामुपद्रवे जाते केशवस्तां वादयामास, परं तन्नादो मशकनादवत् सभामपि नाऽत्यगात्। 'किमेतद् ?' इति हरिणा पृष्टाः प्रत्ययिताः पुरुषा द्रव्यलुब्धेन रक्षकेण तां भेरीं कन्थीकृतां कथ-

यामासुः। तदा क्रुद्धः कृष्णस्तं भेरीपालमहन्, देवाच्चाऽन्यां भेरीमष्टमतपसा लेभे, यतो महद्भिः पुरुषैः किं दुष्प्रापम् ?। ततः केशवो रोगशान्त्यै प्रागिव तां भेरीमवादयत्, धन्वतरि-वैतरणिनामानौ वैद्यौ च व्याधिचिकित्सायै आदिशत्। तत्र वैतरणिर्भव्यो यस्य या योग्या चिकित्सा तां कथयित्वा तस्याऽकरोत्, स्वमपि च भेषजमदात्। धन्वन्तरिस्तु पापान्वितां चिकित्सामकरोत्। तं मुनयोऽवदन्—'अस्माकं नेदमुचितम्'। तदा स पापाध्यवसायवान् तान् साधून् प्रतिबभाषे—'मया कोऽपि साधुयोग्य आयुर्वेदो नाऽपाठि, अतो मम वचनं मा कुरुध्वम्'। एवं तौ द्वावपि वैद्यौ तत्र पुर्यामचिकित्सताम्।

अन्यदा श्रीनेमिं केशवः पप्रच्छ—'एतयोः क्व गतिर्भविता ?'। अथ स्वामी आचचक्षे—"धन्वन्तरिवैद्यः सप्तमनरकेऽप्रतिष्ठानप्रस्तरे गमिष्यति। वैतरणिवैद्यस्तु विन्ध्याचलवने कपिर्भावी, तत्रैव च उद्यौवनो यूथाधीशो भविष्यति। तत्र वने एकदा सार्थेन बहवः साधवः समागमिष्यन्ति, तेष्वेकः साधुश्चरणे भग्नशल्यो भावी। स प्रतीक्षमाणान् अन्यान् साधूनेवं कथयिष्यति यद् 'अत्र मां मुक्त्वा यूयं यात, अन्यथा सर्वेऽपि सार्थभ्रष्टा मरिष्यथ'। ततस्ते तत्पादशल्यमाक्रष्टुमसमर्था दीनमनसस्तं छायास्थण्डिले मुक्त्वा प्रयास्यन्ति। अथ स यूथेशः कपिस्तत्रैष्यति, अग्रवानराश्च तं मुनिं दृष्ट्वा किलकिलारावं करिष्यन्ति। तत्कोलाहलरुष्टः स यूथपतिरग्रे स्थास्यति, तं च साधुं प्रेक्ष्य 'अहं कुत्रापि ईदृशजनं वीक्षितपूर्वी' इति

१ वीक्षित. पूर्वं येन सः।

ध्यास्यति । एवमीहापोहं कुर्वन् स स्वपूर्वभवं तच्च वैद्यकं संस्मरिष्यति । ततः पर्वताद् विशल्या-रोहिण्यौ औषध्यौ आनेष्यति । ततो विशल्यां दन्तैः पिष्ट्वा तस्य साधोः पादे निधास्यति, तत्कालं च विशल्यं तत्पादं व्रणसंरोहिण्या रोहिण्या रोहयिष्यति । ततश्च स 'द्वारकायामहं पूर्वभवे वैतरणिर्वैद्योऽभूवम्' इत्यक्षराणि तस्य साधोः पुरो लिखिष्यति । तच्चरित्रं श्रुतपूर्वी स मुनिस्तस्य धर्मं कथयिष्यति । ततः स कपिस्त्रिदिनाऽनशनं कृत्वा सहस्रारदेवलोके गमिष्यति । अवधिज्ञानाच्च सोऽनशनस्थस्वकीयशवस्य समीपस्थं नमस्कारान् ददतं तं मुनिं द्रक्ष्यति । तदैव स आगत्य भक्त्या तं मुनिं नत्वा चैवं वदिष्यति—'हे परोपकाररसिक मुनीन्द्र ! इयं मम महती देवर्द्धिस्त्वत्प्रसादेनाऽभूत्' इत्युक्त्वा स सुरस्तं मुनिं नीत्वा स्वकीयसाधुभिः सह योजयिष्यति । तत्र स साधुस्तेषां वानरकथां कथयिष्यति" । एवं श्रीनेमिमुखान्निशम्य केशवो धर्मं विशेषेण श्रद्दधत् स्वामिनं प्रणम्य ययौ । ततश्च भगवानपि विहारं कर्तुमन्यत्र जगाम ।

अन्यदा वर्षाकालारम्भे मेघवद् जगदाप्यायको[1] नेमिनाथो द्वारावत्यामागत्य समवसृतः । तदा शुश्रूषमाणः[2] केशवो बभाषे—'हे भगवन् ! यूयमन्येऽपि च मुनयो वर्षासु कथं न विहरध्वे ?' । स्वामी जगाद—'वर्षाकाले नानाप्रकारजीवाकुला पृथिवी, तेन कारणेन जीवाऽभयदातारो मुनयस्तत्र न सञ्चरन्ति' । कृष्णोऽपि बभाषे—'यद्येवं तर्हि परिवारेण सह भूयो गच्छदागच्छता मया भूयान् जीवक्षयो जायते, तद्

१ जगत्तृप्तिकरः । २ शुश्रूषां—सेवां कुर्वाणः ।

वर्षासु गृहाद्बहिरहं न निःसरिष्यामि' । इत्यभिग्रहं गृहीत्वा गत्वा च हरिर्निजगृहं प्राविशत्, 'प्रावृषं यावद् मम गृहे कस्यापि प्रवेशो नो देय' इति द्वाःस्थांश्च समादिदेश । अथ तत्र पुर्यां वीरनामा कुविन्दोऽतिवैष्णवोऽभूत्, स केशवं विलोक्य पूजयित्वा च बुभुजे, अन्यथा न । तदा च स हरिगृहे प्रवेशमलभमानो द्वारस्थो गोविन्दमुद्दिश्य दिवसे दिवसे पूजां चक्रे, परं कृष्णस्याऽदर्शनात् कदापि स नाऽभुङ्क्त । अथ वर्षासु व्यतीतासु हरिर्गृहतो निर्ययौ, तं सर्वे राजानः स वीरकश्च उपातिष्ठन्त । वासुदेवो वीरकं पप्रच्छ—'किं कृशोऽसि ?' । तदा द्वारपालास्तस्य यथावस्थं दौर्बल्यकारणं कथयामासुः । तच्छ्रुत्वा कृष्णः सकृपस्तं स्वगृहेऽस्खलितं चक्रे ।

ततश्च नेमिं नन्तुं कृष्णः सपरिवारोऽगात् । तत्र च प्रभुणा कथितं यतिधर्मं श्रुत्वा स्वामिनमित्यभाषत—'हे प्रभो ! अहं न श्रामण्यग्रहणे समर्थोऽस्मि, तथापि अन्यैर्दीक्षां ग्राहयितुं तांश्चाऽनुमोदयितुं मम नियमोऽस्तु । यः कश्चित् प्रव्रज्यां ग्रहीष्यति तमहं न निवारयिष्यामि, स्वपुत्रस्येव च तस्य दीक्षामहोत्सवं करिष्ये' । इति प्रभोरग्रेऽभिग्रहं गृहीत्वा विष्णुर्ययौ । अन्यदा विवाहयोग्याः स्वकन्या नन्तुमागताः, ता हरिरूचे—'यूयं स्वामिन्यो वा दास्यो भविष्यथ ?' । तदा ता अपि 'वयं स्वामिन्यो भविष्याम' इति केशवमूचुः । ततः स जगौ—'हे अनघाः ! तर्हि नेमिपार्श्वे प्रव्रजत' । इति क्रमेण स ता विवा-

---

१ पटाना निर्माता—तन्तुवायः ।

द्दार्हाः कन्याः प्राव्राजयत् । अन्यदा एका राज्ञी स्वकीयसुतां केतुमञ्जरीं बभाषे—"हे वत्से ! त्वं स्वतातेन पृष्टा सती निःशङ्कं 'प्रभो ! अहं दासी भविष्यामि, न तु स्वामिनी' इति भाषेथाः" । एवमनुशिष्य क्रमेण विवाहयोग्या सा मात्रा पितृसमीपे प्रेषिता ययौ । पित्रा पूर्ववदूचे, तदा साऽपि मातृशिक्षितं जगाद । तच्छ्रुत्वा कृष्णो मनसि दध्यौ—'मम पुत्र्यो भवाटवीमटिष्यन्ति, अवमाननां च प्राप्स्यन्ति, तन्न सर्वथा युक्तम् । अथाऽन्या अपि मातृशिक्षां यथा न वदन्ति तथाऽस्तु' । इति बुद्ध्या हरिर्वीरकुविन्दमभाषत—'त्वया उत्कृष्टं किं कार्यं कृतम् ?' । 'उत्कृष्टं तु मया किञ्चिन्न कृतम्' इति जल्पन्तं तं पुनरपि केशवः प्राह—'तथापि त्वं विमृश्य किञ्चिदपि कथय' । तदा वीरको हृष्टमना इति जगाद—"मया बदरीस्थः कृकलासः[1] पूर्वं पाषाणेन हत्वा पृथिव्यां पातितः !, स च मृतः । तथा रथाङ्गसंजातरेखायां[2] वहद् मार्गसलिलं मया वामपादेनाक्रम्य धृतं, तच्च दूरमेवाऽपासरत् ! । तथा वस्त्रपातघटमध्ये प्रविष्टा मक्षिका 'गिण गिण' इति शब्दायमाना मया द्वारे वामकरं दत्त्वा चिरं धृताः !" । इति निशम्य कृष्णो हृष्टः । अथ द्वितीयदिने सभास्थितः केशवो राज्ञां पुरोऽवदत्—'भो भो ! निजकुलस्याऽननुरूपं वीरकस्य चरितमस्ति !' । ततस्तेऽपि सावधानमनसः 'प्रभो ! चिरं जीव' इति भाषिणः श्रोतुमारेभिरे । पुनरपि कृष्ण एवमुवाच—"येन बदरीवने निवसन् रक्तस्फटाटोपो[3] नागो भूम्यायुधेन[4] निजघ्ने स ह्ययं

१ सरटः । २ रथचक्रेण संजातरेखायाम् । ३ रक्तायाः स्फटायाः—फणाया आटोपो यस्य सः । ४ भूमिशस्त्रेण ।

वेमंतिः क्षत्रियः । येन चक्रोत्खाता गङ्गा कलुपितपानीयं वहन्ती वामपादेन वारिता सोऽयं वेमतिर्ननु क्षत्रियः । तथा येन कलशीपुरे वसन्ती घोपवती सेना वामहस्तेनाऽपि रुद्धा स खल्वयं क्षत्रियः । ततो भो भोः क्षत्रियाः ! सुप्रकटपुरुपव्रतोऽयं मम जामाता योग्यः" । इत्युक्त्वा हरिर्वीरकं प्राह—'ममैपा पुत्री केतुमञ्जरी गृह्यताम्' । परं सोऽनिच्छन् भृकुटीभीपणेन केशवेनोक्तस्तु केतुमञ्जरीं परिणीय स्वकीयगृहे निन्ये । सा तद्गृहे शय्याधिरूढाऽस्थात्, वीरकस्तु निरन्तरं तदाज्ञाकारक आसीत्। अन्यदा केशवेन पृष्टम्—'हे वीर ! तवाज्ञां किं केतुमञ्जरी करोति ?, । तदा सोऽवक्—'हे प्रभो ! अहं हि तस्या आज्ञां किङ्करवत् करोमि !' । तदा कृष्णस्तमूचे—'सर्वं स्वकीयं कार्यं यदि तां हठान्न कारयिष्यसि तदा त्वां गुप्तिगृहे प्रवेक्ष्यामि' । अथ कृष्णाऽभिप्रायज्ञो वीरकः स्वगृहे गत्वा केतुमञ्जरीमवदत्—'वस्त्रार्थं पानं कुरुष्व, किं निश्चिन्ता आसीनैव तिष्ठसि ?' । तदा 'कोलिकस्त्वं किं मां न जानासि ?' इति विब्रुवाणां तां वीरकः कोपेन तुरिरज्जुभिर्निःशङ्कमताडयत् । ततः सा रुदती पितुः पार्श्वे गत्वा तं स्वपराभवमाख्यत् । कृष्णोऽप्यूचे—'हे पुत्रि ! त्वयैव स्वामिनीत्वं त्यक्त्वा दासीत्वं याचितम्' । साऽवदत्—'तर्हि यूयं मम सम्प्रत्यपि स्वामिनीत्वं प्रयच्छत' । केशवोऽकथयत्—'साम्प्रतं तु त्वं वीरकस्य वशेऽसि, मम वशे नाऽसि' । ततोऽतिनिर्बन्धतया प्रोक्तः केशवो वारितवीरकस्तां श्रीनेमिस्वामिसमीपे नीत्वा प्रव्राजयामास ।

१ तन्तुवायः ।

अन्यदा कृष्णः समस्तमुनीनां द्वादशावर्तवन्दनकं ददौ, अन्ये नृपास्तु निर्वीर्या निर्विण्णा अवतस्थिरे । वासुदेवाऽनुवर्तनतस्तत्पृष्ठतो वीरकोऽपि केशवभक्त्या सर्वेषां साधूनां द्वादशावर्तवन्दनमदात् । ततः कृष्णः स्वामिनं जगाद—'हे प्रभो ! त्रिशतषष्टिसङ्ग्रामैर्न तथाऽहं श्रान्तो यथाऽनेन वन्दनेन परिश्रान्तः' । तदा सर्वज्ञोऽपि कथयामास—'हे केशव ! भवताऽद्य बहु पुण्यं समुपार्जितम्, क्षायिकं सम्यक्त्वं तीर्थङ्करनामकर्म च स्वायत्तीकृतम् । तथा त्वया सप्तमनरकादुद्धृत्य तृतीयनरकयोग्यमायुर्बद्धं, तच्च प्रान्ते निकाचितं करिष्यसि' । इति निशम्य हृष्टमनाः कृष्णो बभाषे—'हे नाथ ! पुनर्वन्दनकं ददामि यथा मम पूर्ववद् मूलतोऽपि नरकायुस्त्रुटेत्' । स्वामी जगाद—'अतः परं तव द्रव्यवन्दनं स्यात्, फलं तु भाववन्दनात् प्राप्यते' । तदा केशवेन वीरकस्य फलं पृष्टः स्वामी जगाद—'अस्य फलं हि कायक्लेशो, यतोऽयं नूनं त्वच्छन्दाद् वन्दते'[1] । ततो भगवन्तं नत्वा भगवद्वचनं चेतसि भावयन् कृष्णः सपरिच्छदो द्वारकापुर्यां जगाम ।

एकदा श्रीनेमिनाथेन देशनामध्येऽष्टमी-चतुर्दश्यादिपर्वदिनमाहात्म्ये वर्ण्यमाने सति रचिताञ्जलिः केशवो जिनं नत्वा विज्ञपयामास—'हे स्वामिन् ! राज्यकार्यव्यग्रत्वात् सर्वेऽपि पर्वदिवसा मया आराद्धुं न शक्यन्ते, तेन वर्षमध्ये महत्तरमेकदिनं प्रसादीकुरु' । तदा भगवानुवाच—'संजातसार्धशतजिनकल्याणकं मार्गशीर्षमासश्वेतैकादशीदिनं महदस्ति । पूर्वमपि सुव्रतश्रेष्ठ्यादिभिराराधितं वर्तते' । तदा केशवेन पुन-

१ त्वदनुसरणात् ।

रपि प्रभोः पृष्टम्–'हे जिनेन्द्र ! कः सुव्रतश्रेष्ठी जातः ?' । ततो भगवता तस्य श्रेष्ठिनः सर्वोऽपि सम्बन्धः
कथितः, कृष्णश्च चमत्कारं प्रापितः । ततः कृष्णः प्रभुम् एकादशीतपोविधिं पप्रच्छ । स्वाम्यपि मौना-
न्वितगुणनादिविधिं सर्वं कथयामास । तच्छ्रुत्वा कृष्णः सप्रजस्तद् मौनैकादशीमहापर्वदिनमाराधयामास ।

अथ कृष्णस्य ढण्ढणाभिधायां राज्यां ढण्ढणाभिधः पुत्र उद्यौवनो बह्वीर्नृपकुमारीः परिणीतवान् ।
सोऽन्यदा स्वामिसमीपे धर्मं श्रुत्वा विरक्तमतिः पित्रा कृतदीक्षामहोत्सवः प्रवव्राज । ढण्ढणः स्वामिना
समं विजह्रे, बहूनां च साधूनां स मतोऽभूत् । एवं च तस्य तिष्ठतोऽन्तरायकं कर्म उदये आगात् । यत्र
यत्र स जगाम तत्र तत्र भक्तपानादि किञ्चिदपि न प्राप, तेन सार्धं च ये मुनयो ययुस्तेऽपि तथैव न
प्रापुः । ततस्ते साधवो नेमये इदं व्यजिज्ञपन्—'हे स्वामिन् ! त्रैलोक्यनाथस्य तव शिष्यः कृष्णस्य च पुत्रो
ढण्ढणर्षिर्महेभ्यधार्मिकोदारलोकायाम् अस्यां नगर्यां भिक्षामपि न लभते, तत्र किं कारणम् ?' । तदा
स्वामी जगाद–"पुरा मगधदेशे धान्यपूरकनाम्नि ग्रामे नृपाधिकारी पराशरनामा विप्र आसीत् । स ग्राम्यै
राजक्षेत्राणि अवापयत् । अथाऽन्यदा भोजने आगतेऽपि तान् कर्षकान् स विप्रो भोजनाय न मुमोच,
क्षुधितैस्तृषितैः परिश्रान्तैश्च वृषभैर्हालिकैश्च स द्विजो बलात् क्षेत्रे एकमेकं चापं पृथक् पृथगकर्षयत् । तेन
सोऽन्तरायं कर्मोपार्ज्य मृत्वा च कियन्तं भवं भ्रान्त्वाऽयं ढण्ढणोऽभवत्, साम्प्रतं च तत्कर्म एतस्यो-
दये आगतम्" । इति श्रुत्वा जातसंवेगो ढण्ढणः स्वामिसमीपे 'परलब्ध्या नाऽहं भोक्ष्ये' इत्यभिग्रहं

जग्राह । स तम् अलाभपरीषहं सहमानोऽन्यलब्ध्या चाऽभुञ्जानः कियन्तं कालमनयत् । अन्यदा सभासीनो वासुदेवः श्रीनेमिमपृच्छत्—'प्रभो ! एतेषां मुनीनां मध्ये को हि दुष्करकर्ता ?' । स्वाम्यपि कथयामास—'सर्वेऽमी साधवो दुष्करकर्तारः, परं ढण्ढणस्तु उत्कृष्टो यो हि अलाभपरीषहं सहमान इयन्तं कालमत्यगात्' । ततः प्रभुं नत्वा हृष्टः कृष्णो द्वारकापुरीं प्रविशन् गोचर्यर्थं गच्छन्तं ढण्ढणर्षिं ददर्श । तत्कालं गजादुत्तीर्य तं केशवोऽतिभक्त्या नमश्चक्रे । तदैकेन श्रेष्ठिना दृष्ट्वा चिन्तितम्—'एष कोऽपि धन्यो यो हि कृष्णेन वन्दितः' । ततो ढण्ढणोऽपि गोचर्यां परिभ्रमन् तस्यैव श्रेष्ठिनो गृहे आगात्, तदा बहुमानेन स तं प्रवरभक्त्या मोदकैः प्रत्यलाभयत् । ढण्ढणोऽप्यागत्य प्रभुं च नत्वा एवं विज्ञपयामास—'स्वामिन् ! किं ममाऽन्तरायं कर्म क्षीणं यत् स्वलब्ध्या भिक्षां प्राप्नवम् ?' । स्वाम्यूचे—'तवाऽन्तरायं कर्म न क्षीणम्, इयं लब्धिस्तु हरेरस्ति । हरिणा त्वं वन्दितोऽसीति भद्रकभावः श्रेष्ठी त्वां प्रत्यलाभयत्' । तच्छ्रुत्वा स रागादिरहितः 'परलब्धिरेषा' इति ध्यात्वा भिक्षां स्थण्डिलभूम्यां परिष्ठापयितुं प्रारेभे । तदा च 'अहो ! जीवानां पूर्वार्जितानि कर्माणि दुःक्षयाणि' इति स्थिरध्यानकारिणो भवस्वरूपं च चिन्तयतस्तस्य केवलज्ञानमुत्पेदे । ततो नेमिनं प्रदक्षिणीकृत्य केवलिसभायां देवैः पूजितः स उपाविक्षत् ।

भगवान् श्रीनेमिर्ग्रामाकरनगरादिषु विजह्रे । अन्यदा विहारं कुर्वन् पापादुर्गे आगात् । तत्र राजा भीमो, राज्ञी राजगृहाधीशजितशत्रु-कमलासुता सरस्वती अतीव मूर्खा । वन्दनार्थमागतेन तेन राज्ञा

प्रभुः पृष्टो जगाद—"पूर्वभवे पद्मराजस्य द्वे पत्न्यौ पद्मा-चन्दने । राज्ञा पद्मया एकगाथार्थः पृष्टः, तयोक्तः । तस्याः पतिमानं दृष्ट्वा चन्दनया पुस्तिका ज्वालिता । सा मृत्वा तेन कर्मणा तवेयं पत्नी मूर्खा जाता" । इति श्रुत्वा तयोक्तम्—'स्वामिन् ! कथं मे ज्ञानान्तरायं कर्म विलयं व्रजिष्यति ?'। स्वामिनोक्तम्—'शुक्लपञ्चम्याराधनया'। ततस्तयाऽऽराधिता, ज्ञानान्तरायं कर्म विलयं गतम् ।

ततस्तत्स्थानतोऽपि विचरन् प्रभुः पुनः पुनर्द्वारावत्यां समवासरत् । तत्रैकदा स्वामिनि स्थितेऽकस्माद् वृष्टिरभूत् । रथनेमिर्गोचर्यां भ्रान्त्वा स्वामिसमीपे चचाल, तया च वृष्ट्याऽतीव विद्रुत एकां गुहां प्रविवेश । तस्मिन्नवसरे राजीमत्यपि साध्वी प्रभुं प्रणम्य न्यवर्तत । तत्सहचर्यः साध्व्यो वृष्टिभीताः सर्वा अपि विदुद्रुवुः, परं राजीमती तु अजानती तामेव गुहां प्रविवेश । पूर्वप्रविष्टं रथनेमिं तमोवशाद् अपश्यन्ती सा ऊर्ध्वस्थिता वस्त्राण्युद्वापयितुममुञ्चत् । रथनेमिस्तां वस्त्ररहितां प्रेक्ष्य कामपीडितोऽवदत्—'हे सुन्दरि ! मया त्वं पूर्वमपि प्रार्थिताऽभूः, साम्प्रतं सम्भोगावसरोऽस्ति' । तत्स्वरतो रथनेमिं ज्ञात्वा शीघ्रं गोपिताऽङ्गोपाङ्गा सा बभाषे—"ईदृक् कुलजन्मनां कदाचिन्न युज्यते । त्वं प्रभोः सर्वज्ञस्य लघुभ्राता शिष्यश्चाऽसि, तत्तवेयं लोकद्वितयविरोधिनी का बुद्धिः ?। अहं सर्वज्ञशिष्या भूत्वा तव वाञ्छितं न पूरयिष्ये, अनया हि वाञ्छयाऽपि त्वं भवसमुद्रे पतिष्यसि । शास्त्रमध्ये ईदृशं कथितमस्ति—'चैत्यद्रव्यविनाशे साध्वीशीलभङ्गे ऋषिघाते जिनशासनोड्डाहे च सम्यक्त्ववृक्षस्य मूले वह्निर्दत्तः' । वरं ज्वलिते वह्नावपि

प्रविशन्ति, परम् अगन्धकुले जाता नागा न हि वान्तं विषं भोक्तुमिच्छन्ति । रे अयशस्कामिन् ! त्वां धिगस्तु, यस्त्वं जीवितकारणतो वान्तं पातुमिच्छसि, ततः कारणात् तव खलु मरणमेव कल्याणम् । अहमुग्रसेननृपपुत्री, त्वं च समुद्रविजयनृपपुत्रो, गन्धनकुलनागसदृशौ मा भूव, निभृतश्चारित्रं निर्मलं चर । यदि त्वं मन्मथपीडितो नारीं वाञ्छसि तदा वाताहतो वृक्ष इवाऽस्थिरात्मा भावी" । एवं तया प्रतिबोधितः सोऽपि पुनः पुनः पश्चात्तापतत्परः सर्वां भोगेच्छां विमुच्य तीव्रं व्रतं पालयामास । तच्च दुश्चरित्रं प्रभोरग्रे आलोच्य स शुद्धमतिः संवत्सरं यावच्छद्मस्थः स्थित्वा केवलज्ञानमाससाद ।

भव्यकमलरविः प्रभुरन्यत्र विहृत्याऽन्यदा पुनः श्रीगिरिनारपर्वते सहस्राम्रवणे समवसृतः । केशवः पालक-शाम्बादीन् पुत्रान् जगाद–'भो भोः ! प्रभाते यः प्रथमं नाथं वन्दिष्यते तस्मै वाञ्छितं तुरङ्गमं दास्ये' । तन्निशम्य शाम्बकुमारः प्रातःकाले शय्यातः समुत्थाय गृहेऽपि तिष्ठन् अतीव भावेन श्रीनेमिनाथमवन्दत । पालकस्तु महत्यां रात्रावुत्थाय वरतुरङ्गेण गत्वाऽभव्यत्वाद् हृदये आक्रोशन् प्रभुं द्रव्यवन्दनेनाऽवन्दत । ततः पालकेन दर्पकहयं याचितो हरिरभापत—'अहं तस्मै हयं दास्ये यं स्वामी प्रथमं वन्दकं कथयिष्यति' । ततस्तत्कालं गत्वा 'प्रथमं यूयं केन वन्दिताः ?' इति केशवेन पृष्टः सन् प्रभुरकथयत्–'अहं पालकेन द्रव्यात् शाम्बेन च भावतः प्रथमं वन्दितः' । 'किमेतद् ?' इति पुनरपि कृष्णेन पृष्टः प्रभुः कथयामास–'एष पालकोऽभव्यः, जाम्बवतीसुतः शाम्बस्तु भव्यो धर्मात्माऽस्ति' ।

तं पालकं भावविहीनपुत्र-मकर्षयत् कंसरिपुः क्रुधार्तः ।
अश्वं यथायाचितमर्पयित्वा—ऽकरोन्महामण्डलिकं च शाम्बम् ॥ १ ॥

॥ इति पण्डितश्रीकनकविजयगणिचरणपङ्कजभ्रमरसदृश-श्रीगुणविजयगणिविरचिते श्रीमदरिष्टनेमिचरित्रे सुललितगद्यबन्धे समुद्रापसरण-द्रौपदीप्रत्याहरण-गजसुकुमालढण्ढणकुमारादिचरित्रवर्णन-सुरपरीक्षण-समग्ररोगक्षयङ्करीभेरीसमर्पण-समुद्रविजयनृपाद्यनेकपुरुषशिवादेवीराजीमतीप्रभृतिबहुस्त्रीसर्वव्रतादान-मौनैकादशीज्ञानपञ्चमीपर्वप्रकाशन-पालककर्षण-शाम्बकुमारमहामण्डलिकमहीपतिपदारोपणो नाम एकादशः परिच्छेदः ॥ ११ ॥

## ॥ अथ द्वादशः परिच्छेदः ॥

अन्यदा विनीतात्मा केशवः श्रीनेमिनाथं नमस्कृत्य देशनान्ते विहिताञ्जलिरिति पप्रच्छ-"हे प्रभो ! द्वारकाया यदूनां मम च क्षयः कथं भविष्यति ?, किं कुतोऽपि कारणाद्, अन्यकृतः, अथवा स्वयं काल-

वशेन ?" । ततो भगवानुवाच–"शौर्यपुरस्य बहिराश्रमे पराशर इत्यभिधानेन तापसमुख्यचारी अभूत्। स यमुनाद्वीपे गतः काञ्चिद् नीचकुलां कन्यकां सिषेवे, तयोश्च द्वैपायननामा पुत्रोऽभवत् । स ब्रह्मचारी परिव्राजको यदुभिः सह मैत्रीभावाद् अत्र निवसन् मद्यान्धीभूतैः शाम्बाद्यैर्निहनिष्यते । ततः क्रुद्धः स द्वारावतीं यदुभिः सह ज्वालयिष्यति, स्वभ्रातुर्जराकुमाराच्च तव मरणं भावि" । ततः सर्वैरपि यदुभिः 'अरे ! एष कुलाङ्गारक' इत्यन्तःकरणे कलुषाशयैः स जराकुमारो ददृशे । अथ स जराकुमारो 'वसुदेवस्य सुतो भूत्वाऽपि किमहं भ्रातृघातकः ? तत्सर्वथाऽन्यथा विधातुं प्रयत्नं करोमि' इति चिन्तयन् उत्थाय नेमिनं च नत्वा तूणीरयुग्मधारी कोदण्डी केशवरक्षार्थं वनवासमाशिश्राय । स द्वैपायनोऽपि लोकश्रुत्या तत्प्रभुवचः श्रुत्वा द्वारकाया यदूनां च रक्षार्थं वनवासी अभवत् । कृष्णोऽपि स्वामिनं प्रणम्य चिन्तातुरो द्वारकापुरीं समागात्, मद्यमूलो नूनमनर्थः स्यादिति हेतोर्मद्यं च निवारितवान् । केशवाज्ञया समीपवर्तिगिरिनारपर्वते कदम्बवनमध्ये कादम्बर्यां गुहायां शिलाकुण्डेषु पूर्वकृतानि मद्यानि सर्वे द्वारकालोका गृहनिर्धमननीरमिव नीत्वा नीत्वा चिक्षिपुः ।

अथ बलदेवं सारथिर्बान्धवः सिद्धार्थो बभाषे–'अस्या नगर्या यदुकुलस्य चेदृशां दुर्दशां कथं द्रक्ष्यामि ?, तस्माद् मां विसृज यथाऽहं स्वामिसमीपेऽधुनैव व्रतं गृह्णामि, अहं हि कालक्षेपं न सहे' । ततोऽश्रूणि मुञ्चन् बलदेवोऽप्यूचे–'हे भ्रातः ! इदं युक्तं वदसि, अनघ ! विस्रष्टुमसमर्थेनाऽपि मया विसृष्टोऽसि । परं

तपस्तप्त्वा मृत्युं प्राप्तः सन् देवगतौ गत इमं भ्रातृस्नेहं स्मरन् विपद्गतं मां सम्बोधयेः' । ततः सिद्धार्थ 'भाम्' इत्युक्त्वा स्वामिसमीपे प्राव्राजीत्, षण्मासी यावच्च दुस्तपं तपस्तप्त्वा मृत्वा च देवलोकमगात् ।

इतश्च या मदिरा जनैः पूर्वं शिलाकुण्डेषु क्षिप्ताऽऽसीत् सा नानाविधानेकतरुपुष्पसंपातात् तदा सुस्वाद्वी बभूव । एतस्मिन् समये वैशाखमासे कोऽपि शाम्बकुमारपुरुषोऽटंस्तत्र ययौ, पिपासया च तां सुरां दृष्ट्वा पपौ । ततो मुदितः सन् स तया मदिरया दृतिम्[1]आपूर्य शाम्बस्य गृहं ययौ, तच्च प्राभृतं[2]मार्पयत् । तां सामोदां मदिरां प्रेक्ष्य सहर्षः शाम्बः पायं पायं[3]मेवमुवाच—'भो भद्र ! त्वयेयं कुत्र प्राप्ता ?' । सोऽपि तत्रस्थां तामाख्यत् । ततः शाम्बो द्वितीयदिने दुर्दान्तैः कुमारैः सह कादम्बरीगुहां ययौ । कादम्बरीगुहायोगतः कादम्बरीनाम्नी तां सुरां तृषितो निम्नगामिव प्रेक्ष्य मुमुदे । ततः पुष्पिततरुवनान्तरे बद्धापानः[4] शाम्बो भृत्यैस्तां सुरामानाय्य मित्र-भ्रातृ-भ्रातृव्यसंयुतः पपौ । चिरात्प्राप्ताम् अतिजीर्णां सद्रव्यैः संस्कृतां चेति तां मदिरां पिबन्तस्ते तृप्तिं न प्रापुः । अथ मद्यपानान्धास्ते कुमाराः क्रीडन्तोऽग्रे तं पर्वतमाश्रितं ध्यानस्थितं द्वैपायनर्षिं ददृशुः । तदा शाम्बः स्वकीयानित्थं बभाषे—'अयं मे नगरी कुलं च हन्ता, तदेष हन्यताम्, हतो हि कथं हनिष्यति !' । ततस्ते कुपिताः सर्वेऽपि पाषाणैः पादप्रहारैश्चपेटाभिर्मुष्टिघातैश्च पुनः पुनस्तम् आजघ्नुः । तं पृथ्वीपीठे पातितं मृतप्रायं च कृत्वा ते द्वारकां ययुः, स्वस्वे-

१ जलपात्रम् 'मसक' इति भाषायाम् । २ उपायनम् । ३ पीत्वा पीत्वा । ४ बद्धम् आपान—मद्यपानस्थानं येन सः ।

श्मसु च विविशुः । तच्च कृष्णश्चरैरज्ञासीत्, ज्ञात्वा च मनसि विषादवानेवं दध्यौ–'अहो! अमीषां कुमाराणां कुलान्तकृद् दुर्दान्तता !' । ततो द्वैपायनसमीपे सरामोऽपि केशवो ययौ, तत्र च क्रोधरक्ताक्षं दृष्टिविषसर्पमिव द्वैपायनमपश्यत् । ततो मत्तहस्तिनं महामात्र इव महाभयङ्करं तं त्रिदण्डिनं सान्त्वयितुं कृष्ण आरेभे–'भो भोस्तापसमुख्य ! क्रोध एव महावैरी, यो हि जीवानां केवलमत्रैव दुःखं न ददाति किन्तु जन्मलक्षेष्वपि दुःखं ददाति । मम पुत्रैरज्ञानैर्मद्यपानान्धीभूतैर्योऽपराधः कृतस्तं भो महर्षे ! सहस्व, तवाऽमर्षो न युज्यते' । इति केशवेनोच्यमानोऽपि स त्रिदण्डिको नाऽशाम्यत्, इति चोचे–'हे कृष्ण ! भवतः सामवचनैः सृतम् !, भवत्पुत्रैस्ताड्यमानेन मया सलोकां द्वारावतीं दग्धुं निदानं कृतम्, अत्र युवां विना कस्यापि न मोक्षः' । अथ रामः केशवं न्यषेधत्–'बान्धव ! मुधैवेमं परिव्राजकं माऽनुनय, एषोऽधमसुकुटमणिरस्ति । वक्रचरण-कर-नासिकाः स्थूलोष्ठ–दन्त-नासिका विलक्षणलोचना हीनाङ्गोपाङ्गाश्च पुरुषाः कदाचिदपि शान्तिं न प्राप्नुवन्ति । तद् हे भ्रातः ! अस्मिन् सुकुमालवचनेपूक्तेष्वपि भाविवस्तुनो नाशो न भविष्यति, सर्वज्ञभाषितं हि अन्यथा न कदापि स्यात्' । ततः शोकसन्तप्तः केशवः स्वगृहे ययौ, द्वैपायननिदानं च द्वारकायां प्रकटीभूतम् । द्वितीयदिवसे नगर्यां पटहमदापयत् । पटहमध्ये ईदृशं ज्ञापितं यद्–'भो भो जनाः ! अतः परं भवन्तो विशेषतो धर्मकरणतत्परा भवन्तु' । ततः सर्वेऽपि लोकास्तथा कर्तुमारेभिरे । अथ भगवानपि रैवतकगिरौ समवासार्षीत् । तत्र गत्वा वन्दित्वा च कृष्णो जगन्म-

हामोहनिद्रान्धकारक्षयकरणतरणिप्रभां देशनां शुश्राव । तां धर्मदेशनां श्रुत्वा प्रद्युम्न-शाम्ब-निषधो-ल्मुक-सारणप्रभृतयः केऽपि यदुकुमाराः प्राव्रजन्, सत्यभामा-रुक्मिणी-जाम्बवत्यादयश्च बह्व्यो यादवयोषितो भवोद्विग्नाः स्वामिसमीपे दीक्षां जगृहुः । अथ कृष्णपृष्टो भगवानिदमाचख्यौ—'द्वैपायनो द्वादशे वर्षे इमां द्वारकां ज्वालयिष्यति' । तदा केशवो दध्यौ—'ते समुद्रविजयादयो धन्या येऽग्रेऽपि व्रतधरा बभूवुः, राज्यलुब्धं दीक्षारहितं मां धिग् धिक्' । तदाशयं ज्ञात्वा प्रभुर्जगाद—'हे केशव ! कदापि वासुदेवाः प्रव्रज्यां नोऽगृह्णन्, न गृह्णन्ति, न च ग्रहीष्यन्ति, यतस्ते हि निदानेन विहितवज्रार्गला अवश्यमधस्ताद् यान्ति । त्वं हि तृतीयनरकपृथ्वी वालुकाप्रभां गामी' । तन्निशम्य केशवस्तत्कालं नितान्तविधुरो बभूव । पुनरपि सर्वज्ञो जगाद—"हरे ! मा विषादं कुरुष्व, यतस्तत उद्धृत्य त्वं मनुष्यो भविष्यसि, ततो मृत्वा वैमानिकदेवो भावी, ततश्च उत्सर्पिणीकाले आगते सति वैताढ्यपर्वतपार्श्वे पुढानाम्नि जनपदे गङ्गाद्वारनगरे जितशत्रुनृपस्य पुत्रो द्वादशजिनोऽममनामा त्वं भावी । बलदेवस्तु ब्रह्मदेवलोके गामी, ततश्च्युत्वा मनुष्यो भविष्यति, ततोऽपि देवगतौ गमिष्यति, ततश्च्युतः सन् सोऽत्र भरतक्षेत्रे पुरुषो भावी, हे केशव ! तवाऽममाभिधानस्य तीर्थङ्करस्य तीर्थे स मोक्षं यास्यति" । इत्युक्त्वा जगन्नायकः श्रीनेमिर्विहरन्नन्यत्र ययौ, केशवोऽपि तीर्थङ्करपदप्राप्तिश्रवणेन हृष्टस्तं नत्वा द्वारिकां जगाम । हरिः पुर्यां पुनस्तथैव घोषणामकारयत्, लोकश्च सर्वोऽपि विशेषेण धर्मरतो बभूव ।

अथ द्वैपायनो मृत्वाऽग्निकुमारेषूदपद्यत । स पूर्ववैरं सस्मार, द्वारकां चाजगाम; परं तत्र सर्वलोकं चतुर्थ-षष्ठा-ऽष्टमादितपोरतं देवपूजाप्रसक्तं च सोऽसुरोऽपश्यत् । ततो धर्मप्रभावाद् उपद्रवं कर्तुमसमर्थश्छिद्राण्यन्वेषयन् स दुष्टमतिरेकादश वर्षाण्यस्थात् । अथ द्वादशे वर्षे प्राप्ते लोका दध्युर्यद्—'अनेन तपसा द्वैपायनो भ्रष्टो जितश्चेति सुखं रमामहे' । ततस्ते स्वेच्छया रन्तुं प्रवृत्ताः, मद्यपानसहितं च मांसं खादितुं लग्नाः, तदा छिद्रान्वेषी द्वैपायनोऽवकाशं लेभे । ततो द्वारावत्यां कल्पान्तकालोत्पातसदृशा यममन्दिरदर्शिन उत्पाताः प्रादुरासन्, उल्कापाता निपेतुः, निर्घाता अभवन्, पृथिवी अकम्पत, ग्रहा धूमकेतोरप्यधिकं धूमं मुमुचुः, सच्छिद्रं सूर्यमण्डलमङ्गारवृष्टिमकरोत्, अकस्माच्च चन्द्र-सूर्ययोर्ग्रहणमभूत्, गृहेषु लेप्यमयाः पुत्रिका अट्टाट्टहासं चक्रुः, चित्रालिखितदेवा उद्भ्रूका जहसुः, तस्यां पुर्यां जम्बुकप्रमुखाः श्वापदाः संचेरुः, स च द्वैपायनासुरः शाकिनी-भूत-वेताल-प्रेतादिभिः परिवृतो बभ्राम । तथा पौरलोकाः स्वप्नेषु स्वं रक्तवस्त्रविलेपनं पङ्कमग्नं तथा दक्षिणाभिमुखं कृष्यमाणमपश्यन् । बलदेव-वासुदेवयोर्हल-चक्रादिकरत्नानि प्रणेशुः । ततो द्वैपायनासुरः संवर्तकं वातं विचक्रे, स सर्वतोऽपि तृण-काष्ठादिकं पुर्यामाजहार, लोकांश्च दिशो दिशं प्रणश्यतोऽप्यानीय आनीय पुर्यां न्यक्षिपत्, तेन वातेन अष्टाभ्योऽपि दिग्भ्यः प्रोन्मूलितवृक्षेण सर्वाऽपि द्वारका तृण-काष्ठादिभिरपूर्यत । ततः षष्टिं कुलकोटीर्बाह्या द्वासप्ततिं च कुलकोटीर्मध्यगताः संपिण्ड्य द्वारकायां सोऽसुरो वह्निमदीपयत् । कल्पान्तकालवातोद्धतवह्निरिव नीरन्ध्रैर्धूमसमूहैर्जगदप्यन्ध-

कारयन् सोऽग्निर्धगद्धगिति जज्वाल । पदमपि गन्तुमसमर्थाः सबालवृद्धास्ते पौरलोकाः परस्परं निगडिता इव पिण्डीभूयाऽवतस्थिरे । तदा रामयुक्तो गोविन्दो वसुदेवं देवकीं रोहिणीं च प्रदीपनादाकृष्टुं रथे आरोपयत्, परं तत्र मान्त्रिकेण स्तम्भिताः पन्नगा इव तेनाऽसुरेण स्तम्भितास्तुरङ्गा वृषभाश्च पदमपि न चेलुः । ततो वासुदेव-बलदेवौ स्वयं तं रथमाचकृषतुः, परं तत्कालं तस्य रथस्य अक्षयुग्मं काण्डवत् तडत्तडिति भग्नम् । तथापि तौ 'हा राम ! हा केशव! रक्ष रक्ष' इति वसुदेवादीनामक्रन्दैर्दीनमानसौ तं रथं स्वसामर्थ्याद् नगरीद्वारे निन्यतुः, तदैव सोऽसुरो द्वारं कपाटाभ्यां शीघ्रमेव व्यधात् । रामश्चरणपार्ष्णिप्रहारेण तौ कपाटौ मृत्कपालवद् अभाङ्क्षीत्, तथापि भुवा ग्रस्त इव स रथो न निरगात् । अथ स द्वैपायनदेवो राम-केशवौ प्रत्यवदत्–'भो भो ! एष युवयोः कीदृशो मोहः ?, अहो ! प्रागपि युवयोर्मया कथितं यद् युवां विनाऽत्र कस्यचिदपि न मोक्षः, यतो मया हि तपो विक्रीतम्' । ततस्तौ प्रति पितरोऽवोचन्–"हे वत्सौ ! युवां गच्छतम्, युवाभ्यां जीवद्भ्यां ननु सर्वेऽपि यदवो जीवन्त्येव । अस्माकं कृते युवाभ्यां पौरुषायत्तं कृतं, परं बलीयसी पुनरेषा दुर्लङ्घनीया भवितव्यता । भाग्यरहितैरस्माभिः श्रीनेमिनाथसमीपे दीक्षा न गृहीता, अद्य तु स्वकर्मणां फलमनुभविष्यामः" । इत्युक्तेऽपि यदा बलभद्र-केशवौ नाऽगच्छतां तदा वसुदेवो देवकी रोहिणी चैवं कथयामासुः–"अतः परमस्माकं त्रिजगद्गुरुः श्रीनेमिनाथः शरणम् । वयं साम्प्रतं चतुर्विधाहारस्य प्रत्याख्यानम् अकुर्महि । अर्हन्तः सिद्धाः साधवः अर्हद्भाषितो

धर्मश्च, एषां चतुर्णां शरणेच्छवो वयं शरणं प्रपन्नाः स्मः । न वयं कस्यचिद्, न चाऽस्मदीयः कोऽपि" । इति स्वयं कृताराधनास्ते नमस्कारतत्परास्तस्थुः । अथ तेष्वपि द्वैपायनासुरो मेघवद् वह्निं ववर्ष, मृत्वा च वसुदेवाद्यास्त्रयः स्वर्गं ययुः ।

ततो महादुःखातुरौ राम-केशवौ पुर्या बहिर्जीर्णोद्याने जग्मतुः, तत्र च स्थितौ स्वपुरीं दह्यमानां द्वावप्यपश्यताम् । माणिक्यभित्तयः पाषाणखण्डवत् चूर्णसादभवन्, गोशीर्षचन्दनस्य मनोज्ञस्तम्भाः पलालवद् भस्मसादभवन्, प्राकारकपिशीर्षाणि तडत्तडिति शब्दायमानानि तुत्रुटुः, गृहाणां तलानि फडत्फडिति अत्यन्तं पुस्फुटुः । समुद्रे जलानामिव तत्र ज्वालानामन्तरं नो बभूव, कल्पान्तकाले एकसागरमिव सर्वमेकाऽनलमभवत् । वह्निर्ज्वालाहस्तैर्ननर्तेव, शब्दैर्जगर्जेव, धूममिषाच्च धीवर इव पौरमत्स्येषु आनायमानयत्[1] ।

अथ रामं प्रति हरिरूचे–'धिग्धिग् नपुंसक इव साम्प्रतमहं तटस्थः स्वपुरीं दह्यमानां पश्यामि । यथा पुरीं रक्षितुमहं न समर्थस्तथा द्रष्टुमपि नोऽलम्, अत आर्य[2] ! ब्रूहि, आवां क्व गच्छावः ?, सर्वमावयोर्विरुद्धं विद्यते' । तदा बलभद्रो बभाषे–'अस्माकं सुहृदः सम्बन्धिनो भ्रातरश्च पाण्डुपुत्रा वर्तन्ते, ततस्तद्गृहं यावः' । कृष्णोऽपि जगाद–'तदानीं ते मया देशरहिताः कृताः, तद्गृहे स्वकृताऽपकारेण लज्जितौ आवां

१ आनायम्—जालम् । २ बलभद्रम् ।

कथं यास्यावः ?'। तदा रामो बभाषे—'सन्तो हि सदा मनस्युपकारं दधति, परं कुस्वप्नमिव कदापि नाऽपकारं स्मरन्ति। अनेकप्रकारेण सत्कृतास्ते पाण्डुतनयाः कृतज्ञाः सन्ति, आवयोरवश्यं पूजां करिष्यन्ति, अतो बान्धव! अन्यथा मा विमृश'। इति रामेण प्रोक्तः केशवः पाण्डवपुरीं पाण्डुमथुरामुद्दिश्य पूर्वदक्षिणां प्रति प्राचलत्।

इतश्च नगर्यां ज्वलन्त्यां चरमशरीरी रामपुत्रः कुब्जवारको गृहोपरि चटितः सन् ऊर्ध्वबाहुरिदमवदत्—'साम्प्रतमहं श्रीनेमिनाथस्य शिष्योऽस्मि, पूर्वं स्वामिना चरमशरीरी शिवंगमी चाऽऽख्यातोऽस्मि। यदि जिनाज्ञा प्रमाणं तदहमग्निना किं दह्ये ?'। इति कथिते जृम्भकदेवास्तमुत्पाट्य स्वामिसमीपे निन्युः। तदा हि श्रीनेमिः पल्लवदेशे समवासरत्, तत्र च पुण्यात्मा कुब्जवारकः प्राव्रजत्। पूर्वम् अप्रव्रजिता याः राम-केशवादिस्त्रियस्तास्तु नेमिं स्मरन्त्यः कृताऽनशना विपेदिरे। षष्टिर्द्वासप्ततिश्च कुलकोटयो दग्धाः। एवं षण्मासीं यावत् सा नगरी ज्वलिता, ततश्च समुद्रेण प्लाविता।

इतश्च गोविन्दो मार्गे गच्छन् क्रमेण हस्तिकल्पं पुरं प्राप्तः सन् क्षुधापीडां रामाय कथयामास। ततस्तं बलभद्रो बभाषे—'हे भ्रातः! त्वत्कृते भक्तहेतवे अहमत्र पुरे यामि, त्वमत्राऽप्रमत्तस्तिष्ठेः। यद्यत्र मम कुतोऽपि कष्टं भविष्यति तदाऽहं सिंहनादं करिष्यामि, तं श्रुत्वा त्वमागच्छेः'। इत्युक्त्वा तत्पुरे रामः प्राविशत्। पुरलोकैः 'देवताकारभृत् कोऽयम् ?' इत्याश्चर्यतो विलोकितः। ततो 'द्वारकाऽनलेन दग्धा,

तस्या निर्गत्याऽयं राम आगतः' इति विमर्शजा वार्ता लोके बभूव । रामो मुद्रिकया कान्दुकगृहाद् विविधं भोज्यं कटकेन च शौण्डिकाद् मदिरां जग्राह । तद्गृहीत्वा बलभद्रो यावत् प्रतोलीसन्निधौ आगच्छत् तावत्तं दृष्ट्वा विस्मिता आरक्षा नृपपार्श्वे ययुः । तस्मिंश्च पुरे धृतराष्ट्रपुत्रोऽच्छदन्ताभिधः कृष्णसेवकैः पाण्डवैः पूर्वं हतशेषीकृतो नृपतिरभवत् । तदा च तमारक्षा एवमूचुः—'हे स्वामिन् ! त्वत्पुरे कोऽपि पुमान् महार्घ्ये कटक-मुद्रिके दत्त्वा चौरवत् साम्प्रतं मद्य-भोजने आदत्त, मूर्त्या च रामस्य सदृशोऽधुनैव बहिर्गच्छन्नस्ति, स चौरो वा बलदेवो वाऽस्तु, अतः परमस्माकं कथकानां नाऽपराधः' । इति निशम्य स्वरिपुपक्षपातकारिणं तं बलभद्रं हन्तुं सोऽच्छदन्तनृपस्तत्कालं सकटकः समागात्, गोपुरस्य कपाटयुगलं च प्रदत्तार्गलमकारयत् । बलदेवोऽपि भक्त-पाने विमुच्य, गजस्तम्भं चोन्मूल्य कृतसिंहनादः सर्वं तद्रिपुसैन्यं निहन्तुं लग्नः । सिंहनादमाकर्ण्य केशवोऽपि धावितः, पादपार्ष्णिप्रहाराच्च प्रतोलीकपाटौ भङ्क्त्वा समुद्रे वडवानल इव तत्पुरं प्राविक्षत्, तदर्गलां चैव गृहीत्वा हरिस्तान् बहुशः परसैन्यान् जघान । ततो वशवर्तिनमच्छदन्तमित्युवाच—"अधुनाऽप्यावयोर्भुजाबलं न क्वाऽप्यगात्, पुरुषशरीरमलप्राया लक्ष्मीर्गता तदापि किं जातम् !, ततो रे रे नृपाधम ! त्वया किं कृतम्? । अथाऽस्मत्प्रसादात् स्वं राज्यं निर्भृतं

१ विचाराज्जाता । २ शौण्डिको मद्यविक्रेता ।

चिरं भुङ्क्ष्व, सापराधोऽपि त्वमस्माभिर्मुक्तोऽसि"। इत्युक्त्वा तं चरणयोः पतितं मुक्त्वा पुराद्बहिरुद्याने गत्वा तौ बुभुजाते।

ततो दक्षिणदिशां प्रति प्रस्थितौ कौशाम्बवनमाजग्मतुः। तत्र च मद्यपानात् सलवणाऽशनाद् उष्णकालवशात् परिश्रान्तत्वात् शोकाद् अथवा किं बहुना? पुण्यक्षयाच्च केशवस्य तीव्रतृषा लग्ना। अथ बलभद्रं हरिरूचे–'भ्रातः! तृषया तालु शुष्यति, तेन वृक्षच्छायाभ्यासेऽप्यत्र वने गन्तुमहं न समर्थः'। बलभद्रो जगाद–'बान्धव! पानीयार्थं यास्यामि, परमत्र तरुतले विश्राम्यन्नप्रमत्तस्तिष्ठेः'। तदा जानूपरि पादं न्यस्य स्वं च पीतेन वस्त्रेण प्रच्छाद्य मार्गतरुतले हरिः सुप्तः, निद्रां च प्राप। जलार्थं गच्छन् रामः पुनरप्यवदत्–'हे प्राणवल्लभ! यावदहं जलमानयामि तावत्त्वं क्षणमप्रमत्तो भवेः'। तत उन्मुखीभूय पुनरपि बलदेवो बभाषे—'हे वनदेवताः! मम लघुभ्राता गुणवृद्धो युष्माकं शरणेऽस्ति, अतोऽयं विश्ववल्लभो युष्माभिरेव त्रातव्यः'। इत्युक्त्वा स पानीयानयनहेतवेऽगच्छत्। तदा च तत्र धनुर्भृद् व्याघ्रत्वग्वस्त्रो लम्बकूर्चो व्याधो जराकुमारः कर्मणाऽऽकृष्ट आजगाम। आखेटकेन तत्र भ्रमन् स तथास्थितं कृष्णमपश्यत्, मृगबुद्ध्या च पादतले तीक्ष्णबाणेन जघान। तदा केशवो वेगादुत्थाय जगाद–'अरे! अहमपराधं विना छलाद् अनाभाष्य केन पादतले शरेण विद्धः?। अहं हि क्वचिदपि अज्ञातज्ञाति-नामकं हतपूर्वी न, तद् भवानपि निजं गोत्रमभिधानं चाख्यातु'। ततः वृक्षान्तरस्थितः सोऽपि चकितः सन्नूचे–"यदुवंश-

मुद्रचन्द्रमसो वसुदेवनृपस्य जराराज्ञीकुक्षिसम्भवोऽहं जराकुमारनामा राम-केशवयोर्वृद्धभ्राताऽस्मि। श्रीनेमिनो वचनं श्रुत्वा कृष्णरक्षार्थमत्राऽऽगाम्, अद्येह स्थाने वसतो मम द्वादश वर्षाण्यभूवन्, परमत्र कदाप्यहं मानुषं नाऽद्राक्षं, त्वं च भो ! एवं ब्रवीषि, ततः कोऽसि ?"। अथ कृष्णोऽवोचत्–"हे पुरुषव्याघ्र ! एहि एहि, अहं स एव तव भ्राता कृष्णोऽस्मि यस्यार्थे त्वं वनवासभूः। हे बान्धव ! तव द्वादश वर्षाणि प्रयासो वृथा जज्ञे, यथा पान्थजनस्य दिग्मोहेन दूरोल्लङ्घितमार्गस्य चलनं मुधैव जायते"। तच्छ्रुत्वा 'किमत्राऽयं कृष्णः !' इति जल्पन् जराकुमारस्तत्र शीघ्रमगात्, कृष्णं च प्रेक्ष्य मूर्च्छया पृथिव्यामपतत्। कथमपि प्राप्तसंज्ञः सन् स करुणस्वरं रुदन् हरिं पप्रच्छ–'हा हा भ्रातः ! किमेतत् ?, किं चेह तवागमनम् ?, किं द्वारावती दग्धा ?, किं यदूनां क्षयोऽभवत् ?, सा हि नेमिवाणी तवाऽनयाऽवस्थया सर्वा सत्या जाता दृश्यते'। तदा कृष्णोऽपि सर्वं वृत्तान्तमुवाच। जराकुमारः पुनरप्यतीव रुदन्नित्यूचे–"हा ! मयाऽत्रागतस्य भ्रातुरुचितं कृतम् !। दुर्दशामग्नं लघुभ्रातरं भ्रातृवात्सल्यकरं त्वां निहन्तुर्मम नरकपृथिव्यामपि क्व स्थानं भावि !। तव रक्षणबुद्ध्याऽहं किल वनवासमशिश्रियम्, परं न जाने यद् विधात्रा तव पुरतो यमसदृशोऽहमत्रापि स्थाने स्थापितः। हे पृथ्वि ! विवरं देहि येनाऽहमनेनैव शरीरेण अद्य तां नरकपृथ्वीं गच्छामि। अतः परमत्र स्थानं नरकादप्यधिकं दुःखदायि, यतो मम सर्वदुःखाधिकतरं भ्रातृहत्यादुःखमुपस्थितम्। अहं वसुदेवस्य पुत्रस्तव च भ्राता कथमभवम् !, अथवा मनुष्योऽपि कथमभवं यो हि

ईदृशं कर्माऽकार्षम् । श्रीनेमिवचनं श्रुत्वा तदैवाऽहं कथं न मृतः ? । हे हरे ! त्वयि सति मयि च जनमात्रे मृते किं न्यूनं स्यात् ?" । ततो गोविन्दो जगाद—"हे भ्रातः ! तव शोकेन पर्याप्तम्, न त्वया न च मया वा भवितव्यता उल्लङ्घ्यते । यदुभ्योऽवशिष्टस्त्वमेक एव, तच्चिरं जीव । अधुना त्वं त्वरितं याहि याहि, अन्यथा रामो मद्वधक्रोधेन त्वां हनिष्यति । मम कौस्तुभरत्नमभिज्ञानं गृहीत्वा पाण्डवपार्श्वे व्रज, तत्र समस्तं वृत्तान्तं कथयेः, ते तव सहाया भविष्यन्ति । तथा त्वया किञ्चिद्विपरीतैः पादैरपसार्य यथा पादानुसारी रामस्त्वां शीघ्रं न प्राप्नुयात् । पूर्वमैश्वर्यसंयुक्तेन मयका प्रेषणादिभिः क्लेशितान् पाण्डवान् अपरांश्च सर्वान् मद्वचनेन क्षमयेः" । एवं पुनः पुनः कृष्णेनोक्तः स जराकुमारो गृहीतकौस्तुभः कृष्णपादाद् बाणं कृष्ट्वा जगाम ।

अथ तस्मिन् गते पादवेदनार्तो गोविन्द उत्तराभिमुखः प्राञ्जलिश्चैवं वक्तुं लग्नः—'अर्हद्भ्यः सिद्धेभ्य आचार्येभ्य उपाध्यायेभ्यः साधुभ्यश्च मम त्रिधा नमोऽस्तु । भगवते विश्वस्वामिनेऽरिष्टनेमिने नमो भवतु यो जिनेन्द्रोऽस्मदादीन् पापिनस्त्यक्त्वा स्वयं पृथिव्यां तीर्थं प्रावर्तयत्' । इत्युक्त्वा तृणसंस्तारके स्थित्वा जानूपरि पादं न्यस्य वस्त्रेण च प्रावृत्य केशवः पुनरप्यचिन्तयत्—"स भगवान् नेमिनाथो धन्यः, ते वरदत्तादयो गणधरा धन्याः, प्रद्युम्न-शाम्ब-प्रमुखाः कुमारा धन्याः, ताश्च सत्यभामा-रुक्मिण्याद्या मम स्त्रियो धन्या, ये हि संसारवासनिबन्धनं गृहवासं परित्यज्य परिवव्रजुः, एतं मां तु प्राप्तविडम्बनं धिग् धिक्" ।

एवं विभावयतस्तस्याऽङ्गानि सर्वतो बभञ्जुः, यमभ्रातेव प्रबलो वातश्चुकोप । अथ तृषा-शोक-वायु-घात-पीडितः कृष्णस्तत्कालं भ्रश्यद्विवेकः पुनरप्येवमचिन्तयत्—'अहं पूर्वं कैरपि कदापि जन्मतो नृसुरैरपि नो पराभूतः, सोऽहं द्वैपायनेनाऽसुरेण प्रथमं कीदृशीं दशां नीतः ! । इयत्यपि गते यदि तं पश्यामि तत् स्वयं समुत्थायाऽन्तं नयामि, स ममाग्रे कियान् ?, तं च रक्षितुं कः समर्थः स्यात् ?' । इति क्षणं रौद्रध्यानमासाद्य सहस्रवर्षपरिपूरितायुष्को हरिर्मृत्वा निकाचितकर्मभिः पूर्वमुपार्जितां तृतीयनरकपृथिवीं प्राप । कुमारावस्थायां षोडश[१६] वर्षाणि, षट्पञ्चाशद्[५६] वर्षाणि मण्डलिकपदे, अष्ट[८] वर्षाणि दिग्विजये, विंशत्यधिकानि च नवशतानि[९२०] वर्षाणि वासुदेवपदे, एवं केशवस्य सहस्रवर्षायुःप्रमाणं ज्ञातव्यम् ।

योऽत्राऽममो वै भविताऽभिधानात्, तीर्थङ्करोऽनागततीर्थपङ्क्त्याम् ।
तस्मै सुराधीशनताय नित्यं, वैकुण्ठजीवाय नमो ममाऽस्तु ॥ १ ॥

॥ इति पण्डितश्रीकनकविजयगणिचरणपङ्कजभ्रमरसदृश—श्रीगुणविजयगणिविरचिते श्रीमदरिष्टनेमिचरिते सुललितगद्यबन्धे द्वैपायनतापसोत्पत्तिप्रख्यापन—प्रद्युम्नशाम्बप्रमुखपुरुषसत्यभामादिस्त्रीप्रव्रज्याप्रतिपादन—द्वारकानगरीदहन—कृष्णावसानकीर्तनो नाम द्वादशः परिच्छेदः ॥ १२ ॥

## ॥ अथ त्रयोदशः परिच्छेदः ॥

अथ वलभद्रः कमलपत्रपुटेन पानीयमानीयाऽपशकुनैः स्खलयमानः शीघ्रं केशवसमीपमाययौ । तदा 'असौ सुखं सुप्तोऽस्ति' इति बुद्ध्वा स क्षणं तस्थौ, परं केशवकाये मक्षिका दृष्ट्वा तन्मुखाद् वस्त्रमक्षिपत्, चरणे च प्रहारं ददर्श । ततो वलभद्रो भ्रातरं मृतं ज्ञात्वा छेदितमूलतरुरिव तत्कालं मूर्च्छया भूपीठे पपात । कथञ्चिल्लब्धचेतनः सन् स सिंहनादं चक्रे, तेन च सर्वेऽपि श्वापदास्त्रेसुर्वनं च चकम्पे । ततः स राम इत्युवाच—'अत्र सुखसुप्तो मम लघुवान्धवो विश्वैकवीरो येन महापापेन जघ्ने स स्वं शंसतु । यदि नूनं स सत्यसुभटस्तदा मम समक्षीभवतु, सुप्त-प्रमत्त-वालक-ऋषि-स्त्रीषु कः प्रहरेत् ?' । इत्युच्चैःशब्दमाक्रोशन् रामस्तद्वनं वभ्राम । पुनः केशवमुपेयाय, तं चालिङ्ग्याऽतीव करुणस्वरं रुरोद । "हा भ्रातः । वसुन्धरावीर ! हा मदुत्सङ्गलालित ! हा वर्पकनिष्ठगुणज्येष्ठ ! विश्वैकश्रेष्ठ ! हे मम हृदयकमलभानो ! त्वं क्व तिष्ठसि ? । हे कृष्ण ! 'भवन्तं विनाऽहं स्थातुं न समर्थोऽस्मि' इति त्वं पुराऽवदः, परं साम्प्रतं तु स्वकीयं वचोऽपि नो दत्से, केशव ! सा तव प्रीतिः क्व गता ? । अथवा पूर्वं मया किञ्चित् तवाऽपराधः कृतो भावी तेन त्वं मौनमालम्बितो भविष्यसि, परं मम किमपि न स्मरति, त्वं हि जलनिधिगम्भीरोऽसि,

सर्वं ममाऽपराधं सहस्व। अथवा यो मे जलानयने विलम्बो जातस्तेन कारणेन रुषितोऽसि, अहं स्वीकरोमि स्थाने रुषितोऽसि, तथापि हे वीराधिवीर ! उत्तिष्ठ, सूर्योऽस्तं गच्छति, एष महात्मनां शयनावसरो न"। एवं प्रलपन् रामस्तां रजनीमतीयाय। प्रातःकालेऽपि 'हे भ्रातः ! त्वं स्थानके रुषितोऽसि, अथ उत्तिष्ठ उत्तिष्ठ, ममोपरि प्रसादं कुरु कुरु' एवं पुनः पुनरवोचत्। अथ तम् अनुत्तिष्ठन्तं मोहमोहितो राम उत्थाय स्वस्कन्धे आरोप्य गिरिगह्वरवनादिष्वभ्राम्यत्। भ्रातृस्नेहविमोहितो वलः कृष्णकायं वहन् पुष्पादिभिश्च निरन्तरं पूजयन् षण्मासानतिक्रमयामास।

एवं तत्रैव रामे पर्यटति सति वर्षाकाल आजगाम, तदा च देवभावं प्राप्तः स सिद्धार्थोऽवधिज्ञानेन ददर्श। अचिन्तयच्च–'अहो ! भ्रातृवत्सलो मम भ्राता मृतं केशवं वहन्नस्ति, तदेनं प्रतिबोधयामि। एष माम् अर्थितपूर्वा[1] यद्–अहमापदि प्रतिबोधनीयः'। इति ध्यात्वा स पर्वतादुत्तरन्तं पाषाणमयं रथं विचक्रे, विषमात् पर्वतादुत्तीर्य स रथः समे स्थानेऽभज्यत। ततस्तं रथं कौटुम्बिकरूपः स देवः सन्धातुमुपचक्रमे, तदा तं वलभद्र उवाच–'रे मुग्ध ! रथं सन्धातुं किं वाञ्छसि यो हि विषमातपर्वतादुत्तीर्य समे स्थाने खण्डशोऽभवत् ?'। देवोऽप्यूचे–'युद्धसहस्रेष्वहतो यः सम्प्रति युद्धं विनाऽपि मृतो यदा हि जीवेत् तदा मम रथोऽपि सज्जः स्यात्'। अथ स देवः पाषाणे पद्मिनीरारोपयितुं लग्नः, तदा रामो जगाद–

१ अर्थितः—प्रार्थितः पूर्वं येन सः।

'रे रे ! किं पाषाणे कमलिनीवनं प्ररोहति ?'। देवः प्रत्युवाच–यद्ययं तव लघुभ्राता मृतो जीविष्यति तदैताः कमलिन्योऽपि रोक्ष्यन्ति !'। पुनः किञ्चिदग्रतो भूत्वा स देवो दग्धवृक्षमसिञ्चत्, तदा रामो जगाद–'किं दग्धतरुः सिक्तोऽपि वन्ध्यावत् प्ररोहति ?'। देवोऽपि तं प्रतिबभाषे–'यदा तव स्कन्धस्थितं शवं जीविष्यति तदाऽयमपि प्ररोक्ष्यति !'। पुनरपि स देवो यन्त्रं निकुर्व्य वालुकां पीलयितुं लग्नः, रामेणोक्तम्–'किम् अस्याः मध्यात्तैलं निःसरिष्यति ?'। तेन कथितम्–'यदि तव मृतो बान्धवो जीविष्यति तदाऽस्या मध्यादपि तैलोपलब्ध्या मम वाञ्छा सम्पूर्णा भाविनी !'। पुनः स देवोऽग्रे गोपरूपो भूत्वा गोशवमुखेषु जीवद्गोमुखेष्विव नवीनां दूर्वां प्रक्षेप्तुमारेभे, तद्दृष्ट्वा बलभद्रो जगाद–'रे मूढमानस ! अस्थिभूता इमा गावः कदापि किमपि भक्षयन्ति ?'। तदा सुरो बभाषे–'यदा तव भ्राता सजीवो भावी तदैता गावोऽपि तृणानि चरिष्यन्ति !'। अथ रामो मनस्येवं विममर्श–'किं सत्यं मम भ्राता मृतो यद् एवमेकवाक्यतयैते पृथक् पृथग् वदन्ति !'। स देवोऽपि तच्चिन्तितं विज्ञाय तत्कालं पुरतः सिद्धार्थरूपभृद् भूत्वाऽवदत्–"एषोऽहं तव सिद्धार्थः सारथिरस्मि। तदाऽहं प्रव्रजितो विपद्य देवत्वं प्राप्तस्त्वां प्रतिबोधयितुमत्राऽऽगाम्, यतस्त्वया हि पूर्वं प्रार्थितोऽस्मि। श्रीनेमिना नूनं कृष्णस्य मरणं जराकुमारहस्तेन प्रोक्तं तत्तथैव जज्ञे, सर्वज्ञभाषितं किमन्यथा भवेत् ?। केशवेन निजकौस्तुभरत्नमभिज्ञानेऽर्पयित्वा जराकुमारः पाण्डवपार्श्वे प्रेषितोऽगात्"। तन्निशम्य बलभद्रः सत्यं मन्यमान उवाच–'हे देवोत्तम ! अहं त्वया साधु प्रति-

वोधितः, परमधुना भ्रातृमरणदुःखसमुद्रमग्नः किं करोमि ?' ! तदा सिद्धार्थो जगाद–'अतः परं श्रीनेमिभ्रातुर्विवेकिनश्च तव दीक्षां विनाऽन्यन्न युज्यते' । ततः स वलदेव 'आम्' इत्युक्त्वा तेन देवेन सहितः सिन्धुसङ्गमे कृष्णकायस्य चन्दनादिकाष्ठैः संस्कारं चक्रे । दीक्षां ग्रहीतुमिच्छुं रामं ज्ञात्वा कृपालुश्चद्वितीयः श्रीनेमिजिनोऽपि विद्याधरर्षिं शीघ्रं प्रेषितवान् । तत्समीपे रामः प्राव्रजत्, तुङ्गिकपर्वतशिखरे च स्थित्वा तीव्रं तपोऽकरोत्, सिद्धार्थश्च निरन्तरं रक्षपालो बभूव ।

अन्यदा स रामराजर्षिर्मासपारणके क्वापि नगरे प्रविशन् कयापि कूपकण्ठस्थया सवालकया स्त्रियाऽदर्शि । तद्रूपाधिक्यालोकनव्यग्रमानसया तया घटस्थाने पुत्रकण्ठे रज्जुरवध्यत । सा यावत्तं कूपे प्रक्षेप्तुं लग्ना तावद् वलभद्रमुनिनैक्ष्यत । चिन्तितं च–'इदमनर्थकृद् मदीयं रूपं धिग् धिक् । अतः परमहं ग्रामनगरादिषु न प्रवेक्ष्यामि, किन्तु वने काष्ठादिहारिपुरुषेभ्यः प्रासया भिक्षया पारणं करिष्यामि' । अथ तां स्त्रियं प्रतिवोध्य तदैव वलभद्रमुनिर्वने जगाम, मासिकादिकं च दुस्तपं तपस्तेपे । पारणे तृण-काष्ठादिहारिपुरुषैरानीतं तैश्च दत्तं प्रासुकं भक्त–पानादि गृहीत्वा स मुनिराहरत् । अथ ते तृण-काष्ठादिहारका गत्वा स्वस्वनृपाणामाचख्युर्यत्–'कोऽपि सुररूपः पुमान् वने तपस्तप्यमानोऽस्ति' । तन्निशम्य ते आशङ्कां चक्रिरे–'किमस्मद्राज्यवाञ्छयाऽसौ ईदृशं तपः करोति ?, किं वा मन्त्रं साधयति ?, ततो गत्वेमं मारयामः' । इत्यालोच्य ते समकालं सर्वसैन्येन राममुनेः समीपे आजग्मुः । ततश्च तस्य सदैव सान्निध्यकारी

स सिद्धार्थो देवो जगद्भयङ्करान् अनेकशः सिंहान् विचक्रे । तदा ते राजानश्चकितास्तं साधुपुङ्गवं प्रणम्य स्वापराधं च क्षमयित्वा ययुः, तत्प्रभृति बलभद्रो 'नरसिंह' इति विख्यातनामा बभूव । अथ तत्र वने तपस्यतस्तस्य प्रधानधर्मदेशनया व्याघ्र-सिंहादयो बहवो जीवा वासिता अतीवोपशमरसं ययुः । तेषु केऽपि श्रावका जाताः, केऽपि भद्रका जाताः, केऽपि कायोत्सर्गं चक्रिरे, तथा केऽप्यनशनं व्यधुः । ते च मांसाशनान्निवृत्ता राममहामुनेस्तिर्यग्रूपधारिणः शिष्या इव पारिपार्श्विका बभूवुः ।

अथैको रामपूर्वभवसम्बद्धो जातिस्मरणीयोऽतिसंवेगं प्राप्तः कोऽपि मृगः सदैव सहचरोऽभूत् । रामर्षिमुपास्योपास्य स हरिणो वने बभ्राम, अन्नसहितांश्च काष्ठ–तृणादिहारकान् गवेषयामास । यदा च तानपश्यत्तदैवागत्य ध्यानस्थं रामर्षिं मस्तकेन पादे पर्यस्यन् भिक्षादायकानजिज्ञपत् । रामर्षिरपि तदुपरोधेन ध्यानं क्षणादपि विहाय अग्रगामिना तेन मृगेण तत्र भिक्षायै निरगात्। अन्यदा तस्मिन् वनखण्डे सुन्दरकाष्ठकृते रथकारका आययुः, सारान् सरलान् बहून् वृक्षांश्च चिच्छिदुः । स मृगो भ्रमंस्तान् प्रेक्ष्य तत्कालं रामर्षिमजिज्ञपत्, स महामुनिरपि तस्योपरोधतो ध्यानमपारयत् । ततस्तेषु रथकारकेषु भोक्तुमुपविष्टेषु पुरोगामिना तेन मृगेण मासपारणे तत्र रामर्षिरायथौ । अथ रथकारवृद्धो रामं प्रेक्ष्य प्रीतः सन्निति चिन्तयामास–'अहो ! अत्र महारण्येऽपि कोऽपि जङ्गमकल्पद्रुम इवैष साधुः मया प्राप्तः । अहो अस्य रूपम् !, अहो तरणितुल्यं तेजः !, अहो कोऽपि महानुपशमः !, अनेनाऽतिथिना मुनिनाऽहं हि सर्वथा

कृतार्थोऽस्मि'। एवं विचिन्त्य पञ्चाङ्गप्रणामेन स्पृष्टभूपीठो रथकारो नत्वा बलभद्रसाधवेऽन्न-पानान्युपानयत्। तदा रामर्षिर्दध्यौ—'एष कोऽपि शुद्धमतिः श्रावकः स्वर्गफलं कर्म समुपार्जितुं मह्यं भिक्षां दातुं समुद्यतोऽस्ति, यद्येनां भिक्षां न गृह्णामि तदैतस्य सद्गतेर्नूनमहमन्तरायकारकः स्याम्, तेन कारणेन इममाहारं गृह्णामि'। एवं विमृश्य स करुणारसक्षीरसमुद्रो रामर्षिः स्वकीयशरीरनिरपेक्षोऽपि तस्मादाहारमाददे। सोऽपि मृग ऊर्ध्वमुखोऽश्रुपातपानीयप्लावितनयनयुगलो मुनिं रथकारं च पश्यन्निदं चिन्तयितुं लग्नः—'अहो! कृपानिधिरेष महामुनिः स्वशरीरेऽपि निरपेक्षस्तपसामेकस्थानं रथकारायाऽनुग्रहं कृतवान्। अहो! अयं रथकारो धन्यः, अस्याऽवतारश्च महाफलो, येनाऽयं भगवानेवमन्नपानादिभिः प्रतिलाभितः। अहं पुनर्महामन्दभाग्यस्तपः कर्तुमसमर्थः प्रतिलाभयितुमपि तथैवाऽस्मि, तेन कारणेन तिर्यग्भवदूषितं मां धिगस्तु'। एवं त्रयोऽपि ते मुनि-रथकार-मृगा यावद्धर्मध्यानतत्पराः स्थितास्तावद् महावायुहतोऽर्धच्छिन्नवृक्षस्तत्कालं पपात। तदा ते त्रयोऽपि तेन पतितेन वृक्षेण हता मृताः, ब्रह्मलोके च पद्मोत्तरनाम्नि विमाने सुरा अभूवन्। षष्टिमासक्षपण-षष्टिपक्षक्षपण-चतुश्चातुर्मासिकप्रभृति दुस्तपं तपस्तप्त्वा, शतवर्षाणि व्रतं प्रपाल्य, द्वादशशतवर्षाण्यायुः सम्पूर्णीकृत्य पञ्चमदेवलोके गतः सन् स बलभद्रदेवोऽवधिज्ञानेन तृतीयनरके स्थितं भ्रातरमपश्यत्। ततो भ्रातृमोहमोहितो रामो वैक्रियशरीरं विधाय गोविन्दसमीपेऽगात्, तं च परमप्रीत्याऽऽलिङ्ग्येति जगाद—'अहं रामस्तव वृद्धबान्धवस्त्वां त्रातुं ब्रह्मलोकादत्रागतोऽस्मि,

तत्कथय, तुभ्यं प्रीतये किं करोमि ?'। इत्युक्त्वा स कृष्णं करेणोद्दध्रे, परं स करात् शीर्त्वा शीर्त्वा पारदवद् भूमौ पपात, पुनरपि च मिमेल। प्रथममालिङ्गनात् तदनन्तरं पूर्वभवकथनात् ततश्चोद्धरणाद् ज्ञातो रामः केशवेनाऽतिसम्भ्रमत उत्थाय नमस्कृतः। अथ तं बलभद्रो जगाद–'हे भ्रातः ! श्रीनेमिना तदा विषयसम्भवं सुखं दुःखान्तं प्रोक्तं तत्तव सम्प्रति प्रत्यक्षीभूतम्। कर्मनियन्त्रितं त्वां देवलोके नेतुं नाऽहं समर्थः, तद् हे हरे ! तव मनःप्रीतिहेतवेऽहं तव समीपे तिष्ठामि'। ततो गोविन्दोऽप्युवाच—"हे भ्रातः ! त्वयाऽत्र तिष्ठताऽपि किं जायते ?। त्वयि सत्यपि इदं पूर्वोपार्जितं नरकायुरवश्यं मयैव भोक्तव्यम्। नरकादपि ममाधिकं दुःखं तद् बभूव यद् अनया ममाऽवस्थया रिपूणां हर्षो मित्राणां च विषादोऽभवत्। तत्त्वं भरतक्षेत्रे गच्छ, चक्र-शार्ङ्गधनुः-शङ्ख-गदाधारिणं पीतवस्त्रं गरुडध्वजं च मां विमानस्थितं सर्वेषां दर्शय, तथा नीलवस्त्रं तालध्वजं हल-मुसलशस्त्रधरं विमानस्थितं च स्वं सर्वत्र पदे पदे दर्शयेः, यथा हि 'महाबलिनौ राम–केशवौ अविनश्वरौ स्वेच्छाविहारिणौ' इति पूर्वतिरस्कारबाधकः प्रघोषो लोके स्यात्"। इति निशम्य तथा च प्रतिपद्य रामो भरतक्षेत्रे आजगाम, ते च द्वे रूपे तथैव कृत्वा सर्वत्र दर्शयामास, एवं चोचे–"भो भो लोका! आवयोः प्रतिमाः सुन्दराः कृत्वा सर्वोत्कृष्टदेवबुद्ध्या यूयमादरत, पूजयत, यतो वयमेव सृष्टि-स्थिति-संहारकर्तारः, वयं देवलोकादिहागताः, स्वेच्छया च देवलोकं यामः, द्वारावत्यस्माभिर्निर्मिता, गन्तुमिच्छुभिरस्माभिरेव च संहृता, कर्ता हर्ता च नाऽपरोऽस्ति, स्वर्गदायिनो

वयमेव स्मः"। एवं तस्य वाण्या सर्वे लोका ग्राम-नगरादिषु राम-केशवयोः प्रतिमाः कृत्वा कृत्वा पूजयामासुः, स सुरः प्रतिमापूजकनराणां महान्तमुदयं ददौ, तेन कारणेन सर्वेऽपि लोकास्तद्भक्ता बभूवुः। एवं स रामसुरो भ्रातृवचनं भरतक्षेत्रेऽनुष्ठाय भ्रातृदुःखदुर्मना: पुनर्ब्रह्मदेवलोकेऽगात्।

इतश्च स जराकुमारः पाण्डवानुपास्थितः कौस्तुभमर्पयन् द्वारावतीदाहादिकं कथयामास। तन्निशम्य शोकनिमग्नास्ते संवत्सरावधि रुदन्तः केशवस्य मृतकार्याणि बान्धवा इव विशेषतश्चक्रुः। तान् प्रविव्रजिषून् विज्ञाय श्रीनेमिः पञ्चशतमुनियुतं चतुर्ज्ञानधरं धर्मघोषमुनिं प्राहिणोत्। ते पाण्डवा अपि अत्यन्तं संविग्नाः स्वे राज्ये जराकुमारं न्यस्य द्रौपद्यादिसहितास्तत्साधुपार्श्वे दीक्षां जगृहुः, साभिग्रहं च तपश्चक्रिरे। 'अहं कुन्ताग्रेण प्रदत्तम् उञ्छं[1] ग्रहीष्यामि' इत्यभिग्रहं भीमसेनो जग्राह, स च तस्य षड्भिर्मासैः सम्पूर्णो बभूव। अधीतद्वादशाङ्गिनस्ते[2] तु पृथिव्यां विहरन्तः क्रमेण नेमिनं नन्तुमुत्कण्ठिताः प्रचेलुः।

इतश्च मध्यदेशादौ विहृत्य श्रीनेमिः प्रभुरुदीच्यां राजगृहादिषु पुरेषु व्यहरत्। ततो ह्रीमति पर्वते गत्वाऽनेकेषु म्लेच्छदेशेषु विहरन् परमेश्वरो नृप-प्रधानप्रभृतीननेकान् प्रत्यबोधयत्। स्वामी आर्या-ऽनार्येषु देशेषु विहृत्य पुनरपि ह्रीमत्पर्वतेऽगात्। ततो जगन्मोहहर्ता श्रीनेमिः किरातदेशेषु व्यहार्षीत्। ह्रीमत्पर्वतादुत्तीर्य स्वामी दक्षिणापथे भव्यकमलवनखण्डानि सूर्य इव प्रतिबोधयन् विजहे। एवं च केवल-

१ उञ्छं भक्तम् भिक्षाविशेषम्। २ अधीता द्वादशाङ्गी यैस्ते।

ज्ञानोत्पत्तेरारभ्य श्रीनेमिनाथस्य विहारं कुर्वतोऽष्टादशसहस्रसाधवो बभूवुः, सुबुद्धयश्चत्वारिंशत्सहस्रसाध्व्योऽभूवन्, चतुर्दशपूर्वधराणां चतुःशतानि, अवधिज्ञानिनां पञ्चदशशतानि, वैक्रियलब्धिमतां केवलज्ञानिनां च पञ्चदशशतानि, मनःपर्यवज्ञानवताम् एकं सहस्रं, वादिनामष्टौ शतानि, श्रावकाणाम् एकलक्षनवषष्टिसहस्राणि, श्राविकाणां त्रीणि लक्षाणि एकोनचत्वारिंशत्सहस्राणि च । एवं चतुर्विधपरिवारपरिवृतः सुरा-ऽसुर-नरेशसंयुक्तः प्रभुर्निजनिर्वाणावसरं ज्ञात्वा गिरिनारपर्वते ययौ । तत्र सुरपतिभिर्विरचिते समवसरणे स्वामी विश्वानुकम्पया पर्यन्तदेशनां ददौ, तया देशनया तत्र प्रतिबुद्धाः केचित् प्रवव्रजुः, केचित् श्रावका जाताः, अन्ये च भद्रका बभूवुः । ततः स्वामी पञ्चशतैः षट्त्रिंशैश्च साधुभिः सार्धं मासिकं पादपोपगमनमनशनं चक्रे । आषाढसिताऽष्टमीदिने चित्रानक्षत्रसंस्थिते शशिनि उत्तमं शैलेशीध्यानमास्थितः श्रीनेमिनाथस्तैर्मुनिभिः सह सन्ध्यायां निर्वाणं प्राप ।

प्रद्युम्न-शाम्बादयः कुमाराः, कृष्णस्याऽग्रमहिष्योऽष्टौ , भगवद्भ्रातरः, अन्येऽपि भूयांसः साधवो, राजीमत्याद्याः साध्व्यश्च परमपदं ययुः । चतुःशतवर्षाणि गृहे, संवत्सरं छद्मस्थः, पञ्चशतवर्षाणि च केवली, इति रथनेमिन आयुर्ज्ञेयम् । कौमारावस्था-छद्मस्थावस्था-केवलज्ञानावस्थाविभागाद् ईदृगायुःस्थिती राजीमत्यपि आसीत् । शिवादेवी-समुद्रविजयौ माहेन्द्रदेवलोकमीयतुः । अन्येऽपि दशार्हा महर्द्धिका देवा जाताः । कुमारावस्थायां त्रिशतवर्षाणि, छद्मस्थावस्थायां केवलावस्थायां च सप्तशतवर्षाणि, एवं श्रीने-

मिस्वामी सहस्रवर्षायुर्बभूव । श्रीनमिनाथनिर्वाणात् पञ्चलक्षवर्षेष्वतिक्रान्तेषु द्वाविंशतीर्थङ्करस्य श्रीनेमिनाथस्य निर्वाणमभवत् ।

अथ सौधर्मेन्द्राज्ञया धनदः शिबिकां विचक्रे । ततः शक्रो विधिवत् प्रभोरङ्गं पूजयित्वा स्वयं तत्र स्थापयामास । देवा नैर्ऋत्यां दिशि नानाविधरत्नशिलातलोपरि गोशीर्षचन्दनप्रायैरिन्धनैश्चितां चक्रुः । तत्र सौधर्मेन्द्रः स्वामिनः शिबिकामुत्पाट्य आनिन्ये, चितायां च प्रभोः शरीरं चिक्षेप । अथ शक्रादेशेन अग्निकुमाराश्रितायां वह्निं ददुः, तं च वायुकुमाराः शीघ्रं ज्वालयामासुः । ततः क्षीरसमुद्रजलैर्मेघकुमाराः कालवह्निं निरवापयन् । प्रभोर्दंष्ट्राः शक्रेशानादिसुरपतयो जगृहुः, अन्यदेवाः शेषाण्यस्थीनि, तद्देव्यः कुसुमानि, राजानो वस्त्राणि, लोकाश्च श्रीनेमिनो भस्माऽगृह्णन् । तत्र स्वामिशरीरसंस्कारवैडूर्यशिलातले शक्रः स्वामिनो लक्षणानि अभिधानं च वज्रेणाऽलेखीत् । तत्र शिलायां शक्रः श्रीनेमिनाथप्रतिमासहितं ध्वजपताकाकलितं महामनोहररत्नमयम् अत्युच्चैश्चैत्यं चक्रे । एवं कृत्वा सौधर्मेन्द्रादयो वासवाः स्वं स्वं स्थानं जग्मुः ।

इतश्च पाण्डवास्तदा हस्तिकल्पपुरेऽभूवन् । 'अस्मात्स्थानात् स गिरिनारगिरिर्द्वादश योजनानि वर्तते, तत् प्रातःकाले श्रीनेमिनं वन्दित्वा वयं मासिकतपःपारणं करिष्यामः' इति परस्परं प्रीत्या वदन्तस्ते तस्मिन् हस्तिकल्पपुरे लोकमुखादिति शुश्रुवुः—'श्रीनेमिस्वामी तैस्तैः साधुभिः परिवृतो मोक्षमगात्' ।

तच्छ्रुत्वा ते पञ्च पाण्डवा अतीव शोकातुरा महावैराग्यवन्तः श्रीविमलाचलमीयुः, तत्र च मासिकमनशनं कृत्वा उत्पन्नकेवलज्ञानाः शिवपदमगुः। सा द्रौपदी तु ब्रह्मलोकमगमत्।

द्वाविंशस्तीर्थनाथो निखिलनरनतो नम्रनाकीन्द्रचन्द्रः,
श्रीकान्तः[1] सीरपाणिर्[2] मगधपतिरथो[3] तद्रिपुर्[4] दुःक्षमौजाः।
ग्रन्थेऽस्मिन् कीर्तितास्ते विशदगुणप्रसिद्धाश्च चत्वार एते,
रेखायुक्ता नरेषु क्षितितलविदिता भूरिकीर्तेर्निधानम्॥ १॥

इत्थं श्रीमदरिष्टनेमिचरितं प्राज्यप्रमोदप्रदं,
विस्तीर्णं नवभिर्भवैः सुललितं सद्गद्यबन्धान्वितम्।
कंसारिर्[5] मगधाधिपो बलं[6] इमे विश्वम्भरावल्लभा—
स्तेषां सत्कथया च मञ्जुलमिदं कर्णे श्रुतं शङ्करम्[7]॥ १॥

---

१ कृष्णः। २ वलभद्रः। ३ जरासन्धः। ४ तयोः कृष्ण वलदेवयोः शत्रुः। ५ कृष्ण। ६ वलभद्रः। ७ सुखकरम्।

॥ इति राजाधिराजश्रीमदकब्बरसाहिक्षोणिपतिप्रदत्ताऽतिमान–मर्दितानेकवादीन्द्राभिमान–सिद्धिसौधसोपानसमान–स्वकीयवचननिर्जिताऽमृतपान–सकलभट्टाकभामिनीभालभूषणायमान–भट्टारकश्री ५–श्रीविजयसेनसूरीश्वरशिष्यपण्डितपीयूषपायिपरम्परापुरन्दर–पण्डितश्रीकनकविजयगणिचरणपङ्कजभ्रमरसदृश-श्रीगुणविजयगणिविरचिते श्रीमदरिष्टनेमिचरिते सुललितगद्यबन्धे नीरानयन–सिद्धार्थदेवदृष्टान्तदर्शनबलदेवप्रतिबोधन–कृष्णाङ्गसंस्करण–बलदेवदीक्षादरण-पञ्चमदेवलोकव्रजन–श्रीनेमिनाथपञ्चपाण्डवनिर्वाणवर्णनो नाम त्रयोदशः

परिच्छेदः ॥ १३ ॥

# प्रशस्तिः

श्रीवीरपट्टाम्बुजसप्तसप्तिर्यस्याऽभवद् ज्ञानकणैकवसिः ।
स्वामी सुधर्मेत्यभिधानधारी, यः पञ्चमोऽभूद् भुवि गच्छधारी ॥ १ ॥
तत्पट्टपङ्क्त्यागतसूरिसिंहः, सूरिर्जगच्चन्द्र इति प्रतीतः ।
अकारि येन प्रवरक्रियाया, उद्धार आधारतरो मुनीनाम् ॥ २ ॥
शैर-द्विर्पा-ऽम्बका-ऽहीशमिताब्दे १२८५ तपसोऽद्भुतात् । अलभद् यस्तपानाम, विरुदं विदितं भुवि ॥३॥
जातेषु जगतीशेषु, ततो भूरिषु सूरिषु । आनन्दविमलाह्वाना, अभूवन् सूरयः क्रमात् ॥ ४ ॥
ये चक्रुः सत्क्रियोद्धारं, सत्साधूनां सुखावहम् । तपागणतरुव्रातघनाघनसहोदराः ॥ ५ ॥
तत्पट्टे गुणगेहं, निर्जितनिजरूपनिर्जराधीशाः । भूविख्याता जाताः, सूरिश्रीविजयदानाह्वाः ॥ ६ ॥
तत्पट्टविष्णुपदपूषनिभो नितान्तं, पापान्धकारनिवहं हि निराचकार ।
यो म्लेच्छभूपतिमकब्बरनामधेयं, जन्तौ कृपापरमति कृतवान् स हीरः ॥ ७ ॥
तत्पट्टे राजन्ते, भट्टारकविजयसेनसूरीन्द्राः । साहिश्रीमदकब्बरपर्षदि ये लब्धजयवादाः ॥ ८ ॥
श्रीविजयदेवसूरिप्रभृतिव्रतिराजिराजिता नित्यम् । भविकजभानुसदक्षा, जीयासुर्जगति ते गुरवः ॥ ९ ॥

१ सप्तसप्तिः सूर्यः ।

तच्छिष्यनाकिनाथाः, कनकविजयकोविदा बुधाधीशाः। स्वकवाचां सरसतया, निर्जितवृन्दारकाहाराः१०
तत्पादपङ्केरुहराजहंसो, ज्ञेयो गुणादिर्विजयो गणी यः। श्रीवाचकोत्तंसविवेकहर्षप्रसादतो लब्धविशुद्धविद्यः॥
श्रीहेमचन्द्रगुरुणा, रचितचरितानुसारतस्तेन। अतिसुगमं हितबुद्ध्या, विहितमिदं गद्यबन्धेन॥१२॥ युग्मम्।
श्रीमत्सुराष्ट्रदेशे, सुरपत्तननिकटवर्तिनि द्रङ्गे। वेलाकूले रब्धं, तत्रैव कृतं च सम्पूर्णम् ॥ १३ ॥
संवत् पोडश[16]-रस[6]-वसु[8]वर्षेऽथाषाढमासि पञ्चम्याम्। कर्तुं मण्डितमेतत्, पूर्णं चाऽभून्नभःपष्ठ्याम् ॥ १४ ॥
न व्याकरणं वेद्मि, प्रमाण-साहित्य-गणितशास्त्राणि। बालकचापल्यमिदं, क्षन्तव्यं धीधनैर्विज्ञैः ॥ १५ ॥
यत्किञ्चिज्जानामि, प्रकटमहं मूर्खकोटिकोटीरः। तन्माहात्म्यं सुगुरोराम्रपिकन्यायतो नूनम् ॥ १६ ॥
यदसम्मतमानीतं, मोहान्मयकाऽत्र कूटमथवा च। तत्सर्वं संशोध्यं, कृपया मात्सर्यमुक्तबुधैः ॥ १७ ॥
गणिजीतविजयकानां, प्रार्थनया विरचितं मया चैव। तैरेव लिखितमेतत्, प्रथमादर्शे स्वकृत्याय ॥ १८ ॥
किमिदं गद्यं विरचितमित्युक्त्वा केनचिच्च नो निन्द्यम्। येन स्वल्पमतीनामतिसुगमं दुर्गमे नेयत् ॥१९॥
श्लोकाः पञ्च सहस्राः, शतद्वयी-द्विप-बाणसंयुक्ताः५२८५। ग्रन्थाग्रं गणयित्वा, मयका प्रोक्तं यथाभूतम् २०
यावन्मेरुगिरिर्दिशां च करिणो यावच्च सप्ताब्धयो, यावच्चन्द्र-रवि-ग्रहाश्च सकला यावच्च सर्वंसहा।
यावद्धर्ममहानरेन्द्रनिचितं राज्यं च यावज्जगत्, जीयात्तावदिदं मनोज्ञचरितं ज्ञैर्वाच्यमानं सदा ॥ २१ ॥

॥ इति प्रशस्तिः ॥

॥१७०॥